

( वेदान्त )

# विषयवाक्यदीपिका ।

( श्रीरङ्गरामानुजमुनिप्रणीता )

श्रीवृन्दावननिवासि पं० श्रीलक्ष्मणाचार्येण
टिप्पणीनिवेशनादिना परिष्कृता ।

साच

मुम्बय्यां

खेमराज श्रीकृष्णदास

इत्यनेन

स्वकीये "श्रीवेङ्कटेश्वर" मुद्रणालये-
ऽङ्कयित्वा प्रकाशिता ।

संवत् १९५५ शके १८२०.

# प्रस्तावना ।

ॐ विष्णवेनमः । सुविदितमेतत्तत्रभवतां भवतामखिलप्रमाणपरतंत्रीकृतशेमुषिकाणां विदुषामिहानादिसंसारे परमपुरुषार्थसाधनं वेदान्तशास्त्रजन्यब्रह्मज्ञानमेवेति । तद्बोधयिषया भगवानेवसांगान्सेतिहासपुराणादिकान्वेदान्स्वयमन्यैश्च प्रवर्तयामास । तत्रोपनिषद्भाग एव निःश्रेयसज्ञानवत्तया तस्य च स्वेतरैर्दुर्ग्रहतया स्वयमेव भगवान्वेदव्यासरूपेणावतीर्य तदर्थ निश्चिचीषया षट्पंचाशदुत्तरशता(१५६)धिकरणात्मक षोडशपादच्चतुरध्यायी ग्रन्थेनपंचचत्वारिंशदुत्तरपंचशतीं ब्रह्मसूत्राणां प्रण्यनैषीत् । तेषामपि सूत्राणां परमार्षत्वेन तदर्थस्यानृषिज्ञानागोचरतामवधार्य श्रीवेदव्यासप्रशिष्या भगवान्बोधायन ऋषिः स्वयमृषित्वेन दिव्यज्ञानितया वा पठनपाठन परंपरया ब्रह्मसूत्राणां विशिष्टाद्वैतपरब्रह्मपरतां निश्चित्य तद्व्याख्यान रूपं विशिष्टाद्वैतपरमतीवमहांतं वृत्तिग्रन्थं प्रणिनाय । स च ग्रन्थो महता कालेन बृहत्वात्पठनपाठनलेखनादीनामविषयो भूत्वा व्याडिकृत[1]व्याकरणग्रन्थवदलभ्यतामापातद्ग्रन्थोक्तार्थस्यैव पुनरुद्धाराय महद्भूतपरब्रह्मनिःश्वसितवेदराशेः श्रीमहेश्वरादिद्वारा चतुर्दश सूत्राणिसमधिगम्याष्टाध्याय्यादिपंचपाठीं पाणिनिरिव श्रीमद्बकुलाभरणमुन्युच्चरितद्रविडोपनिषद्दिव्यप्रबन्धराशेस्तदर्चाविग्रहद्वारा चिदचिदीश्वरतत्त्वत्रयार्थान्समधिगम्य न्यायतत्त्वपुरुषनिर्णययोगरहस्यसंज्ञकग्रन्थानां त्रयीं श्रीमन्नाथमुनिः प्रणिनाय । पुनरष्टाध्याय्यर्थवैशद्याय वार्तिकपाठं कात्यायन इव ग्रन्थत्रय्यर्थवैशद्याय स्तोत्ररत्नचतुःश्लोक्यागमप्रामाण्यसिद्धित्रयगीतार्थसंग्रहाख्यग्रन्थपंचकं श्रीमद्यामुनाचार्याः प्रणिन्युः । पुनरपि वार्तिकपाठाद्यर्थवैशद्याय व्याकरणमहाभष्यं पतंजलिरिव ग्रन्थपंचकार्थवैशद्याय ब्रह्मसूत्रव्याख्यानरूपं श्रीभाष्यं मुमुक्षुजनजीवातवः श्रीमद्रामानुजाचार्या अभाषिषत । महाभाष्यार्थवैशद्याय भर्तृहरिकैयटादिकृता व्याख्या इव श्रीभाष्यार्थवैशद्यायापि शारीरकाधिकरणार्थसंग्राहकपद्यन्या सुदर्शनश्रुतप्रकाशिकाश्रुतदीपिकाप्रमेयसंग्रहादिन्यायकुलिशादिभावार्थदीपिकादिग्रन्था अपि पूर्वाचार्यैः । प्रणीताः । यथाहुरधिकरणसारावल्यां शास्त्रावतारे श्रीमद्वेदान्ताचार्याः । "यत्तत्सेनेश्वराद्यैरगणिवकुलभृत्किंकरैरंग्यकारि व्यासार्यैर्न्यासि च द्विःश्रुतमिति विशदं विष्णुचित्तैर्विवव्रे । अश्रौषं शेषकल्यादहमपि विदुषो वादिहंसांबुवाहादद्धा निर्धार्यतेऽतश्चतुरधिकरणीब्रह्मचिंतोद्यमार्थो" इति ॥

तस्मिन्नेतस्मिन्श्रीमति भाष्ये ब्रह्मसूत्रविषयवाक्यत्वेनोपन्यस्तानां श्रुतिवाक्यानामर्थस्य "अविस्तृताः सुगंभीरा रामानुजमुनेर्गिरः" इत्युक्तत्वेनश्रीभाष्यतो दुर्ज्ञेयत्वमवलोक्य तत्सुग्रहत्वाय विषयवाक्यदीपिकानामकंग्रन्थं श्रीरंगरामानुजमुनयः प्रणीतवन्तः एते श्रीमद्रामानुजसंप्रदायांतर्गतसर्वतंत्रस्वतंत्रश्रीमद्वेदान्ताचार्यानुयायिनः । एतैश्च संन्यासाश्रमं स्वीकृत्य दशोपनिषद्भाष्यं श्वेताश्वतरोपनिषद्भाष्यं न्यायसिद्धांजनटीका श्रीवेदांतदेशिककृतोपनिषद्भाष्यटीका विषयवाक्यदीपिकाइत्यादयो ग्रन्था विरचिताः । तदिदानीमहमेतस्य ग्रन्थस्य श्रीभाष्यशांकरभाष्यदशोपनिषद्भाष्याद्यध्येतॄणामतीवोपकारतां विचिन्त्यैतस्यांकने प्रावर्त्तिषि । तां च मे प्रवृत्तिं सफलीकर्त्तुमर्तावार्द्रहृदयेन "यः पुस्तकैः शब्दतत्त्वप्रख्यातया भुवि । खेमराजयद्यस्मात्खेमराजस्ततो मतः ॥ १ ॥ यद्वा खमीम इत्येतैर्ब्रह्मश्रीरंजितैः । उपासनाद्राजते यः खेमराजः स उच्यते ॥ २ ॥" इत्यन्वर्थसंज्ञाधारकेण दासात्मजखेमराजगुप्तेन स्वकीये मोहमय्यां श्रीवेंकटेश्वरमुद्रालयेविक्रमीयभूतहचंद्रमिते वर्षे तपोमासीयकृष्णप्रतिपदि भार्गवदिने इयमङ्किता । ततस्तामिमं वेदांतनिताता एतस्या अवलोकनेन सफलीकुर्वंतु इति प्रार्थयते । श्रीवृन्दावननिवासिलक्ष्मणाचार्यः[2] ।

---

१ महाभाष्यपस्पशाह्निके संग्रहे एतत्परीक्षितमितिप्रतीकमुपादाय संग्रहो व्याडिकृतो लक्षश्लोकात्मको ग्रंथ इति कैयटः ॥

२ लक्ष्मणः श्रीरामानुजः आचार्यो यस्येति बहुव्रीहिः । तेन लक्ष्मणदासेनेतिटिप्पणीवाक्येन सह न विरोधः । ब्राह्मणेष्वपि भगवदादिसम्बन्धिदासांतनामप्रयोगे प्रमाणादिकं तु व्यधिकद्विशततम( २०२ )पृष्ठटिप्पण्यां अवगन्तव्यम् ॥

ॐ

श्रीपरमात्मने नमः ।

# अथ विषयवाक्यदीपिका ।

## ( श्रीरङ्गरामानुजमुनिप्रणीता. )

अतसीगुच्छसच्छायमञ्चितोरस्स्थलं श्रिया ॥
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥ १ ॥
व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान्गुरूनपि ॥
भाष्योदाहृतवेदान्तवाक्यार्थस्संप्रकाश्यते ॥ २ ॥
विस्तृतोपनिषद्भाष्यप्रवेशाक्षमचेतसाम् ॥
अनुग्रहेण साफल्यं कृतिरेषा प्रपत्स्यते ॥ ३ ॥

### जन्माद्यधिकरणम् ।

जन्माद्यस्य यतः १।१।२॥ भृगुवल्ल्यां श्रूयते

भाष्यं चेद्व्यवृणोत्स्वयं यतिपतिर्व्याख्यानवाचां तथा
गाम्भीर्यादनवस्थितिर्मितमतिर्दूरे जनस्तद्गिराम् ।
प्रष्टव्यः कथमीश्वरः स हि न नः प्रत्यक्षरूपो दृशां
तद्भाष्यं सचभाष्यकृत्स च हरिः सम्यक् प्रसीदन्तु नः ॥ १ ॥
लक्ष्मणाचार्यचरणकरुणालब्धबुद्धिना ॥
लघ्वी लक्ष्मणदासेन टिप्पण्यत्र विरच्यते ॥ २ ॥

१ अथ श्रीभाष्योदाहृतविषयवाक्यानि व्याचिख्यासुर्वेदान्तब्रह्मनिष्णातः श्रीरंगरामानुजमुनिर्भाष्यकारस्यापि वेदांतदिव्यज्ञानप्रदानपुरस्सरं वेदार्थसंग्रहश्रीभाष्यादिग्रंथनिर्माणे प्रवर्तयितारं श्रीवेङ्कटाद्रिनिवासिनं श्रीभगवन्तं श्रीनिवासं स्वचिकीर्षितग्रन्थरचनादिसिद्ध्ये स्तुवन्नाशीर्वादात्मकं मङ्गलमाचरति ॥ अतसीत्यादिना । तदुक्तम् ॥ महाभारते शान्तिपर्वणि भीष्मस्तवराजे ॥ अतसीपुष्पसङ्काशं पीतवाससमच्युतम् ॥ ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयमिति । २ अञ्जनाचलत्वं च वेङ्कटाद्रेरेव " कृते वृषाद्रिं वक्ष्यन्ति त्रेतायामञ्जनाचलम् ॥ द्वापरे शेषशैलेति कलौ श्रीवेङ्कटाचलम् " इत्यादिना भविष्योत्तरपुराणादौ प्रसिद्धमेव । ३ अञ्जलेः स्वतोगाहनकर्तृत्वाभावेपि "त्वदङ्घ्रिमुद्दिश्य कदापि केनचिद्यथातथावापि सकृत्कृतोऽञ्जलिः । तदैव मुष्णात्यशुभान्यशेषतः शुभानि पुष्णाति न जातु हीयत" इति श्रीमद्यामुनाचार्यपद्येऽञ्जलेः कर्तृत्वे प्रयोगदर्शनेन तदनुसन्धाने नायंप्रयोगः । ४ अस्यविचित्रचिदचिन्मिश्रस्य व्यवस्थितसुखदुःखोपभोगस्य जगतः जन्मस्थितिलयाः यतःतद्ब्रह्मेति प्रतिपादयति श्रुतिरित्यर्थ इति वेदान्तसारे श्रीभाष्यकाराः सूत्रार्थमनुजगृहिरे ।

"यतो वा इमानि भूतानि जायंते येन जातानि जीवंति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति" ॥

जीवन्ति येनात्मभूतेन जीवंतीत्यर्थः । प्रयन्ति सन्ति भूतानि यदभिसंविशंति, लीयमानाति सन्ति यदभिसंविशन्ति, यत्र लीयंते । समित्येकीकरणे । एकीकृततया प्रवेशः संवेशः ।[1] यद्वा यत्प्रयन्तीति मोक्षः । अभिसंविशन्तीति प्रलयः । अस्मिन्पक्षे यच्छब्दस्यावृत्तिः। यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्तीत्यत्रप्रतिवाक्यं तद्ब्रह्मेत्यनुक्तेः न जगज्जन्मादि प्रत्येकं लक्षणम् । प्रत्येकलक्षणत्वे लक्षणान्तरवैयर्थ्यप्रसंगाच्च । अतस्समुदितमेव लक्षणम्[2] ॥ नच जन्मादिसमुदायस्य लक्षणत्वे व्यावर्त्याभावेन निष्प्रयोजनत्वम् ।लक्ष्याकारविपरीतशंकानिवारणक्षमत्वेन सप्रयोजनत्वात् । उत्पत्तिकारणत्वमात्रेभिहिते हि तस्य स्थितिप्रलयकारणभूतवस्त्वंन्तरशङ्कया जगज्जन्ममात्रकारणस्य ब्रह्मणो निरतिशयं बृहत्त्वं न सिध्येत् । तथा लयकारणत्वानभिधाने प्रलयकारणभूतवस्त्वन्तरशंकया जगज्जन्मस्थितिमात्रकारणस्य ब्रह्मणो निरतिशयं बृहत्त्वं न सिध्येत् । तथा आत्यंतिकलयकारणत्वानभिधाने आत्यन्तिकलयरूपमोक्षप्रदात्रन्तरसद्भावशङ्कयामोक्षप्रदत्वप्राप्यत्वानुगुणगुणैर्बृहत्त्वं न सिध्येत् । अतो जगज्जन्माद्येकैककारणत्वमात्रस्य समस्तवस्तुव्यवच्छेदक्षमत्वेपि

१ ननु "जगज्जन्मस्थितिध्वंसमहानन्दैकहेतवे" इत्यागमप्रामाण्यग्रन्थे "जगदुद्भवस्थितिप्रणाशसंसारविमोचनादयः" इति स्तोत्ररत्नेच श्रीयामुनाचार्यैः, "उद्भवस्थितिप्रलयसंसारनिवर्तनैकहेतुभूत"इति वेदार्थसङ्ग्रहे निखिलजगदुदयविभवलयमहानन्दैककारणमिति श्रीभाष्ये च भगवद्भिर्भाष्यकारैश्च ब्रह्मणः मोक्षंप्रत्यपि पृथक्कारणत्वस्योक्ततयात्र तदकथनान्न्यूनतेत्यरुचेराह ॥ यद्वेति । २ अत्र निर्णयस्त्वधिकरणसारावल्याम् । "तत्तत्स्वप्रत्यनीकव्युदसननियतं भेदकं नान्यबाधि व्याघातः कालभेदान्न भवति जननस्थापनध्वंसनानाम् ॥ प्रत्येकं लक्षणत्वं सुवचमिहबहूदात्हतिर्धीमहिम्ने सम्भूयाप्याहुरेके फलमपि च तदाशङ्कितार्थव्युदासः" इति । अत्र धीमहिम्न इत्युक्तत्वेन नवलक्षणानि भवन्तीति वेदान्तपरिभाषाकारोक्तिरपिनिर्वाह्या ।

जन्मादिकारणसमुदायस्यैव बृहत्त्वातिशयौपयिकत्वात्सृष्टिस्थितिप्रलयसमुदायकारणत्वं लक्षणमिति ज्ञापितम् ॥ यतो येन यदिति यत्तत्तयोगात्कारणमनूद्यतद्ब्रह्मेति कारणस्य ब्रह्मत्वं विधीयते । तेन कारणत्वस्य ब्रह्मलक्षणत्वं सिद्धं भवति ॥ तद्विजिज्ञासस्वेति न विचारस्योपासनस्य वा विधिः । विचारात्मकं ज्ञानं रागप्राप्तत्वान्न विधेयम् । उपासनात्मकस्य तु ज्ञानस्य "ब्रह्मविदाप्नोति" इतिप्राकरणिकवाक्यान्तरसिद्धत्वात् । उपक्रमे "अधीहि भगवो ब्रह्मेति" इति प्रश्नस्य तत्त्वपरत्वेनोपायविषयत्वाभावाच्च नोपासनज्ञानमिह विधेयम् ॥ अतो विजिज्ञासस्वेत्युपदिश्यमानार्थेसावधानत्वार्थं संदेहनिवृत्त्यर्थं वोक्तं या गन्धवती तां पृथिवीं विद्धीतिवत् । अतःकारणत्वस्य ब्रह्मलक्षणत्वमेवास्य वाक्यस्य विधेयम् । "यथा यत्र सारसस्स देवदत्तकेदारः" इत्युक्ते सारससंबन्धस्य देवदत्तकेदारलक्षणत्वमुक्तं स्यात्, तद्वदिति [1]व्यासार्यैरुक्तम् ॥ ननु ईश्वरस्य लिलक्षयिषितत्वे तदसाधारणसार्वज्ञादिप्रतिपादकसत्यज्ञानादिवाक्यानादरेण जन्मादिकारणत्वेन किमर्थं लक्ष्यत इति चेत् । उच्यते ॥ गुणैः स्वरूपस्य लक्ष्यत्वे तदपेक्षया बहिष्ठाया विभूतेरुपास्यान्तर्भावो न प्रतीयते । सर्गादिविषयभूतया तु विभूत्या स्वरूपे लक्ष्यमाणे विभूतेस्सर्गाद्यौपयिकसर्वज्ञत्वादिगुणानामपि जिज्ञास्यान्तर्भावस्सिध्यति । विभूतेश्च जिज्ञास्यान्तर्भावः "[2]उपासात्रैविध्यात् १।१।३१॥" इतिसूत्रसिद्धः॥ नन्वेवमपि कृत्स्नविभूतेर्जिज्ञास्यान्तर्भावो न सिध्यति त्रिपाद्विभूतेर्जन्माद्यस्पृष्टत्वादिति चेत् । न॥ यत्प्रयन्तीति प्रलयवाक्यस्थयच्छब्देन मुक्तप्राप्यस्य ब्रह्मणो विवक्षितत्वात् । नित्यविभूतिविशिष्टस्यैव मुक्तप्राप्यत्वान्नित्यविभूतेरपि जिज्ञास्य-

१ अत्रग्रन्थे सर्वत्रव्यासार्यपदेनश्रुतप्रकाशिकाकाराः श्रीसुदर्शनसूरयउच्यन्ते । यथाहुः पूर्वाचार्याः " श्रुतप्रकाशिकाभिख्यांव्याख्यामाकर्ण्यरङ्गराट् । यंवेदव्यासमपरं जगौस्सदसितं भजे" इति । २"जीवमुख्यप्राणलिङ्गान्नेतिचेन्नोपासात्रैविध्यादाश्रितत्वादिहतद्योगात्" इति सूत्रसिद्ध इत्यर्थः ।

त्वसिद्धिः । एवं च जगज्जन्मादिकारणत्वं लक्षणं विशिष्टनिष्ठं सत्यज्ञानादिलक्षणं तु विशेष्यनिष्ठमिति भिदा । एवमेव व्यासार्यैरुक्तम् । अत्र यत इति पञ्चमी हेत्वर्थिका । यच्छब्दस्यानुवादरूपत्वात् । अनुवादस्यचप्रापकवाक्यसापेक्षतया तद्विरुद्धार्थपरत्वासंभवात् । प्रापकवाक्येषु "एकमेवाद्वितीयम् । तदैक्षत बहुस्यां प्रजायेयेति" "तत्तेजोसृजत" इति निमित्तत्वोपादानत्वयोःप्रतिपादनात्तदनुवादिनि लक्षणवाक्ये यत इति पदमुभयविषयकमिति व्यासार्यैरुक्तम् ॥ नच हेतौ पञ्चमी नानुशिष्टेति शक्यं वक्तुम् । " अइउण् ॥ १ ॥ " इति सूत्रे विवारभेदादिति भाष्यनिर्देशेन " विभाषागुणेऽस्त्रियाम् " २ । ३ । २५ ॥ इत्यत्र विभाषेति योगविभागस्याश्रिततया तत एव हेतुपञ्चम्युपपत्तेरिति[1] द्रष्टव्यम्[2] ॥

---

१ अतिविस्तरेण स्पष्टीकृतश्चायं विषयः सुरपुरवेङ्कटाचार्यैर्विरोधवरूथिनीप्रमाथिनीग्रन्थे परिभाषेन्दुशेखरसर्वमङ्गलाटीकायामपि व्याख्यानत इतिपरिभाषायामनयैव दिशापञ्चम्युपपादनंस्फुटम् । श्रीवल्लभीयमारुतशक्तिप्राभञ्जनयोरप्येतच्छ्रुतिव्याख्याने तथैव दृश्यते । २ नन्वत्राणुभाष्यप्रकाशादिग्रन्थेषु सर्वेष्वधिकरणेषु हेतुघटितसूत्रदर्शनात् पृथक्सूत्रत्वेपृथगधिकरणत्वे च प्रथमे हेतुशून्यत्वेन द्वितीये साध्यशून्यत्वेन चाध्याहारे गौरवाच्च जन्माद्यस्ययतश्शास्त्रयोनित्वादित्येकमेव सूत्रमिति स्थितमिति चेत् । शृणु ॥ "सौत्रीसंख्या शुभाशीरधिकृतिगणना चिन्मयीब्रह्मकाण्डेतादर्थ्येऽनन्तरत्वेप्यधिकरणभिदा नाल्पसारैःप्रकल्प्या । अक्षोर्म्याशाहिकाष्ठा द्विरदमुनिवसूर्म्यद्रितत्त्वातिशक्र्यक्षैरक्षैः प्रयाजैरिह भवतिरसैःपादनीतिप्रबंधः"इतिश्रीवेदान्तदेशिककृताधिकरणसारावलीविरुद्धत्वेनसर्वमतसंमतचतुस्सूत्रीवादविरुद्धत्वेनचास्माकं तत्रासंमतेर्न दोषः । गौरवंतु तेषामेव । अस्यजन्मादि यतस्तत्कर्त्रित्यनुपस्थितकर्तृपदाध्याहारेणतद्भाष्यटीकायामेव स्फोरितम् ।

अस्माकं तूद्देशलक्षणपरीक्षारूपेणास्यापि शास्त्रस्य प्रवृत्तेरधिकरणचिन्तामण्यादौ स्पष्टतया प्रथमसूत्रेण ब्रह्मण उद्देशे कृते तृतीयादिभिः परीक्षाकर्तव्येति द्वितीयेन लक्षणसमर्पणाय यत्पदेन तत्पदस्य सुलभत्वाद्ब्रह्मपदस्यानुवृत्तेश्चास्य जन्मादि यतः तद्ब्रह्मेत्यर्थे न गौरवं किंचिदपि । यदत्रसहस्राक्षग्रन्थोक्तदूषणोद्धाराय प्राभञ्जनग्रन्थे"ब्रह्मसूत्रपदैश्चैव हेतुमद्भिः" इति भगवद्वाक्यविरोधोद्भावनं तत्तत्र पदपदेन सुप्तिङन्तानामेव ग्राह्यत्वेन हेतुपदस्य पंचम्यंतातिरिक्तपरत्वेनापि व्याख्यानेन नक्षतिकरम् । यदप्येतदप्यन्यथयितुं मारुतशक्तिग्रन्थे पदपदस्याधिकरणपरत्वेनाधिकदूषणवारणं तत्त्वतीवक्लिष्टतरम् । भगवद्वाक्ये हेतुमत्पदवैयर्थ्यापादनं तु सर्वस्यापि यत्किंचिद्विषयकबुद्धिमत्त्वेन लोके बुद्धिमत्प्रयोगविलोपापत्त्या चिन्त्यम् । प्रथमसूत्रादत इतिपदानुवृत्तावप्यर्थाधिकारे दोषेपि शब्दाधिकारे दोषाभावादननुमतत्वादनुपयुक्तत्वाच्चाधिकमेवेति संक्षेपः ।

समन्वयाधिकरणम् ।

**तत्तु समन्वयात्[1] ॥ १ । १ । ४ ॥ सपर्यगाच्छुक्रम-कायमव्रणम् । अस्नाविरंशुद्धमपापविद्धम् ॥ कविर्म-नीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान्व्यदधाच्छा-श्वतीभ्यस्समाभ्यः ॥**

पर्यगात् परितोव्याप्तवान्[2] । शुक्रमित्यादौलिंगव्यत्त्ययश्छां-दसः । शुक्रं तेजिष्ठः । अकायं कर्मफलभोगार्थशरीररहितः । अव्रणं कायाभावादेव व्रणरहितः । अत एव अस्नाविरं स्नायुशून्यः । शुद्धः अविद्यारागद्वेषादिशून्यः।अपापविद्धश्च । कविः क्रान्तदर्शी । मनीषी मनीषा स्रष्टव्यालोचनरूपज्ञानं तद्वान् । परिभूःसर्वदेशव्यापनशीलः । स्वयम्भूः उत्पादकशून्यः ।एवंभूतः परमात्मा याथातथ्यतः यथातथं यथापूर्वं सत्यत्वेनेति वार्थः । शाश्वतीभ्यस्समाभ्यः चिरकालस्था-यितया स्वाप्तपदार्थविसदृशान्पदार्थान्व्यदधादकार्षीदित्यर्थः । इदं वाक्यमीशावास्यगतम् ।

**अन्यदेव तद्विदितादथो अविदितादधि । इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे ॥**

ये अस्माकं पूर्वं गुरवः उपादिशंस्तद्ब्रह्म सर्वात्मना विदितादपि विलक्षणं सर्वात्मना अविदितादपि विलक्षणमिति तेषां वाचं श्रुत-वंतो वयमित्यर्थः ।

एतदेव प्रपंचयति ।

**यद्वाचानभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥**

---

१ तत् पूर्वसूत्रोदितं ब्रह्मणः शास्त्रयोनित्वं समन्वयात् सिध्यति सम्यक् पुरुषार्थतया अन्वयः समन्वयः वेदितुर्निरतिशयानन्दस्वरूपत्वेनपरमपुरुषार्थरूपे परे ब्रह्मणि वेदकतया-शास्त्रस्यान्वयात् ब्रह्मणः शास्त्रप्रमाणकत्वं सिध्यत्येवेति सूत्रार्थवेदान्तदीपे श्रीभाष्यकारा आज्ञापयांचक्रुः । २ इदं व्याख्यानं तुश्रुतप्रकाशिकातो विलक्षणम् । तत्र हि पर्यगात् गत्यर्था बुद्ध्यर्थाः अमन्यतेत्यर्थ इत्युक्तम् ।

वागादिभिर्यदप्रकाश्यं स्वयं वागादींद्रियप्रकाशकं च यत् तदेव ब्रह्मेति जानीहि । यद्वस्तु इदमिति इदंकारगोचरतया हस्तामलकवत्सुविदिततयोपासते जनाः तत् ब्रह्म न भवति । प्राकृतजनोपास्यजगद्विलक्षणं ब्रह्मेत्यर्थः । इदं च वाक्यं तलवकारोपनिषद्गतम् ॥

ईक्षत्यधिकरणम् ।

( ईक्षतेर्नाशब्दम्[1] ॥१।१।५॥ प्रकृतिश्चप्रतिज्ञादृष्टान्तानुपरोधात् ॥१।४।२२॥ तदनन्यत्वमारम्भणशब्दादिभ्यः ॥२।१।१५॥ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वतउपदेशात् ॥२।४।१७॥ अनारब्धकार्ये एवतुपूर्वेतदवधेः ॥४।१।१५॥ वाङ्मनसिदर्शनाच्छब्दाच्च ॥४।२।१॥ )

इत्यादिविषयवाक्यार्थावगत्यर्थं सद्विद्या[2] व्याख्यायते॥ छांदोग्ये षष्ठाऽध्यायोपक्रमेस्पष्टा ॥

---

१ यस्मिन् शब्दएव प्रमाणं नभवति तदशब्दम् । आनुमानिकं प्रधानमित्यर्थः । न तज्जगत्कारणवादिवाक्यप्रतिपाद्यं कुतः ईक्षतेः सच्छब्दवाच्यसंबंधिव्यापारविशेषाभिधायिन ईक्षतेर्धातोः श्रवणात् इति श्रीभाष्ये भाषितः सूत्रार्थः । २ अत्रास्यां सद्विद्यायाम् "उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्तीच लिङ्गं तात्पर्यनिर्णये" इति षड्विधतात्पर्य लिङ्गं विशिष्टाद्वैतविषयम् । तथाहि । उपक्रमे सदेवेति वाक्यं निमित्तत्वोपादानत्वतदुपयोगिसार्वज्ञसर्वशक्तिमत्त्वादिपरत्वात्सविशेषविषयम् । उपसंहारगतंच तत्त्वमसीति सामानाधिकरण्यं प्रवृत्तिनिमित्तभेदेनैकार्थविषयत्वाद्विशिष्टाद्वैतविषयम् । विशिष्टैकार्थपरस्य तत्त्वमसीतिवाक्यस्यावृत्तत्वादभ्यासोप्यस्ति । ब्रह्मणो जगत्कारणत्वजगदंतरात्मत्वादिगुणानां प्रमाणान्तराप्रतिपन्नत्वादपूर्वता सिद्धा । एवमुपासकस्य "तस्य तावदेवाचिरं यावन्न विमोक्ष्ये अथसंपत्स्ये" इतिमोक्षोपदेशात्फलं चास्ति । एतद्विषयस्य पितापुत्रसंवादरूपत्वादर्थवादश्च सिद्धः । अस्मिन्नेवार्थे मृत्पिण्डादिदृष्टांतत्रयोपन्यासादुपपत्तिश्चास्तीतिषड्विधतात्पर्यलिङ्गं विशिष्टाद्वैतविषयमेव । विस्तरस्तु वेदार्थसंग्रहतात्पर्यदीपिकाश्रीभाष्यजिज्ञासाधिकरणश्रुतप्रकाशिकादौद्रष्टव्यः ॥ ननु किमिदं विशिष्टाद्वैतत्वमितिचेत् । श्रूयतां सावधानेन । विशिष्टं च विशिष्टं च विशिष्टे विशिष्टयोरद्वैतं विशिष्टाद्वैतम् । सूक्ष्मचिदचिद्विशिष्टस्थूलचिदचिद्विशिष्टयोर्ब्रह्मणोरद्वैतमभेद इत्यर्थः । सूक्ष्मचिदचिद्विशिष्टत्वं च सूक्ष्मचिदचिन्निष्ठविशेषणतानिरूपितविशेष्यताश्रा-

श्वेतकेतुर्हारुणेय आस ॥

हः प्रसिद्ध्यर्थः । अरुणपुत्रस्योद्दालकस्य पुत्रः श्वेतकेतुनामा बभूवेत्यर्थः ॥

तꣳहपितोवाच श्वेतकेतोवसब्रह्मचर्यंनवैसोम्यास्मत्कुलीनोननूच्यब्रह्मबंधुरिवभवति " इति ॥

---

लित्वम् । एवं स्थूलचिदचिन्निष्ठविशेषणतानिरूपितविशेष्यताशालित्वं स्थूलचिदचिद्विशिष्टत्वम् । चिदचितोर्ब्रह्मविशेषणत्वं च " यआत्मनितिष्ठन्नात्मनोऽन्तरो यमात्मानवेद। यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरोयं पृथिवी नवेद" इत्यादिश्रुतिषु चिदचित्पदार्थयोः सप्तम्यंतत्वेन निर्दिष्टत्वात् । भूतले घट इत्यादौ सप्तम्यन्तनिर्दिष्टस्य विशेषणतायाः सर्वतंत्रसिद्धत्वात् । विशेषणतादयस्तु स्वरूपसम्बन्धविशेषा अतिरिक्तविशेषणताविशेषा वा नतत्राग्रहः । तथा च सूक्ष्मचिदचिन्निष्ठविशेषणतानिरूपितविशेष्यताशाल्यभिन्नं स्थूलचिदचिन्निष्ठविशेषणतानिरूपितविशेष्यताशालीतिबोधः ॥ नन्वचित्पदार्थस्य स्थूलत्वे सत्यपि चेतनस्य जीवस्य त्वन्मते अणुत्वात्कथं स्थूलत्वमितिचेन्न ॥ चिदचितोर्नामरूपविभागार्हत्वं स्थूलत्वं नामरूपविभागानर्हत्वं सूक्ष्मत्वमिति स्थूलत्वसूक्ष्मत्वयोः पारिभाषिकत्वात् । पारिभाषिकत्वांगीकारेच " तद्धेदंतर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत" इतिश्रुतिरेव मानम् । तथाच नामरूपविभागानर्हचिदचिन्निष्ठविशेषणतानिरूपितविशेष्यताशाल्यभिन्नं नामरूपविभागार्हचिदचिन्निष्ठविशेषणतानिरूपितविशेष्यताशालिब्रह्मेतिनिष्कृष्टोबोधः । एवंचकारणावस्थकार्यावस्थब्रह्मणोरद्वैतंविशिष्टाद्वैतशब्दार्थ इतिफलितम् ॥ नचोभयोरभेदे कथंब्रह्मणोरितिद्विवचनमिति वाच्यम् । नीलघटयोर्दण्डिपुरुषयोरित्यादौ विशेष्याभेदेपि नीलत्वघटत्वादिरूपविशेषणान्वयिद्विवचनदर्शनवत् प्रकृतेपिविशेषणान्वयिद्विवचनसंभवादित्यन्यत्राकरेषु महान्विस्तरः ॥ यत्त्वत्रविशिष्टाद्वैतशब्दस्य वेदादौ प्रसिद्धिर्नास्तीतिविरोधवरूथिनीभूमिकायांब्रह्मानन्दतीर्थ ऊचे।तत्रतुनिर्विशेषाद्वैतशब्दस्यापि क्वचिदुल्लेखो नास्तीति सममेव । अद्वैतशब्दस्तु क्वचिच्छ्रूयत एवेतिचेत्किं तेन । केनचिद्रूपेणाद्वैतं त्वस्माभिरपिस्वीक्रियत एव ॥ यदपि विरोधवरूथिनीटीकायां विशिष्टाद्वैतशब्दे समासादिविरोधोद्भावनं तेनैवकृतम् । तस्य परिहारास्तु विशिष्टाद्वैतवादग्रन्थादौ पूर्वैः कृताः इति ततोवगन्तव्याः । यच्चात्रवेदान्तचूडामण्येकादशप्रकरणे जन्माद्यधिकरणटिप्पण्युदाहृतप्रभंजनटीकामारुतशक्तिकारैः गोवर्धनापरपर्यायैः'गट्टूलाल शर्मभि' र्विशिष्टाद्वैते दूषणमभिहितम् । तत्तु निर्विशेषाद्वैतनिरासकयुक्तिभिरेव निरसनीयमिति नकिंचित्करम् । तथाहि । यत्तत्रोक्तं कारणावस्थायामेकत्वावधारणश्रुत्यादीनां सत्त्वान्नतत्त्वत्रयंसिध्यति किंत्विच्छातः कार्यावस्थायामेव जडजीवान्तरात्मनां भेदो भवतीति । तत्तुतेनैवावधारणेनेच्छाया अप्यसिद्ध्या मूलोच्छेदकरम् । अशरीरत्वश्रुत्या चिदचिच्छरीराभावसाधने चानन्दमात्रकरपादमुखोदरादिमत्त्वं तदिष्टंकथं वा सिध्येदित्यादि किमनेन स्वगृहकलहेनेत्युपरम्यते । सर्वभाष्याध्येतृभिर्निपुणतरं परिहर्तुं शक्यम् ।

उद्दालकः पितातंद्वादशवर्षमनुपनीतमनधीतिनंपुत्रं श्वेतकेतुं प्रति हेसोम्य सोमार्हश्वेतकेतोक्वाचिद्गुरावध्ययनार्थं ब्रह्मचर्यंवसअ स्मत्कुलीनः अस्मत्कुलप्रसूतः कोप्यनधीत्यब्रह्मबंधुरिवनभवतीत्यु वाचेत्यर्थः ॥ यःस्वयमब्राह्मणएवसन्ब्राह्मणान्बन्धुत्वेन व्यपदिशति सब्रह्मबंधुरित्युच्यते ॥

स ह द्वादशवर्षउपेत्यचतुर्विंशतिवर्षः सर्वान्वेदान धीत्य महामनाः अनूचानमानी स्तब्ध एयाय ॥

स श्वेतकेतुर्द्वादशवर्षस्सन् गुरुमुपेत्य गुरुकुले द्वादशवर्षानुषित्वा सर्वान्वेदानधीत्य प्रौढमतिरात्मानं सांगवेदाध्यायिनं मन्यमानः परिपूर्ण इव तृणीकृतजगत्रयः चतुर्विंशतिवर्षयुक्तः प्रत्यागतः ॥

तꣳहपितोवाचश्वेतकेतोयन्नुसोम्येदंमहामनाअनूचानमानीस्तब्धोसि ॥ इति ।

इदंयद्यस्माद्धेतोस्सकइत्यर्थः ॥

उत तमादेशमप्राक्ष्योयेनाऽश्रुतंश्रुतंभवत्यमतंमतमविज्ञातंविज्ञातम् ॥ इति ।

अत्र व्यासाचार्याः । उपक्रमे तावदुत तमादेशमप्राक्ष्य इत्यत्रादेशशब्देनप्रशासिताऽभिधीयते ।

(अत्र श्लोकावाचार्यपादैरुक्तौ) छांदोग्ये केचिदाहुर्दिशतिरुत तमादेशमप्राक्ष्यइत्यत्राङ्पूर्वस्तूपदेशं प्रकटयति सतोनप्रशास्ति र्भवन्तः । नोकर्त्तर्यस्ति कर्मण्यगणिघभिहसत्कर्त्तृशास्तौ नकर्म स्यात्स्यात्कर्मोपदेशे तदिदमुततमादेशवाचोपदेश्यम् ॥ १ ॥ अत्र

१ अयमर्थः सुस्पष्टमनुगृहीतः श्रुतिमनुवचनादिभिर्वेदार्थसंग्रहेश्रीभाष्यकारैः ।
२ इमौच श्लोकावनयैवरीत्या श्रीभाष्यजिज्ञासाधिकरणमहासिद्धांते वेदान्तवाक्यानां निर्विशेषैकरसवस्तुमात्रप्रतिपादननिराकरणप्रकरणे एवंभूतेतिप्रतीकव्याख्याने श्रुतप्रकाशिकायामुपात्तौ व्याख्यातौच ।

ब्रूमः प्रशास्तिवदति दिशिरसावाङ्मुखेनोपदेशं शास्तौसोतिप्रसिद्धोनहि पर इह चापेक्षितार्थप्रसंगः । युक्तोऽसाधारणोक्त्याघञ्गणि करणेप्यत्रैवैवक्षिकत्वंशाब्दोक्तं कारकाणां ननु करणतया कर्त्तरिस्याद्विवक्षा ॥ २ ॥ इति ।

आदेशशब्देनोपदेश्यमुच्यते । प्रकृत्यर्थउपदेशः । प्रत्ययार्थः कर्मत्वम् । "अकर्तरिचकारकेसंज्ञायाम् । पा० ३ । ३ । १९ । इतिकर्तृव्यतिरिक्तकारकेघञोविहितत्वात् । उपदेशे ब्रह्मणः कर्मत्वोपपत्तेश्च । प्रशासनेतु ब्रह्म न कर्म । अपितु कर्तृ । कर्तृव्यतिरिक्तकारके हि घञ्प्रत्ययविधिः । न च इगुपधलक्षणः कप्रत्ययः पा० । ३ । १ । १३५ । उपपद्यते । क्ङितिच पा० । १ । १ । ५ इति गुणप्रतिषेधादादेशशब्दरूपासिद्धेः । नापि पचाद्यच् पा० ३ । १ । १३४ ॥ प्रत्यय उपपद्यते । दिशिधातोरिगुपधत्वेनेगुपधात्कः पा० ३ ।१। १३५ इत्यपवादसूत्रेणकप्रत्ययप्राप्तेर्गुणाभावात् । अतोघञ् प्रत्ययांत एवायमादेशशब्दः । स च प्रत्ययः कर्त्तर्यविहित इति कर्मार्थकत्वस्यैवयुक्तत्वादुपदेश्यमेवादेशशब्दवाच्यमिति ॥ अत्रोच्यते ॥ प्रकृत्यर्थः शासनं प्रसिद्धिप्राचुर्यात् । अन्यथा स्वारस्य भंगात् । आङ्पूर्वोदिशतिर्नियोक्तृप्रयोजनवचनः । उपपूर्वस्तुनियोज्यप्रयोजनवचन इति हि न्यासकारः । नियोक्तरि प्रयोजनं यस्य तस्यार्थस्य वाचक इत्यर्थः । एवमन्यत्रापि । किंचोपदेश्यत्वंलौकिकालौकिकधर्मब्रह्मभागार्थसाधारणम् ॥ प्रशासितृत्वंतुब्रह्मणोऽसाधारणम् ॥ "अंतः प्रविष्टः शास्ता जनानाम् । एतस्य वाक्षरस्य प्रशासने गार्गि" इत्यादिभिर्निरुपाधिकप्रशासनस्य ब्रह्मासाधारणत्वश्रवणात् ॥

निरुपाधिकोपदेश्यत्वंब्रह्मणोऽसाधारणमितिचेन्न । इष्टप्राप्त्यनिष्टनिवारणतत्साधनेषु साधारण्यात् । यद्यप्यमितसुखदुःखनिवृत्त्यादि साक्षादुपदेश्यं स्यात् । तथापि संसारनिवृत्तिब्रह्मतदुपासनानामुपदेश्यत्वं साधारणम् । प्रष्टव्यत्वोक्त्योपदेश्यत्वमर्थसिद्धम् । अतउपदेश्यत्वकथनेवैयर्थ्यंच । ननुयेनाश्रुतमित्यादिनैकवाक्यत्वात् स्वज्ञानेनान्यज्ञानहेतुताविशेषतयोपदेश्यत्वमसाधारणमितिचेत् । तथापि तादृशमुपदेश्यत्वं प्रतिज्ञावाक्येनप्रष्टव्यत्वोक्त्याचार्थसिद्धमित्यनपेक्षितोपदेश्यत्वकथनादप्यपेक्षितंप्रशास्तृत्वमेव वाच्यमिति युक्तम् । येनाश्रुतमित्युपादानत्वेसिद्धे प्रशास्तृत्वे न हि निमित्तत्वं सिध्येत् । निमित्तांतरे सति हि एकविज्ञानात्सर्वविज्ञानं नोपपद्यते । अतः प्रतिपिपादयिषितवस्तुनोऽपेक्षितासाधारणाकारविशिष्टतयैवप्रतिपादनमुचितम् । घञ्प्रत्ययस्य करणे व्युत्पन्नत्वात् । विवक्षातः कारकाणां प्रवृत्तिरिति शाब्दोक्तन्यायेन कर्त्तर्येव कारकांतरनैरपेक्ष्येणसाधकतमत्वविवक्षया तथा प्रयोग उपपद्यते । अकर्त्तरिचेतिसूत्रस्य प्रयोजनं करणत्वविवक्षया विनाकर्तर्यसाधुत्वेन प्रयोगनिवृत्तिः । उपदेशपक्षे प्रकृत्यर्थास्वारस्यं प्रत्ययस्वारस्यमर्थानौचित्यं च, प्रशासनपक्षे प्रत्ययास्वारस्येपि प्रधानभूतप्रकृत्यर्थस्वारस्यमर्थौचित्यं चेति वैषम्यम् । अतः प्रशासनमेवादेशशब्दाभिधेयमितिस्वीकर्तुंयुक्तमिति । येनाश्रुतं श्रुतं भवतीत्यत्र "कस्मिन्नुभगवोविज्ञाते सर्वमिदं विज्ञातं भवति आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितं भवति" इति मुंडकबृहदारण्यकवाक्यानुसारेण येन श्रुतेन मतेन विज्ञातेनाश्रुतममतमविज्ञातं श्रुतं मतं विज्ञातं भवतीति येनाश्रुतमितिवाक्यपर्यवसितार्थः । ब्रह्मस्वरूपसत्तामात्रस्याश्रुतश्रुतत्वादिहेतुत्वाभावादितिद्रष्टव्यम् । अवस्थाविशिष्टतयाऽश्रुतं स्वरूपेणश्रुतं भवतीत्यर्थः । अत्र

विज्ञातशब्दोनिदिध्यासनपरः। "श्रोतव्योमंतव्योनिदिध्यासितव्यः" इति क्रमप्रत्यभिज्ञानादितिद्रष्टव्यम्। अत्र "येन अश्रुतं श्रुतम्" इत्यनेन किमुपादानमितिपृष्टंभवति। प्रशासितृत्वार्थकेनादेशशब्देन चात्मस्वरूपं पृष्टं भवति॥ ततश्चात्मभूतमुपादानं किमिति प्रश्नस्य फलितार्थः॥ अत एव श्रीविष्णुपुराणेपि "यन्मयं च जगद्ब्रह्मन्यतश्चैतच्चराचरम्" इतिश्लोके यन्मयमित्यात्मस्वरूपं यतश्चैतच्चराचरमित्युपादानं च पृष्टम्। अत एव "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः" इति वाक्ये सदायतनाइतिसतआत्मत्वं "सन्मूलाःसत्प्रतिष्ठा" इति सत उपादानत्वं च प्रतिपाद्यत इति द्रष्टव्यम्। अत एव "अथातोऽहंकारादेशः। अथात आदेशोनेति नेति आदित्योब्रह्मेत्यादेशःउभयमादिष्टंभवतिअध्यात्मंचाधिदैवंच"इत्यादाविवादेशशब्दस्योपदेशार्थकत्वमेवास्तुनप्रशासनार्थकत्वमितिशंकापराकृता। अतोजगदुपादानभूतं जगदात्मानं किं पृष्टवानसीत्यर्थः। अत्र ज्ञातवानसीत्यनुक्त्वा पृष्टवानसीत्युक्तवतः "तद्विद्धि-प्रणिपातेन परिप्रश्नेन सेवया। उपदेक्ष्यंति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" इत्युक्तरीत्या प्रणिपातादिप्रसन्नाचार्योपदेशगम्य एव सोर्थः न तु प्रकारांतरेण ज्ञातुं शक्य इत्यभिप्रायः।

अन्यज्ञानेनान्यज्ञानासंभवादेकविज्ञानेन सर्वविज्ञानासंभवं मन्वानश्चोदयति॥

## कथंनुभगवस्सआदेशोभवतीति।

हेभगवः ईदृश आदेशः कथंभवतीत्यर्थः। उपादानोपादेययोरभेदेन भवतीत्यभिप्रायेणोत्तरमाह॥

**यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्।**

यथा उपादानभूते मृत्पिण्डे ज्ञाते तदुपादेयघटशरावादिकं ज्ञातं भवति तद्वदित्यर्थः ॥ नैयायिकरीत्या असदेव घटादिकं मृत्पिण्डेनोत्पद्यते । अतश्चोपादानोपादेययोर्भेदादुपादानभूते मृत्पिण्डे ज्ञाते तदुपादेयसर्वमृन्मयानां ज्ञातत्वं न संभवतीति मन्वानं प्रत्याह ॥

**वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ।**

आरभ्यते आलभ्यते स्पृश्यते इत्यारंभणम् । कर्मणि ल्युट् । तेनैव मृद्द्रव्येण घटशरावादिलक्षणो विकारो घटशरावादिनामधेयं च स्पृश्यत इत्यर्थः । आरंभणशब्दस्य पुन्नपुंसकलिंगविकारनामधेयविशेषणत्वेपि नपुंसकैकशेषैकवद्भावाभ्यामारंभणमिति नपुंसकैकवचननिर्देशः । मृद्द्रव्येण विकारनामधेये कस्मै प्रयोजनाय स्पृश्येते इत्यत्राह । वाचेति । प्रयोजनस्य हेतुत्वविवक्षया तृतीया । वाक्छब्दश्चाजहल्लक्षणया वागादिव्यवहारपरः । ततश्च वाक्पूर्वकहानोपादानादिव्यवहारार्थं मृत्पिण्डेननामरूपे स्पृश्येते । मृत्पिण्ड एव नामरूपभाग्भवतीत्यर्थः । अत्र यद्यपि मृत्पिण्डमृन्मयाभेददर्शनं वाचारंभणं विकार इत्येतावन्मात्रेणापि सिध्यति ननामधेयस्यापि स्पृश्यत्वं वक्तव्यम् । तथापि संज्ञाभेदादुपादानोपादेययोर्भेदशंका स्यात् । तद्व्युदासाय नामापि मृद्द्रव्येण स्पृश्यत इत्युक्तिरपेक्षितेति द्रष्टव्यम् । कार्यकारणयोरेकद्रव्यत्वे प्रमाणमाह । मृत्तिकेत्येव सत्यम् । मृन्मयं हि घटादिकं मृत्तिकेत्येव प्रमाणप्रतिपन्नं नतु तद्भिन्नत्वेनेत्यर्थः ॥

**यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात् । वाचारंभणं विकारोनामधेयं लोहमित्येव सत्यम् ॥**

---

१ अत्रमृत्तिकैवसत्येतिवक्तव्ये नपुंसकनिर्देशंकृतवत्याश्रुत्याजगन्मिथ्यात्वादयोवादानिराक्रियंत इतिसविस्तरं श्रुतिव्याख्यानपूर्वकंदृढयुक्तिभिरुपपादितवंतः स्नेहपूर्त्याख्यग्रन्थे जगन्निवृत्त्यनुपपत्तिनिरूपणेकाशीस्थाः पण्डितस्वामिश्रीराममिश्रशास्त्रिणः ।

लोहमणिः सुवर्णपिंडविशेषः । शिष्टं पूर्ववत् ।

**यथासोम्यैकेन नखनिकृंतनेन सर्वं कार्ष्णायसं विज्ञातं स्यात् । वाचारंभणं विकारोनामधेयं कार्ष्णायसमित्येव सत्यम् ॥**

नखनिकृंतनशब्देन कार्ष्णायसपिण्डो लक्ष्यते । शेषंपूर्ववत् ॥

**एवं सोम्य स आदेशो भवतीति ॥**

मयोक्त आदेशो मृत्तिपण्डादितुल्य इत्यर्थः ॥ एवमुक्तः पुत्र आह।

**नवै नूनंभगवन्तस्त एतदवेदिषुः । यद्येतदवेदिष्यन्कथंमेनावक्ष्यन्निति भगवांस्त्वेवमेतद्ब्रवीत्विति ॥**

भगवन्तः पूजावन्तः मम गुरवः एतत्स्वरूपं नज्ञातवन्तः यद्येतद्वस्तुतो जानीयुस्तर्हिंभक्ताय गुणवते मह्यमुपदिशेयुर्हिनोपदिष्टंयतस्ते नाहं मन्ये नविदितवन्त इति एवमवाच्यमपिगुरोर्न्यूनं पुनर्गुरुकुलं प्रति प्रेषणभयादुक्त्वा भगवानेव तदुपदिशत्विति पितरं प्रार्थयामासेत्यर्थः ॥

**तथासोम्ये ति होवाच ॥**

पितापि तथैव वदानीत्युक्तवानित्यर्थः ॥ प्रतिज्ञातस्यैकविज्ञानेन सर्वविज्ञानस्य समर्थनाय जगतोब्रह्मैककारणतां प्रतिपादयितुं प्रवृत्त उद्दालकोयथालोकेऽपराह्णेप्रसारितानां घटशरावोदंचनादीनां मृत्पिंडैकोपादानतां प्रतिपिपादयिषुः पूर्वाह्णे एतद्घटशरावादिकं मृत्पिण्डएवासीदिति प्रतिपादयति तथा प्रतिपादयति ॥

**सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥**

इदं विभक्तनामरूपं बहुत्वावस्थं जगद् अग्रे सृष्टेः प्राक् एकमेवाविभक्तनामरूपतया एकत्वावस्थापन्नमेव अद्वितीयमधिष्ठात्रंतरशून्यंच सदेवासीदित्यर्थः।अत्रसच्छब्दोमानसंबंधयोग्यत्वलक्षणं सत्त्वं

प्रवृत्तिनिमित्तीकृत्य परमात्मनि वर्त्तते।अयंच सच्छब्दो विशेष्यभूत परमात्मवाचकोपि कारणविषयत्वसामर्थ्यात् कारणत्वौपयिकगुणविशिष्टप्रकृतिपुरुषकालशरीरकं परमात्मानमुपस्थापयति। देवानामाज्यपानामित्यादौविशेष्यवाच्याज्यशब्दस्य विकृतिषुपृषदाज्यवाचित्वस्यदाशमिकन्यायसिद्धत्वात्। अत्र सदेवेत्येवकारेण नैयायिकाभिमतमुत्पत्तेः प्राक् जगतोऽसत्त्वंव्यावर्त्यते। सदेवेत्येवकारस्य नैयायिकाभिमतोत्पत्तिप्राक्कालीनकार्यासत्त्वव्यावर्तकत्वं "तद्धैकआहुरसदेवेदमग्र आसीत्" इत्यसत्कार्यवादिदर्शनप्रतिक्षेपकोत्तरवाक्यसंदर्भादवसीयते।एकमेवेत्येवकारेणबहुस्यामिति वक्ष्यमाणस्रक्ष्यमाणकार्यबहुत्वावस्था व्युदस्यते। "तदैक्षततत्तेजोऽसृजत" इत्युत्तरवाक्यसंदर्भेसच्छब्दितस्यैवनिमित्तत्त्वकथनात्। अद्वितीयमित्यनेन निमित्तांतरं निषिध्यते। ततश्चैकमद्वितीयमिति पदाभ्यामभिन्ननिमित्तोपादानत्वं सिद्धं भवति।

ततश्चायमर्थः॥ इदं बहुत्वावस्थं विभक्तनामरूपं प्रत्यक्षतया दृश्यमानं जगत् सृष्टेः प्राङ्निमित्तांतरशून्यमविभक्तनामरूपतया एकंसच्छब्दितं ब्रह्मैवासीदिति। यद्यपीदानीमपि जगत्सदेव।तथाप्यविभक्तनामरूपसद्रूपापत्तिः सृष्टेः प्रागेवेत्यग्र इत्यस्य नानुपपत्तिः॥ न च सच्छब्दस्य सूक्ष्मप्रकृतिजीवकालशरीरकपरब्रह्मपरत्वेन सच्छब्दस्य कार्यभूते जगति सृष्टेःप्राक्तादृशब्रह्मत्वबोधकत्वेपि जगति सत्तासंबंधस्य बोधकत्वाभावेनासत्कार्यव्युदासकत्वं कथमिति वाच्यम्। सृष्टेः प्राक् सच्छब्दितब्रह्माभेदबोधिते नैयायिकाभिमतासत्त्वव्युदासस्याप्यर्थसिद्धत्वात्। एतेनैकमेवाद्वितीयमित्येतत् प्रपंचमिथ्यात्वे प्रमाणयंतः परे प्रत्युक्ताः। तस्य ब्रह्मव्यतिरिक्तामिथ्यात्वपरत्वे "सदेव सोम्येदमग्र आसीत्" इति कालप्रापकेण पूर्वेणाग्रपदेन "तदैक्षत" "नामरूपे व्याकरवाणि" इतीक्षणनाम-

रूपात्मकप्रपंचप्रापकेणोत्तरेण च विरोधप्रसंगात् ॥ किंचेदंशब्दोदितं सर्वं जगत्सृष्टेः प्रागेकमेवाद्वितीयं सदेवासीदितिपरैर्व्याख्यातत्वेन सृष्टिप्राक्काले ऽद्वितीयपदेन द्वितीयासत्त्वबोधनेपि सृष्ट्युत्तरकाले तस्यासत्त्वाप्रतिपादनेन जगतोमिथ्यात्वासिद्धेः । घटशरावादिकंसर्वं सृष्टेः प्रागद्वितीय एकमृत्पिण्डएवासीदित्युक्त्याघटशरावादीनां मिथ्यात्वप्रतिपादनादर्शनात् । प्रागसत्त्वप्रतिपादनेन ह्यनित्यत्वमात्रं सिद्ध्येत् । नतुमिथ्यात्वम् ॥ नच नेहनानास्तीतिवाक्यात्सृष्ट्युत्तरकालमप्यसत्त्वावेदनान्मिथ्यात्वसिद्धिरितिवाच्यम् ॥ न स्थानतोपि परस्योभयलिंगं सर्वत्रहि[1] । ३ । २ । ११ । इत्यधिकरणे तस्य वाक्यस्य ब्रह्मगतनानात्वनिषेधपरतया परैरेव व्याख्यातत्वात् ॥ नन्वनित्यत्वमेव मिथ्यात्वम् । अनित्यस्य धर्मिणोऽनित्यत्वमसत्यत्वमिति पर्यवस्यतीति वाचस्पतिमिश्रोक्तेः । विद्यारण्ययतिनापि तथैवोक्तत्वात् । "अनाशी परमार्थश्चप्राज्ञैरभ्युपगम्यते । यत्तुकालांतरेणापि नान्यसंज्ञामुपैतिवै ॥ परिणामर्द्धिसंभूतां तद्वस्तुनृपतच्चकिम् " इति पराशरस्मरणादनित्यत्वमेवमिथ्यात्वमितिचेत् । ईदृशस्य प्रामाणिकस्य प्रत्यक्षाविरुद्धस्य प्रपंचमिथ्यात्वस्यास्माभिरप्यप्रतिक्षेप्यत्वादित्यास्तां तावत् ॥

सदेवासीदिति सृष्टिप्राक्काले ब्रह्माभेदप्रतिपादनमुखेन सत्कार्यवादमुक्त्वातद्विरोध्यसत्कार्यवादिनैयायिकादिमतं वाचारंभणमित्यादिना प्रतिक्षिप्तमपि कंठतः प्रतिक्षेप्तुं तन्मतमुपन्यस्यति ॥

## तद्धैक आहुरसदेवेदमग्रआसीदेकमेवाद्वितीयम् ।

१ सूत्रार्थं विषयेतु परस्य ब्राह्मणः अंतर्यामितया स्थानतोपि वर्तनादपि पृथिव्यादौ न विकारगंधः हि यस्मात् सर्वत्र श्रुतिस्मृत्यादौ अखिलहेयप्रत्यनीकत्वं कल्याणगुणाकरत्वं चोभयं ब्रह्मणो लिंगमुच्यते इत्यर्थकं वाक्यं भगवंतः श्रीभाष्यकारा वेदांतसारादावाज्ञापयंतिस्म ॥

इदं जगदग्रे सृष्टेः प्रागसदेवासीन्नतु सदासीदित्यर्थः । नामरूप-विभागाभावलक्षणस्यासत्त्वस्य सिद्धांतेपि संमतत्वादाह।एकमेवाद्वि-तीयमिति ॥ प्रागभावव्यतिरेकेणावस्थाया वाऽवस्थाश्रयस्य वा कस्यापि सत्त्वंनास्तीत्यर्थः ॥ यद्वा असदेवेत्यत्र अ इत्येतत्सत्पदे नासमस्तं सत् सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमितिवाक्या र्थस्य प्रतिक्षेपकम् ॥

तस्मादसतःसज्जायत ॥

सदितिभावप्रधानोनिर्देशः । सत्तेत्यर्थः । यस्माद्धेतोरुत्पत्तेः प्रागवस्थाश्रयस्याप्यभावस्तस्माद्धेतोः असतः सत्त्वरूपा उत्पत्तिर-जायत अभवदित्यर्थः पर्यवसन्नः । सज्जायतेत्यत्राऽडभावश्छान्द-सः ॥ तन्मतं प्रतिक्षिपति ॥

कुतस्तुखलुसोम्यैवंस्यादितिहोवाच कथमसतः स-ज्जायेत ॥

केन प्रमाणेनासत उत्पत्तिः प्रतीयते तदेवेदमिति प्रत्यभिज्ञा-विरोधेन प्रमाणस्यानवतारात् । अतः कथमसतोद्रव्यस्य सत्ता भ-वेत् । अतोऽसतः सदुत्पत्तिर्नभवति । अपितु सत एवद्रव्यस्यप्रथम-क्षणावच्छिन्नावस्थांतरसंबंध एव उत्पत्तिरित्यर्थः ॥ एवं परपक्षं प्रति-क्षिप्य स्वमतमुपसंहरति ॥

सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत ॥

तदेतत्सच्छब्दवाच्यं परं ब्रह्म विचित्रानंतचिदचिन्मिश्रव्यष्टि-जगद्रूपेणाहंबहुस्यां तदर्थं तेजोबन्नादिसमष्टिरूपेण प्रकर्षेण जायेये-तिसंकल्प्य तेजः ससर्ज ॥

तत्तेजऐक्षत बहुस्यांप्रजायेयेति तदपोऽसृजत ॥

अत्राचेतनस्य तेजआदेरीक्षितृत्वासंभवात्तेजआदिशब्दास्तच्छरीरकपरमात्मपरा द्रष्टव्याः।भगवता भाष्यकृता "गौणश्चेन्ना[1]त्मशब्दात ।१।१ । ६ ॥ " इति सूत्रे तेजःप्रभृतयोपि शब्दाः परमात्मन एव वाचकाः। " तत्तेजऐक्षतताआपऐक्षंत " इति मुख्य एवेक्षणव्यपदेश इतिभाषितम् । तथा"तद[2]भिध्यानादेवतुतल्लिंगात्सः ।२ ।३।१४॥ " इतिसूत्रे "तत्तेजऐक्षतता आप ऐक्षंत" इतिश्रूयमाणमीक्षणंतच्छरीरकस्य परस्यैव ब्रह्मणउपपद्यत इतिभाषितम् । संज्ञा[3]मूर्तिकॢप्त्यधिकरणे २ ।४।१७।च"तत्तेज ऐक्षत"इति तेजश्शरीरकं परंब्रह्मैवाभिधीयत इतिभाषितम् । नच तत्तेज ऐक्षतेत्यत्र तेजश्शब्दस्य तेजश्शरीरकपरब्रह्मपरत्वे तत्तेजोऽसृजतेतिवाक्येपि तेजश्शब्दस्यपरब्रह्मपरत्वं स्यात् । नचेष्टापत्तिः । ब्रह्मणः सृज्यत्वाभावादिति वाच्यम् । तेजश्शरीरकब्रह्मणः कार्यत्वेन सृज्यत्वेदोषा[4]भावात् ॥ तेजसोजलहेतुत्वे उपपत्तिं दर्शयति ॥

तस्माद्यत्र क्वचन शोचति स्विद्यति वापुरुषःतेजस एव तदध्यापोजायंते ॥

---

१ समन्वयाधिकरणेटिप्पणीत्रुटिः–ननु भाष्यदीपसारेष्वेतत्सूत्रविषयवाक्यत्वेनास्य मंत्रस्यानुपन्यासादेतत्सूत्रेएतच्छ्रुत्युपन्यसनमेतद्ग्रन्थशैलीविरुद्धम्। नह्यधिकरणविषयवाक्यातिरिक्तवाक्यान्यप्यस्मिन्ग्रन्थे व्याख्यायन्ते । यतः "साक्षाच्चोभयाम्नानात्"इतिसूत्र एवावश्यापेक्षितोपि किंस्विदिति मंत्रो नव्याख्यात इति चेत्॥सत्यम्॥समन्वयाधिकरणएव भाष्येप्रयोजनशून्यत्वेन ब्रह्मणि वेदान्तानां प्रामाण्याभावे मीमांसकेनाशङ्किते तत्र निष्प्रपंचीकरणवादिध्याननियोगवादिभेदाभेदवादिनामुत्थाने ध्याननियोगवादिप्रघट्टके भाष्यकारैरेतन्मंत्राऽऽद्यखण्डस्योदाहृतत्वेनाग्रिमयोरपि मंत्रयोस्तत्रैवोपात्तत्वेनच तेषां व्याख्यानस्यात्रोपयोगमवेहि।त्वदुत्प्रेक्षितनियमेतु मानाभावः।किंस्विदिति मंत्राव्याख्यानं त्वल्पोपयोगाद्वा स्पष्टार्थत्वाद्वेति नतादृशनियमकारि । १ तत्तेज ऐक्षतेति वत् तदैक्षतेत्यत्रापि ईक्षतिगौंण इतिचेन्न। स आत्मा तत्त्वमसीत्यात्मशब्दश्रवणादिति श्रीभाष्याद्यनुगृहीतः सूत्रार्थः । २ तस्य परमात्मनोऽभिध्यानात्संकल्पात् तस्य स्रष्टृत्वलिंगात्सः परमात्मैव पृथिव्यादीनां कारणमित्याशयं भगवान्श्रीभाष्यकारो वेदांतदीपादावाज्ञापयांचकार । ३ "संज्ञामूर्तिकॢप्तिस्तु त्रिवृत्कुर्वत उपदेशात् " इति सूत्रम् । ४ यथाबालत्वयुवत्वादयो धर्मा नात्मानं स्पृशंति तथा तेजआदिगता विकारा न परमात्मानं स्पृशंतीति भावः ।

यत्र क्वचन देशे वा काले वा पुरुषः संतप्यते प्रस्विद्यते तत्तदा तेजस एवाऽऽपोधिजायंत इत्यर्थः ।

**ता आप ऐक्षंत बह्वयः स्यामः प्रजायेमहीति ता अन्नमसृजंत ॥**

अत्रान्नशब्देनमहाभूताधिकारात्पृथिव्युच्यते।सूत्रितं च"पृथिव्यधिकाररूपशब्दान्तरेभ्यः २ । ३ । ११॥"इति । अधिकारोमहाभूताधिकारः । रूपंयत्कृष्णंतदन्नस्येतितैत्तिरीयके । अद्भ्यः पृथिवीति शब्दांतरम् ।एतच्चसूत्रमन्यत्रव्याकृतम् ।अपामन्नेहेतुत्वे युक्तिमाह॥

**तस्माद्यत्र क्वचन वर्षति तदेव भूयिष्ठमन्नं भवति ॥**

तदेव तत्रैवेत्यर्थः ॥

**अद्भ्यएवतदध्यन्नाद्यंजायते ॥**

तत्तस्मात्पृथिव्येकदेशस्य व्रीहियवादिलक्षणस्यान्नस्य वृष्टिप्रभवत्वदर्शनादेवहेतोः अन्नाद्यमन्नप्रभृतिपृथिवीत्वावच्छिन्नमद्भ्यएवाधिजायत इत्यर्थः ॥ सर्वस्येतरस्य तेजोबन्नात्मकबीजत्रयप्रसूतत्वं दर्शयति ॥

**तेषांखल्वेषांभूतानांत्रीण्येवबीजानिभवन्त्यण्डजं जीवजमुद्भिज्जमिति ॥**

अण्डजजीवजोद्भिज्जशब्दनिर्दिष्टानामेषां भूतानां तेजोबन्नानि त्रीण्येव बीजानीत्यर्थः ॥ तदेवोपपादयति ॥

**सेयं देवतैक्षत हंताहमिमास्तिस्रोदेवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति ॥**

---

१ तदुक्तं पूर्वैः श्लो० द्वेधा भूतानिभित्वापुनरपिच भिनत्यर्द्धमेकंस्थितेऽर्द्धेतैरेकैकस्यभागैः परमनुकलयत्यर्द्धमर्द्धंचतुर्भिः । इत्थंपञ्चीकृतैस्तैः सजनयतिजगद्धेतुरंडादिकार्याण्यैदंपर्यं त्रिवृत्त्वश्रुतिराधिकगिरामक्षमैकानिरोद्धुम् ॥ १ ॥ इति ।

अत्र संज्ञामूर्त्तिक्लृप्त्यधिकरणे भगवताभाष्यकृता सेयं देवतेत्यादिवाक्यस्यायमर्थः॥ सेयंसच्छब्दिता परा देवता इमास्तेजोबन्नरूपास्तिस्रोदेवता अनेन जीवेन जीवसमष्टिविशिष्टेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि देवादिविचित्रसृष्टिं तन्नामधेयानि च करवाणीति तदर्थमन्योन्यसंसर्गमप्राप्तानामेषांतेजोबन्नानां विशेषसृष्टयसमर्थानां तत्सामर्थ्यायैकैकांत्रिवृतंत्रिवृतंकरवाणीति भाषितम्। "अभिमानिव्यपदेशस्तु[1]विशेषानुगतिभ्याम्" इतिसूत्रेहंताहमिमास्तिस्रोदेवताइतितेजोबन्नानिदेवताशब्देनविशिष्यंतइतिभाषितत्वादत्रदेवताइत्यभिमानिदेवतापरत्वंवक्तव्यम्।ततश्चेमास्तिस्रोदेवताइत्यस्यायमर्थः॥ स्वस्वाभिमानिदेवताधिष्ठितानितेजोबन्नानीति तेजोबन्नाभिमानिदेवतानां परमात्मव्यतिरिक्तत्वे प्रमाणाभावात् परमात्मनःसर्वाभिमानिदेवतात्वसंभवाच्च परमात्मरूपदेवताधिष्ठितानीत्यर्थः । परमात्मव्यतिरिक्तदेवताभ्युपगमेपि देवताशब्दस्य तदधिष्ठितत्वमेवार्थः ॥ नच तत्तेजोसृजत तत्तेज ऐक्षतेत्यादौ तेजआदिशब्दानां परमात्मपरत्वात्तेजोबन्नावस्थपरमात्मनां तदुपहितत्वावस्थाधीनबहुत्वाश्रयाणामेव इमास्तिस्रोदेवता इतिदेवताशब्देन परामर्शोऽस्तु नतुदेवताशब्दस्य तदधिष्ठितपरामर्शित्वमितिवाच्यम् ॥ तत्तदवस्थपरमात्मसु जीवस्य प्रवेशासंभवेन प्रवेशयोग्यतेजोबन्नानामेवाभेदोपचारेण लक्षणया वा देवताशब्देन निर्देष्टव्यत्वात् । महासिद्धांते तदैक्षतेति सर्वज्ञत्वम्, असृजतेति निमितत्वं, बहुस्यामित्युपादानत्वं तदुभयानुगुणं, सर्वशक्तित्वं, सत्यसंकल्पत्वम्, अनेनजीवेनात्मनानुप्रविश्येति सर्वांतरत्वं चोक्तं भवति । जीवेनात्मनेति जीवशरीरकेण मयेत्यर्थः, सिंहेनभूत्वा बहवोमयात्ता इतिवत् । सार्वज्ञा-

---

१ जिज्ञासाधिकरणे वेदान्तवाक्यानां निर्विशेषज्ञानैकरसवस्तुमात्रप्रतिपादनपरत्वनिरसनप्रवृत्ते एकविज्ञानेनेति प्रतीकव्याख्यायां श्रुतप्रकाशिकायामित्यर्थः ॥

दिगुणकस्यतद्विपरीताकारजीवैक्यासंभवात् । यस्यात्मा शरीरमित्यादिवचनात्तदनुप्रविश्येत्यचेतन इवजीवेप्यनुप्रवेशश्रवणाच्चशरीरवाचिशब्दस्य शरीरिपर्यंतत्वस्य मुख्यतयोपपन्नत्वाच्चायमेवार्थ इतिव्यासार्यैरुक्तम् ॥ ननुजीवशरीरकेण मया प्रविश्य व्याकरवाणीत्यर्थोनसंभवति । व्याकरवाणीति तिङा कर्तुरभिहितत्वेनानभिहिताधिकारविहिततृतीयानुपपत्तेः ॥नचव्याकरणक्रियाकर्तुस्तिङाभिहितत्वेपिप्रवेशक्रियाकर्तुरनभिहितत्वात्तृतीया भविष्यतीतिवाच्यम् ॥तर्हि मया भुक्त्वा व्रजामीत्यादिप्रयोगः साधुःस्यात् । व्रजिक्रियाकर्तुरभिहितत्वेपि भुजिक्रियाकर्तुरनभिहितत्वात्"स्वादुमिणमुल् ।३।४।२६॥"इतिसूत्रे कैयटेन क्त्वाप्रत्ययस्य भावार्थत्वात् पक्त्वौदनं भुङ्क्ते देवदत्तः पक्त्वौदनोभुज्यतेदेवदत्तेनेत्यत्रापि क्त्वाप्रत्ययेन पाकक्रियाकर्तृकर्मणोरनभिधानात् तृतीयाद्वितीये कुतोन प्राप्नुत इत्याशंक्याख्यातपदवाच्याक्रियाविशेष्यत्वात्प्रधानम्,इतरातुविशेषणत्वादप्रधानं, तत्क्रियासाध्ययोरपिशक्त्योः तद्वारकोगुणप्रधानभावः, तत्र प्रधानशक्त्यभिधाने गुणक्रियाशक्तिरभिहितवत्प्रकाशतेप्रधानानुरोधात्,गुणानां पृथक्तद्विरुद्धस्वकार्यारंभायोगाच्चेत्युक्तत्वादितिचेत्॥सत्यम्॥मयेत्यस्य स्वरूपेणेत्यर्थः। आत्मशब्दः स्वरूपपरः।यद्यपि जीवशरीरकं स्वरूपं व्याकरणकर्तुर्नभिद्यते।तथापि"व्यपदेशिवदेकस्मिन्बुद्ध्यानानात्वकल्पना "इतिन्यायेनकल्पितभेदमादायानभिहिताधिकारविहिततृतीयोपपत्तेः ।घटः स्वेनरूपेण इतरव्यावृत्तिं करोतीत्यादिप्रयोगदर्शनात् । करोतीति तिङाकर्तुरभिहितत्वात् ॥ ननु तत्र करणार्थे तृतीया । करणं च न तिङाभिहितमिति चेत् ॥ तर्हि प्रकृतेपि तथास्तु।तेनेशस्तद्विशिष्टः स्वकरणतया[1]

१ श्लो०"याजीवेनात्मनेति श्रुतिरियमपि न ब्रह्मजीवैक्यमाह प्रागेवैकोऽन्तरात्मा वपुरितरदितिस्थायिभेदाभिधानात् ॥ तेनेशस्तद्विशिष्टः स्वकरणकतयाऽनुप्रवेशेपि कर्ता जीवतत्कर्तृतायामिह नहि घटते त्वाश्रुतिः कर्तृभेदात्॥१॥" इति द्वितीयाध्यायचतुर्थपादशेषे इत्यर्थः॥

नुप्रवेशेपि कर्त्तैत्यधिकरणसारावल्युक्तेश्चायमेवार्थः। यद्वा आरंभणाधिकरणे अनेन जीवेनात्मना मदात्मकजीवेनात्मतयानुप्रविश्यै तद्विचित्रनामरूपभाक्करवाणीति भाषितत्वेन जीवशब्दस्य परमात्मपर्यंतत्वाभावस्यापि दर्शितत्वात्तदनुसारेण जीवेनेत्यस्य जीव एवार्थः । आत्मशब्दस्य शरीरमर्थः। शरीरभूतेनानेन जीवेनानुप्रविश्य नामरूपे व्याकरवाणीत्यर्थः। आत्मशब्दस्य शरीरवाचित्वमभिप्रेत्यैव मदात्मकजीवेनेतिभाषितम् ॥ आत्मतयानुप्रविश्येति भाष्यस्यायमर्थः ॥ आत्मतयेति हेतौ तृतीया। हेतुत्वं च प्रयोजनत्वेन विवक्षितम्। आत्मत्वार्थमनुप्रविश्येत्यर्थः। प्रविश्यनियन्तृत्वाभावे आत्मत्वासंभवात्। चारेणानुप्रविश्य परबलं संकलयानीति वदिति। यद्वा "अनेन जीवेनात्मनानुप्रभूतः पेपीयमानोमोदमानस्तिष्ठति"इत्यत्रेवानेन जीवेनात्मनानुप्रविश्येत्यत्रापिजीवेनेतिजीवात्मनेत्येवार्थः। अस्मिन्पक्षेऽनेनेतिशब्दस्य प्रमाणप्रतिपन्नपुरोवर्तिना मच्छरीरभूतेनेत्यर्थः। अनयोःपक्षयोश्चारेणानुप्रविश्यपरसैन्यंसंकलयानिदेवदत्तेन पक्त्वौदनंचैत्रोभुङ्क्तेइत्यत्रेवप्रविशिक्रियाप्रयोजककर्त्रापरमात्मना व्याप्रियमाणस्य जीवात्मनः करणतया तृतीयासंभवात्तृतीयाया नानुपपत्तिः ॥इयांस्तुविशेषः॥ नामरूपव्याकरणस्य त्रिवृत्करणसमानकर्तृत्वावगमान्नामरूपव्याकरणांशे साक्षात्कर्तृत्वमप्यस्ति। प्रवेशेतु सर्वव्यापकस्य परमात्मनः साक्षात्कर्तृत्वासंभवात्प्रयोजककर्तृत्वम्। एवंच प्रवेशनामरूपव्याकरणयोः समानकर्तृकत्वसंभवात् क्त्वाप्रत्ययस्यापि नानुपपत्तिरितिद्रष्टव्यम्।एतेनांतःकरणविशिष्टस्याहमर्थत्वं वदंतः परे प्रत्युक्ताः। बहुस्यां हंताहमिमा इतिसंकल्पसमये तस्याभावादित्यास्तां तावत् ॥

सेयंदेवतेमास्तिस्रोदेवता अनेनजीवेनात्मनानुप्र-

विश्य नामरूपेव्याकरोत् । तासां त्रिवृतंत्रिवृतमेकै-
कामकरोत् ॥

अत्र त्रिवृत्करणाधीनत्वान्नामरूपव्याकरणस्यार्थक्रमानुरोधेन पाठक्रमो बाध्यते । अत्र तेजोबन्नदेवतासु एकैकां त्रिवृतं कृत्वा नामरूपव्याकरणमकरोदित्यर्थः । अत्र व्यापकस्य परमात्मनः स्वरूपेण स्वाऽपृथक्सिद्धसर्ववस्तुप्रवेशस्य सर्वदासत्त्वेपि स्वशरीर-भूतजीवेनानुप्रवेशस्य पूर्वमभावात् जीवेनानुप्रविश्य नामरूपे व्याकरोदित्यर्थस्य नानुपपत्तिः । चारस्य च राजशरीरत्वाभावान्न-चारेणानुप्रविश्येतिवाक्यसाम्यंच ॥

यथातु खलुसोम्येमास्तिस्रोदेवतास्त्रिवृत्त्रिवृदेकैका भवतितन्मेविजानीहीति ॥

देवताधिष्ठितानां तेजोबन्नानां त्रिवृत्करणप्रकारं मे निगदतः शृणिवत्यर्थः । व्यासाचार्य्यैरानन्दमयाधिकरणे अनुप्रविश्यनामरूपे व्याकरवाणीत्यत्र नामरूपव्याकरणस्यानुप्रवेशपूर्वकत्वमवगम्यते । तत्सृष्ट्वा तदेवानुप्राविशदित्यत्रानुप्रवेशस्य सृष्टिपूर्वकत्वं गम्यते । तस्मात्समानकर्तृकत्वमेवविवक्षितम् । नपौर्वापर्यमपि । अत एव हि"तस्यत्वष्टाविदधद्रूपमेति"इति सृष्ट्यनुप्रवेशयोः समानकालीन-त्वमेवप्रतीयते ।अथवा तत्सृष्ट्वा तदेवानुप्राविशदिति सृष्ट्यनन्तर-त्वेन श्रूयमाणोनुप्रवेशः स्थित्त्यर्थोन्य एवेत्युक्तम्। अत्र व्यापकस्यापि परमात्मनोंतर्यामिविग्रहद्वारानुप्रवेश उपपद्यत इति केचित् । जीवद्वारैवानुप्रवेशोनस्वत इति केचित् । प्रतिवस्तु तत्तद्वस्तुमात्रपूर्णपरमात्मनः कार्यकारित्वात् तत्र प्रविष्ट इव इत्युक्तिरितिकेचित् ॥

यदग्ने रोहितंरूपंतेजसस्तद्रूपम् ॥

अग्नेर्यद्रोहितस्वरूपं रोहितोभागो दृश्यते तदत्रिवृत्कृतस्य तेजसः स्वरूपम् ।

यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य ॥

अग्नेर्यच्छुक्लं रूपं तदपामेव यदग्नेः कृष्णं तत्पृथिव्या इत्यर्थः ॥ अग्नेस्तेजोबन्नसमुदायरूपत्वे यावत्तेजोबन्नावस्थानमग्निरूपेणोपलंभं प्राप्नोतीत्यत्राह ॥

अपागादग्नेरग्नित्वम् ॥

तेष्वेव तेजोबन्नेष्वग्न्याद्यवस्थानाशकसामग्रीसन्निधाने अग्नित्वावस्थाअपेता भवति । अवस्थांतरं प्रादुर्भवति ॥

वाचारंभणं विकारोनामधेयं त्रीणिरूपाणीत्येवसत्यम् ॥

अतस्तेजोबन्नैरेवाग्नित्वाद्यवस्थालक्षणोविकारोऽग्न्यादिनामधेयंच वाक्पूर्वकव्यवहारसिद्धये तेजोबन्नैरेवस्पृश्येते । अतस्तेजोबन्नस्वरूपाण्येवाग्निरितिसत्यमित्यर्थः ॥

यदादित्यस्य रोहितꣳरूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादादित्यादादित्यत्वं वाचारंभणं विकारोनामधेयं त्रीणिरूपाणीत्येवसत्यम्। यच्चंद्रमसोरोहितंरूपं तेजसस्तद्रूपंयच्छुक्लंतदपां यत्कृष्णं तदन्नस्यापागाच्चंद्राच्चद्रत्वं वाचारंभणं विकारोनामधेयं त्रीणिरूपाणीत्येवसत्यम् । यद्विद्युतोरोहितꣳरूपम् तेजसस्तद्रूपं यच्छुक्लंतदपां यत्कृष्णं तदन्नस्यापागाद्विद्युतोविद्युत्त्वं वाचारंभणं विकारोनामधेयं त्रीणिरूपाणीत्येव सत्यम् ॥

पूर्ववदर्थः । एवं सर्वस्यापि प्रपंचस्य त्रिवृत्कृततेजोबन्नरूपत्वेन तदभेदंप्रसाध्याध्यात्ममांसलोहितमज्जास्थिलक्षणस्य देहस्येन्द्रिय मनःप्राणानांच त्रिवृत्कृततेजोबन्नाभेदं प्रदर्शयितुं प्रस्तौति ॥

यथाखलुसोम्येमास्तिस्रोदेवताः पुरुषंप्राप्य त्रिवृत्त्रिवृदेकैका भवतितन्मेविजानीहीति ॥

तेजोबन्नानि पुरुषेण भुज्यमानानि पुरुषं प्राप्य यथा परिणमंति तं परिणामप्रकारं शृण्वित्यर्थः ॥

अन्नमशितंत्रेधा विधीयते ॥

पुरुषेण भुक्तं जाठराग्निना पच्यमानं स्थविष्ठमध्यमाणिष्ठरूपेण त्रेधा विभक्तं भवति ॥

तस्ययः स्थविष्ठोधातुस्तत्पुरीषं भवति।योमध्यमस्तन्मांसम् । योणिष्ठस्तन्मनः ॥

स्थूलांशःपुरीषतामापद्यते।मध्यमांशस्तु मांसताम्।अणिष्ठांशस्तु मनस आप्यायकतामापद्यते । मनस आहंकारिकत्वेनान्नविकारत्वाभावादितिभावः ॥

आपः पीतास्त्रेधा विधीयंते । तासां यः स्थविष्ठोधातुस्तन्मूत्रं भवति । योमध्यमस्तल्लोहितम् । योऽणिष्ठः सप्राणः । तेजोऽशितं त्रेधाविधीयते।तस्य यःस्थविष्ठोधातुस्तदस्थि भवति । योमध्यमःस मज्जा । योऽणिष्ठः सावाक् ॥

तैलघृतादिकं तेजश्शब्देनोच्यते।मज्जा अस्थ्यंतर्गतः स्नेहः धातुविशेषः । घृततैलादेः पीतस्य सूक्ष्मांशोवागाप्यायक इत्यर्थः ॥

अन्नमयꣳहि सोम्य मनः अपोमयः प्राणस्तेजोमयीवागिति ॥

उक्तरीत्या मनःप्राणवाचामन्नजलतेजस्सूक्ष्मांशाप्यायितत्वान्मनोन्नमयं प्राणोजलमयस्तेजोमयीवागित्यर्थः ॥ एकविज्ञानेन सर्वविज्ञानसिद्ध्यर्थं ब्रह्मव्यतिरिक्तस्य तदुपादेयत्वं वक्तुं प्रवृत्तः तेजोबन्नात्मकसकलाचेतनवर्गस्य तदुपादेयत्वमुक्त्वाचेतनवर्गस्यापि तदुपादेयतां प्रतिपादयितुं प्रस्तौति ॥

उद्दालकोहारुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नांतं मे सोम्यविजानीहीति ॥

स्वप्नांतं सुषुप्तिं प्रतिपादयतो मम वाक्याद्विजानीहीत्यर्थः ॥ एवं शिष्यावधानाय प्रतिज्ञायाह ॥

यत्रैतत्पुरुषःस्वपितिनाम ॥

यत्र यदा नामशब्दः प्रसिद्धौ एतत्पुरुषः एष पुरुष इत्यर्थः ॥

सता सोम्यतदा सम्पन्नोभवति ॥

सदेव सोम्येति प्रकृतेन सता संगतोभवति ! तस्या एवसत्संपत्तेः सतिलयरूपत्वं स्वपितिनामनिवर्चनानुगुणंविवृणोति ॥

स्वमपीतोभवतीति ॥

अत्र स्वशब्दस्तावन्नजीवमात्रपरः सता सोम्य तदा संपन्नोभवति स्वमपीतोभवतीतिस्थानप्रमाणेन सच्छब्दस्वशब्दयोरेकविषयत्वावश्यंभावात्।सच्छब्दस्य चास्मिन्प्रकरणे परमात्मविषयत्वात्। स्वशब्दोपि तत्पर एव ॥ ननुजीवभिन्नत्वात्परमात्मनः तस्यकथं जीवंप्रति स्वत्वमितिचेत्उच्यते॥देवमनुष्यादिनामरूपाभिमानराग लोभाद्यनुगुणबहिर्दुःखज्ञानप्रसरवज्जागरितावस्थजीवाविशिष्टःपरमात्मादेवमनुष्यादिनामरूपरागद्वेषलोभमोहाद्यौपाधिकबाह्याभ्यंतरा-

भिमानकालुष्यरहितः जीवशरीरकः सन्नात्मन्यंतर्भूतइत्यर्थ इति । "स्वाप्ययात् ।१।१। १०॥" इतिसूत्रेव्यासार्यैर्व्याख्यातत्वान्नानुपपत्तिः।अत्रत्वपिपूर्वस्येतेर्लयार्थस्यसकर्मकत्वात्स्वमपीतइतिद्वितीया

## तस्मादेनँ स्वपितीत्याचक्षते स्वँ ह्यपीतोभवति ॥

यस्मात्स्वस्मिंल्लीनोभवतितस्मात्स्वपितीतिलौकिका आचक्षते इत्यर्थः।अत्र यद्यपि ञिष्वप्शय इति धातोर्निष्पन्नः स्वपितिशब्दोनतु स्वशब्दोपपदादपीतेः।तथापिअशनायादिनिर्वचनवदर्थवादरूपमुपपद्यत इति द्रष्टव्यम् । तत्र जीवस्य परमात्मनि लयप्रतिपादनात्तेजोवन्नादिवज्जीवस्यापि तदुपादेयत्वात्तज्ज्ञानेनज्ञातत्वमुपपादितं भवति । अत्र वक्तव्यमुपनिषत्प्रकाशिकायामुक्तं तत्रैवद्रष्टव्यम् ।

## अन्नेन सोम्यशुंगेनापोमूलमन्विच्छाद्भिस्सोम्यशुंगेन तेजोमूलमन्विच्छ तेजसा सोम्यशुंगेन सन्मूलमन्विच्छ ॥

शुंगेन कार्येण कारणं जानीहीत्यर्थः ॥

## सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनास्सत्प्रतिष्ठाः ॥

अत्र प्रजाशब्देन सजीवं जगन्निर्दिश्यते सन्मूलाः सत्प्रतिष्ठा इति पदद्वयं सच्छब्दवाच्यब्रह्माधीनोत्पत्तिलयपरम् । प्रतिष्ठानिष्ठापर्यवसानं लय इति यावत् । सदायतना इति सदाधारत्वमुच्यते । अनेन जगतःशरीरत्वं फलितम् ॥ तत्कथमितिचेत् । इत्थम् ॥ उत्पत्तिलयहेतुत्ववाचिपदद्वयमध्यगतेन स्थितिहेतुत्ववाचिना सदायतना इतिपदेन स्थितिहेतुत्वरूपधारकत्वं सिध्यति । " एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिवी

विधृते तिष्ठत इति" तिष्ठतीतिस्थाधातूक्तस्थितेः प्रशासनेन धारणाधीनत्वावगमात्तस्य च प्रशाशनस्य "अंतः प्रविष्टः शास्ता जनानाम्" इत्यंतः प्रवेशपूर्वकत्वावगमात् सर्वशाखाप्रत्ययन्यायेनांतः प्रवेशशासनधारणानामन्यतमस्योक्तावपि इतरयोः फलितत्वात् । सदायतना इत्यनेन धारकत्वोक्तावप्यन्तः प्रविश्य शासनेन धारकत्वलक्षणात्मकत्वस्यफलितत्वाज्जगतः शरीरत्वं फलितम् । सन्मूलाः सोम्येमाः सर्वाःप्रजाः सत्प्रतिष्ठा इति द्वाभ्यां सदुपादानकत्वम् । सदायतना इत्यनेन सदंतर्यामिकत्वम् । उपादानोपादेयभावस्याभिन्ननिष्ठत्वात् । प्रजाशब्देनाचित्संसृष्टजीवमात्रपरामर्शेतस्यसदुपादानकत्वासंभवात्।प्रजाशब्देनापि प्रजाशरीरकं ब्रह्मैवोच्यते । सदायतना इत्यत्र सदंतर्यामिकत्वस्य शरीरभूतचिदचिन्मात्रनिष्ठत्वेन चिदचिच्छरीरकब्रह्मनिष्ठत्वाभावात् । सदायतना इति वाक्यानुषक्त प्रजाशब्देन शरीरभूतचेतनाचेतनमात्रमेवाभिधीयते । तथा सन्मूलाः सत्प्रतिष्ठाः इत्युपादानत्वप्रतिपादकवाक्ये विशिष्टस्यैवोपादानत्वात् सच्छब्देन सूक्ष्मचिदचिद्विशिष्टमेवोच्यते । सदायतना इत्यत्र विशिष्टस्य सतोंतर्यामित्वासंभावात् सच्छब्देन विशेष्यमात्रमेवाभिधीयते । एवं सुषुप्तौ सत्संपत्तिं जीवस्य प्रदर्श्य प्रमाणकालेपि सत्संपत्तिं दर्शयति ।

**अस्य सोम्य पुरुषस्य प्रयतोवाङ्मनसि संपद्यते मनःप्राणे प्राणस्तेजसि तेजः परस्यांदेवतायाम् ॥**

प्रयतः म्रियमाणस्येत्यर्थः । अत्र वाचः मनःप्रकृतिकत्वासंभवात् व्यापारोपरमहेतुभूतसंश्लेषविशेष एव वाचोमनसि लयः।मनःप्राणयोरपिताहृश एव।मनसि करणग्रामं प्राणेमनः पुरुषे च तं झटिति घटयन्भूतेष्वेनं परे चतमात्मनीत्युक्तरीत्याप्राणोजीवे संपन्नोजीवेन सहतेजश्शब्दोपलक्षितेषु सर्वेषुभूतेषुसंपन्नोभवति । ततः परं सुखदुः-

खोपभोगायासविश्रमाय सजीवानां भूतसूक्ष्माणांपरमात्मनि संपत्तिर्भवतीत्यर्थः ॥

सयएषोऽणिमा ॥

तादृशःसच्छब्दितः एषोणिमा अणुः दुर्विज्ञेयः मानांतरागोचर इत्यर्थः ॥

ऐतदात्म्यमिदꣳसर्वम् ॥

एष आत्मायस्यऐतदात्म्यंस्वार्थेष्यञ् ॥

तत्सत्यम् ॥

सजीवस्य जगतः सदात्मकत्वमेवसत्यंप्रामाणिकम् ॥

सआत्मा ॥

प्रमाणप्रतिपन्नत्वात्सच्छब्दितः स एतस्यात्मेत्यर्थः ॥

तत्त्वमसि श्वेतकेतो इति ॥

अत्रत्वंशब्देनाभिमुखश्वेतकेतुवाचिना पर्यवसानवृत्त्या तदंतर्यामिपरमात्माभिधीयते । शरीरवाचिशब्दानां शरीरिपर्यन्तत्वस्याकृत्यधिकरणन्यायसिद्धत्वात्संसारिणः श्वेतकेतोः नित्यमुक्तेन तच्छब्दार्थेन सच्छब्दितब्रह्मणाभेदासंभवात् । अत्र वक्तव्यमुपनिषत्प्रकाशिकायामुक्तंतत्रैवद्रष्टव्यम् ॥ एवमुक्तः श्वेतकेतुः, सुषुप्तिदशायां परमात्मनि संपन्नः स्वापानन्तरं तत उत्थायागतश्वेत् प्रातर्गृहादुत्थायागतस्य गृहे स्थितोस्मि गृहादागतोस्मीति प्रतिसंधानवत् सतिसंपन्नोस्मि ततआगतोस्मीति प्रतिसंधानप्रसंगात् नैतद्विश्रम्भणीयमिति मन्यमान, आह ॥

भूयएव मा भगवान् विज्ञापयत्विति ॥

सम्यङ्मामनुशाधीत्यर्थः । एवं प्रार्थितः पिता ।

तथा सोम्येति होवाच । यथा सोम्य नद्यः पुरस्ता-

त्प्राच्यः स्यन्दन्ते पश्चात्प्रतीच्यस्तास्समुद्रात्समुद्र मेवापियंति समुद्र एव भवंतिताः यथा तत्र न विदुरिय महमस्मीयमहमस्मीति एवमेवखलुसोम्येमाःसर्वाःप्र जाः सत आगत्य न विदुः सत आगच्छामह इति तइह व्याघ्रो वा सिँहो वा वृको वा वराहो वा कीटो वा पतं गोवा दँशोवा मशकोवा यद्यद्भवंति तत्तदा भवन्ति इति सएषोऽणिमैतदात्म्यमिदँसर्वं तत्सत्यं स आ त्मा तत्त्वमसिश्वेतकेतो इतिभूयएवमा भगवान्विज्ञाप यत्विति तथा सोम्येति होवाच ॥

यथा गंगाद्या नद्यः पूर्वदिक्प्रस्थिताः प्राङ्मुखतया समुद्रं यान्ति पश्चाद्देशेप्रवृत्ताः सिन्ध्वाद्याः नद्यः प्रत्यङ्मुखतया समुद्रंयान्ति पुनश्चताः समुद्रात्समुद्रं गच्छन्ति समुद्रपर्यंतदेशात् समुद्रमध्यं गत्वा समुद्रेणैकीभूतास्सत्य इयं गङ्गाहमस्मीयं यमुनाहमस्मीत्येवं प्रत्यभि ज्ञातुमसमर्था भवन्तीति तथा सुप्तोत्थिता अपि सत उत्थिता आगता इति न प्रत्यभिज्ञातुं समर्थाः । अपितु प्राचीनव्याघ्रादिमात्र भावमनुसंदधते । यद्यद्भवन्ति प्रजाः जाग्रद्दशायां यद्यद्व्याघ्रादित्वं प्राप्नुवन्ति तत्तद्व्याघ्रादित्वमा भवन्ति । आगत्य भवन्ति । सुषुप्ति स्थानात्परमात्मन आगत्य यथा पूर्वं व्याघ्रादिभावमनुसन्दधत इत्यर्थः । अनन्तरं प्रयाणदशायां जीवस्य नाशाभावः "अस्यसो-म्यमहतो वृक्षस्ययो मूलेऽभ्याहन्याज्जीवन् श्रवेत् यो मध्ये-ऽभ्याहन्याज्जीवन् श्रवेत् योग्रेऽभ्याहन्याज्जीवन् श्रवेत् जीवापेतं वावकिलेदं म्रियते न जीवो म्रियते" इति खण्डेन वर्णितः ॥

यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीयतं ततो विजने विसृजेत् सयथा तत्र प्राङ्वोदङ्वाधराङ्वाप्रध्मायीताभिनद्धाक्षआनीतोभिनद्धाक्षोविसृष्टः ॥

हे सोम्ययथालोके गन्धारेभ्यो जनपदेभ्यो निवद्धचक्षुषं कश्चित्पुरुषंचोरो गृहीत्वा विजने विसृजेत्सदिग्भ्रमोपेतः प्राङ्मुखोवा उदङ्मुखोवाअधोमुखोवा पिनद्धाक्ष एव तस्करैरानीत अभिनद्धाक्ष एव विसृष्ट इति विक्रोशेत् ॥

तस्य यथा अभिनहनं प्रमुच्य प्रब्रूयात् एतां दिशं गन्धारा एतांदिशंव्रजेतिसग्रामाद्ग्रामं पृच्छन् पण्डितो-मेधावी गन्धारानेवाभिसंपद्यते ॥

यथा कश्चित्कारुणिकस्तस्यबन्धनं मुक्त्वा उत्तरतोगन्धाराः एतांदिशं व्रजेत्युक्तो ग्रामाद्ग्रामान्तरं गच्छन् तैरूपदिष्टमार्गो मेधावी उक्तार्थाविस्मरणशीलः पण्डितः ऊहापोहक्षमधीयुक्तः यथा गन्धारा-नेव पुनरभिसंपद्यत इत्यर्थः ॥

एवमेवेहाचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्यइति ॥

एवमाचार्येण ब्रह्मात्मकस्त्वमसि।अतस्तदात्मकतया स्वात्मान-मनुसंधत्स्वेत्युपदिष्टस्सतदात्मकत्वमनुसन्धत्ते । एतादृशानुसन्धान निष्ठस्य तस्य तावानेव विलंबः यावत्प्रारब्धकर्मारब्धशरीरान्नविमो-क्ष्यते।तदनंतरंतु सद्रूपं ब्रह्म संपत्स्यते न विमोक्ष्येऽथसंपत्स्य इति पुरुषव्यत्ययश्छांदसः । केचित्तु तस्य तावदेवचिरमित्यत्र मे इत्य-

१ अत्र यद्यपि तैलङ्गनागराक्षरयोः पुस्तकयोरेवमेव पाठोदृश्यते तथापि अग्रिमपाठानुरोधादर्थानुरोधाच्च कैश्चित्कारुणिकैरित्येव पाठ उचित इति प्रतीयते ।

ध्याहारः।तस्यमे तावानेव विलंबः, यावत्कर्मभिर्नविमोक्ष्येअतः परं ब्रह्म संयत्स्ये इत्युपासकस्यानुसंधानप्रकारोनेन वाक्येनोच्यते इति वदंति ॥

तद्धास्यविजज्ञाविति विजज्ञाविति ॥

एवं नवकृत्वो बोधितः श्वेतकेतुरस्योद्दालकस्यवाक्यात्तद्ब्रह्मस्वरूपं विजज्ञौ ज्ञातवानित्यर्थः । व्यासार्योक्तरीत्योपासितवानित्यर्थः । द्विरुक्तिः सद्विद्या समाप्त्यर्था ॥

इति सद्विद्या समाप्ता ॥

---

आनन्दमयाधिकरणम् ॥ ६ ॥

आनन्दमयोभ्यासात् ॥ १ । १ । १३ ॥

परमतत्त्वहितपुरुषार्थप्रतिपादिकानन्दवल्ली प्रस्तूयते ॥

ब्रह्मविदाप्नोति परम् ॥

निरतिशयबृहत्वाश्रयवस्तूपासकः सर्वेभ्य उत्कृष्टं ब्रह्म प्राप्नोतीत्यर्थः "आवृत्तिरसकृदुपदेशात् ।४।१।१॥"इत्याधिकरणोक्तन्यायेन वेदनोपासनादिशब्दानामेकार्थत्वात् । ब्रह्मविदित्यत्रविच्छब्दोप्युपासनपरः तक्रतुन्यायेन प्राप्यस्यैवोपास्यत्वात् । " ब्रह्मविदाप्नोति परम् " इति परस्यब्रह्मणः प्राप्यत्वकथनात्तस्यैवोपास्यत्वमिति द्रष्टव्यम् ॥ अत्र ब्रह्मतद्वेदनं प्राप्तिः प्राप्यंचेति चतुष्टयमुक्तम् । किंतद्ब्रह्म कीदृशं तद्वेदनं कीदृशो प्राप्तिः कीदृशं च प्राप्यमित्याकांक्षायां मंत्रमुखेन विवरितुं मंत्रमवतारयति ॥

तदेषाभ्युक्ता ॥

तत् ब्रह्माभिमुखीकृत्य एषा ऋगध्येतृभिरुक्ता ब्राह्मणोक्तस्यार्थ-

---

१ यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतःप्रेत्य भवतीति श्रुतिसिद्धो यथाक्रतुन्यायः।
२ एतेन मंत्रव्याख्यानरूपत्वाद्ब्राह्मणभागस्य नवेदत्वमित्यनुमानं दयानन्देन तदीय वेदभाष्यस्य भूमिकायामुक्तं प्रत्युक्तम् । अत्र वैपरीत्यस्यापि दर्शनात् ।

स्य वैशद्यमनेन मंत्रेण क्रियत इत्यर्थः । एवमेव हि मांत्रवर्णिकसूत्रे भाषितम् ॥

सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान्सह ब्रह्मणा विपश्चितेति ।

जन्मादिसूत्रे यतोवा इमानि भूतानीत्यादिकारणवाक्येन प्रतिपन्नजगज्जन्मादिकारणस्य ब्रह्मणस्सकलेतरव्यावृत्तं स्वरूपमभिधीयते सत्यं ज्ञानमनन्तं ब्रह्मेति । तत्र सत्यपदं निरुपाधिकसत्तायोगि ब्रह्माह । तेन विकारास्पदमचेतनं तत्संसृष्टचेतनश्च व्यावृतः । नामान्तरभजनार्हावस्थान्तरयोगेन तयोर्निरुपाधिकसत्तायोगरहितत्वात्।ज्ञानपदं च नित्यासङ्कुचितज्ञानैकाकारमाह। तेन कदाचित्सङ्कुचितज्ञानत्वेन मुक्ताव्यावृत्ताः । अनन्तपदं देशकालवस्तुपरिच्छेदरहितंस्वरूपमाह।सगुणत्वात्स्वरूपस्य स्वरूपेण गुणैश्चानन्तत्वेन पूर्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणास्सातिशयस्वरूपस्वगुणा नित्या व्यावृत्ताः । विशेषणानां व्यावर्त्तकत्वादितिभाषितम् ॥ नन्वत्र ज्ञानपदस्य विषयावगाहिज्ञानत्वं प्रवृत्तिमितं चेत्स्वरूपस्याताहृत्त्वाऽज्ञानमित्यस्य ज्ञानगुणकमित्यर्थः पर्यवस्येन्नतु स्वरूपस्य ज्ञानत्वम् । स्वप्रकाशतारूपज्ञानत्वं प्रवृत्तिनिमित्तं चेत्स्वरूपस्य ज्ञानत्वमात्रं सिध्येन्नतु ज्ञानगुणकत्वम् । नचेष्टापत्तिः ।"तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत् । २ । ३।२९ ॥" इति सूत्रे यथा सत्यं ज्ञानमिति ब्रह्मणो ज्ञानगुणसारत्वाज्ज्ञानमितिव्यपदेशइतिभाष्यंविरुध्येतेतिचेत् ॥ उच्यते ॥ स्वप्रकाशत्वमेव प्रवृत्तिनिमित्तम् । तत्र ज्ञानत्वाश्रयत्वमसंकोचात् स्वरूपतो गुणतश्चसिध्यति ब्रह्मशब्दात्प्रतीयमानं बृहत्त्वं

१ अतएव स्वावच्छिन्नाश्रयत्व स्वावच्छिन्नाश्रयाश्रयत्व स्वावच्छिन्नजनकसंकल्पवत्त्वैतत्त्रितयसंबन्धेन परममहत्त्वत्त्ववत्वरूपब्रह्मत्वमेव ब्रह्मपदप्रवृत्तिनिमित्तमिति यादवाद्रिनिवासरसिकाः श्रीमदनन्तार्यवर्याः ब्रह्मशक्तिवादे ॥

यथा स्वरूपतो गुणतश्च सिध्यति तद्वदिति व्यासाचार्यैरुक्तम् । वस्तुतस्तु सत्यं ज्ञानमित्यस्यांतोदात्तत्वादर्शआद्यजंतत्वेन ज्ञानगुणत्वमेवार्थः । प्रज्ञानघनएवानन्दमय इतिश्रुत्यंतरात् ब्रह्मणो ज्ञानस्वरूपत्वमप्यस्तीति द्रष्टव्यम् । इहेदं नान्यत्रेति परिच्छेत्तुमशक्यत्वं देशापरिच्छेदः । इदमिदानीं नान्यदेति परिच्छेदायोग्यत्वं कालापरिच्छेदः । इदमिदं नेति परिच्छेदानर्हत्वलक्षणं सर्ववस्तुसामानाधिकरण्यार्हत्वं वस्त्वपरिच्छेदः। यद्वा वस्तुस्वभावतःपरिच्छेदो वस्तुपरिच्छेदः ।यथा तुल्याकारत्वेपि तुल्यपरिमाणत्वेपिदशवर्णस्वर्णापेक्षयाकलधौतादेरपकर्षस्तद्राहित्यंवस्त्वपरिच्छेदः । समाभ्यधिकराहित्यनिदानभूतैर्गुणैर्निरतिशयप्रकर्षोवस्त्वपरिच्छेद इत्युक्तंभवतीति व्यासाचार्य्यैर्व्याख्यातम् । "नान्तंगुणानां गच्छंति तेनानंतोयमुच्यते" इति स्मरणाद्गुणानन्त्यमनन्तशब्दार्थः । अत्र रूढिवशाद्देवताविशेषनिर्णयः ॥ नचानन्तपदस्य नारायणवाचिनः पुंल्लिगत्वं स्यादितिवाच्यम् ॥ इष्टापत्तेः। तस्य द्वितीयांतत्वेन पुंल्लिगत्वस्येष्टत्वात् । द्वितीयांतत्वाभावे च यो वेद निहितं गुहायामित्यत्र तच्छब्दाध्याहारप्रसंगात्।अनध्याहारेणोपपत्तावध्याहारस्यान्याय्यत्वात्। यदिचानन्तपदयौगिकार्थस्य त्रिविधपरिच्छेदराहित्यस्य नारायणादन्यत्राप्रसक्त्या श्रीपत्यादिशब्देष्विव न रूढिः कल्पनीयेत्युच्यते तदापि न नः क्षतिः । अत्र "सत्यं ज्ञानमनंतं ब्रह्म" इत्यनेन ब्रह्मशब्दार्थो विवृतः । हृदयगुहानिहितत्वप्रकारकज्ञानप्रतिपादकेन यो वेद निहितं गुहायाम्" इत्यनेन विच्छब्दार्थ उक्तः । "परमे व्योमन्सोश्नुते इत्यंशेन आप्नोतिशब्दार्थ उक्तः । "सर्वान्कामान्ब्रह्मणा सह विपश्चिता" इत्यनेन प्राप्यमुक्तम् । काम्यन्तइति कामाः कल्याणगुणाः । मुक्तस्य सर्वविषयविरक्तस्य तद्व्यतिरिक्तकाम्यान्तरासंभवात् । अथ "यइहात्मानमनुविद्य व्रजन्त्ये-

तांश्च सत्यान् कामान्" इत्यादौ कामशब्दस्य कल्याणगुणेष्वेव प्रयोगात्। विविधं पश्यंती चिद्यस्येति बहुव्रीहिः। निरुपाधिकानन्याधीनासंकुचितसर्वविषयकज्ञानवत्त्वं हि विपश्चित्वम्। अयं च गुणो नित्यमुक्तव्यावर्त्तकः। ब्रह्मापेक्षयापि तद्गुणानां फलदशायां प्राधान्यं प्रतिपादयितुं ब्रह्मणा सहेति निर्देशः "सहयुक्तेऽप्रधाने" इति हि पाणिनिस्मृतिः। नच भोग्यतायां गुणापेक्षया ब्रह्मणोऽप्राधान्यं दोषायेति शंक्यं "श्रियं त्वत्तोप्युच्चैर्वयमिह भणामः शृणुतराम्" इतिवत्परमात्मापेक्षयापि तत्कल्याणगुणानां भोग्यतातिशयपर्यवसायित्वेनैतादृशाप्राधान्यस्य गुणत्वेन दोषत्वाभावात्। अतएव हि पुत्रेण सहौदनं भुङ्क्ते इतिवद्भोक्तृसाहित्यपरत्वे ब्रह्मणोऽप्राधान्यप्रसंगात्। तत्परित्यज्य पयसा सहौदनंभुङ्क्ते इतिवद्भोग्यसाहित्यपरत्वमेवस्वीकृतम्। नात्रच पक्षे ब्रह्मणोऽप्राधान्यं दोषायेति भोग्यसाहित्यपक्षएव भगवता भाष्यकृता समाश्रितः॥ ननु "तेषामृग्यत्रार्थवशेन पादव्यवस्था" इति जैमिनिनार्थवशाधीनपादव्यवस्थात्वस्य ऋग्लक्षणतयोक्तत्वात्। सहइत्यस्य पादांतरस्थस्य ब्रह्मणेति पादांतरस्थेनान्वयो नसंभवति। ततश्च ब्रह्मणेति नसहयोगे तृतीया। अपित्वित्थंभूतलक्षणे तृतीया। सहेत्यस्ययुगपदित्यर्थः। सर्वान्कामान्युगपदनुभवति ब्रह्मणा। ब्रह्मभूतइतियावत्। अतएव स्कांदे "सोश्नुते सकलान्कामानक्रमेण सुरर्षभाः[1] विदितो ब्रह्मरूपेण जीवन्मुक्तो न संशयः" इत्युपबृंहितमितिचेन्न॥ तेषामृग्यत्रार्थवशेनेत्यस्योपलक्षणमात्रत्वात्। उपलक्षणपक्षमभ्युपगम्यैवतद्व्याख्यातृभिरप्यर्थवशेनवा वृत्तवशेनवा[2] पादव्यवस्थेतिव्याख्यातत्वादभियुक्तानांमंत्रप्रसिद्धिविषयत्वंमंत्रत्वमितिवत्। अभियुक्तानामृक्पदप्रसिद्धिविषयत्वमेव ऋक्त्वम्। ततश्च पादांतरस्थेनापि पादांतरस्थपदान्वयो युक्तः। ब्रह्मणेत्यस्येत्थं

---

१ सुरर्षभेतिसंबोधनम्। २ छन्दोवशेन।

भूतलक्षणत्वाश्रयणे ब्रह्मभूतइत्यर्थोपिनसंभवति श्वेतच्छत्रेण राजत इत्यादौ तथाऽदर्शनात्[1] । त्वदुक्तस्कांदवचनस्य पूर्वैस्संप्रतिपन्नैरनुदाहृतत्त्वाच्च भाष्यकृदुक्तएवार्थः । इतिशब्दो मंत्रसमाप्तिद्योतनार्थः ॥ सत्यंज्ञानमनंतमित्युक्तंवस्त्वपरिच्छेदलक्षणमानंत्यं सर्वोपादानत्वसर्वांतरत्वमुखेन प्रपंचयति ॥

तस्माद्वाएतस्मादात्मन आकाशस्संभूतः ॥

तस्मादित्यनेन ब्रह्मविदाप्नोति परमिति व्यवहितब्राह्मणोक्तं परामृश्यते।एतस्मादितिसत्यंज्ञानमित्यव्यवहितमंत्रोक्तंपरामृश्यते। ततश्च मंत्रब्राह्मणोक्तादात्मनआकाशः समुत्पन्न इत्यर्थः ॥

आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी ॥

अत्र तत्तेजऐक्षत ता आपऐक्षंतेति तेजः प्रभृतिष्वीक्षणादिश्रवणादाकाशवायुतेजआदिशब्दास्तत्तच्छरीरकपरमात्मपरा इति "तेजोतस्तथाह्याह २ । ३ । १० ॥" इत्यधिकरणे स्थितम् ॥

पृथिव्या ओषधयः ओषधीभ्योन्नम् । अन्नात्पुरुषः

पुरुषः शरीरमित्यर्थः ॥ शिष्टं स्पष्टम् ।

सवाएषपुरुषोन्नरसमयः ॥

अयंदेहः अन्नरसस्यपरिणामः । अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति योमध्यमस्तन्मांसमित्याद्युक्तरीत्या जाठराग्निपच्यमानान्नरससारांशनिर्वर्त्यमानमांसादिमयत्वाच्छरीरस्येतिभावः ॥

तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा ॥

तस्य देहरूपस्य पुरुषस्येदं प्रत्यक्षतोदृश्यमानमेवशिरः । बाहु-

१ अभेदादर्शनात् ।

द्वयं पक्षौ । अधस्तद्ग्रीवाया नाभेरूर्ध्वंपरिदृश्यमानोयंमध्यमोदेहभाग आत्मा"मध्यमंह्येषामङ्गानामात्मा"इतिश्रुतेः।धारकत्वेन प्रधानभूत इत्यर्थः। इदं नाभेरधस्तात्परिदृश्यमानं चरणद्वयं पुच्छवदाधारत्वात्पुच्छमित्यर्थः । अत्र पुरुषशब्दितमनुष्यपाण्यादेः पक्षत्वादिरूपणं प्रतिपत्तिसौकर्यार्थमितिद्रष्टव्यम् । तदप्येषश्लोकोभवति । तस्मिन्नेवार्थेब्राह्मणोक्ते अयं मंत्ररूपः श्लोको भवतीत्यर्थः॥

अन्नाद्वैप्रजाः प्रजायन्ते याः काश्चपृथिवीꣳश्रिताः।
अथोअन्नेनैवजीवन्ति अथैनदपियन्त्यंततः ॥

पृथिव्यां वर्तमानास्सर्वाः प्रजाअन्नादेवोत्पद्यंते उत्पन्नाश्चान्नेनैव जीवन्ति अन्तकाले तत्रैव लयं यान्तीत्यर्थः ॥

अन्नꣳहिभूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते॥

सर्वभूतोपकारकत्वादन्नमेवज्येष्ठम्। अतएवाशनायादिव्याधिनिवर्तकत्वात्तदेवसर्वौषधमुच्यतइत्यर्थः । ओषधीभ्योन्नमिति ओषधिपरिणामत्त्वं निमित्तीकृत्यान्ने प्रयुक्तमौषधिशब्दंभेषजत्वनिमित्तकतया श्रुतिर्व्यपदिशतीति द्रष्टव्यम् ॥

सर्वं वैतेऽन्नमाप्नुवन्तियेन्नंब्रह्मोपासते ॥

अन्ने ब्रह्मदृष्टिं कुर्वन्तः यावदन्नमपेक्षितं तावदन्नं प्राप्नुवन्तीत्यर्थः॥ ब्रह्मदृष्टिहेतुभूतं ब्रह्मसाम्यमाह ॥

अन्नꣳहिभूतानाज्येष्ठम् । तस्मात्सर्वौषधमुच्यते ॥

ब्रह्मणोपि सकलरोगनिवर्तकतया सर्वभेषजत्वस्य सत्त्वादितिभावः ॥

अन्नाद्भूतानिजायन्ते । जातान्यन्नेनवर्धन्ते ॥

जननवृद्धिहेतुत्वमन्नब्रह्मणोस्समामित्यर्थः ॥ अन्नशब्दस्य निर्वचनमाह ॥

अद्यतेऽत्तिचभूतानि। तस्मादन्नंतदुच्यत इति॥

जीवनदशायां स्वयमद्यते नाशदशायामलभ्यमानतया वा विपरीतपरिणामहेतुतया वा "अन्नंमृत्युंतमुजीवातुमाहुः" इति श्रुत्युक्तरीत्याऽत्तृत्वलक्षणं संहर्तृत्वं द्रष्टव्यम्। एवमाकाशादेरन्नमयशब्दितस्थूलशरीरपर्यंतस्य ब्रह्मैवात्मा उपादानंचेत्युक्त्वा स आत्मा-कइत्यपेक्षायामानन्दमयएव सआत्मेति दर्शयितुं स्थूलारुन्धतीन्यायेन स्थूलदेहान्तर्वर्तिनंप्राणमयमात्मत्वेनदर्शयति। सूक्ष्मामरुन्धतींदर्शयितुं प्रवृत्तः प्रथमतएव सूक्ष्मायाअरुन्धत्याः प्रदर्शनासंभवं पर्यालोच्य तत्समीपवर्तिस्थूलतारकामियमेवारुन्धतीति प्रदर्शयति। तस्यां स्थूलतारकायां श्रोतुररुन्धतीत्वबुद्धौ दृढायां तत्समीपवर्तिनीं वस्तुतोरुन्धतीं सूक्ष्मामियमेवारुन्धतीति प्रदर्शयति सोयं (स्थूलारुन्धतीन्यायः)॥

तस्माद्वाएतस्मादन्नरसमयात्। अन्योंतरआत्मा प्राणमयः॥

देहान्तर्वर्ती देहादन्यो यः प्राणमयः सएवात्मा आत्मनआकाशः संभूतइति आकाशादिसर्वोपादानत्वेन तदन्तर्यामित्वेन च निर्दिष्ट आत्मेत्यर्थः। भगवताभाष्यकृता "अन्वयादितिचेत्स्यादेवावधारणात् ३।३।१७॥"इति सूत्रेऽन्नमयादन्तरे प्राणमये प्रथमं परमात्मबुद्धिरवतीर्णा। तदनन्तरं च प्राणमयादन्तरे मनोमये ततो विज्ञानमये तत आनंदमयेइतिभाषितम्। अत्र पंचवृत्तेः प्राणस्य प्राणनवृत्तिप्रचुरत्वात्प्राणमयत्वम्॥

तेनैषपूर्णः॥

तेन प्राणमयेनात्मना अयमन्नरसमयःपूर्णइत्यर्थः। व्याप्तइतियावत्। सर्वस्यापि देहस्य प्राणव्याप्तत्वादितिभावः॥

स वा एष पुरुषविध एव ॥

प्राणमयोपि पुरुषविधः पुरुषाकृतिरेवेत्यर्थः ॥ हस्तपादादिमत्त्वेनपुरुषविधत्वभ्रान्तिंव्युदस्यति ॥

तस्यपुरुषविधताम् । अन्वयं पुरुषविधः ॥

तस्यान्नमयस्य पुरुषविधत्वमनुकृत्यप्राणमयोपिपुरुषविधइत्यर्थः । ततश्चतद्वदेवशिरःपक्षपुच्छादिमत्तया पुरुषविध इत्यर्थः ॥

तस्यप्राणएवशिरः। व्यानोदक्षिणः पक्षः अपानमु(उ) त्तरः पक्षः ॥

स्पष्टोर्थः ॥

आकाशआत्मा ॥

" यथाकाशस्थितोनित्यंवायुस्सर्वत्रगोमहान् " इतिस्मृत्युक्तरीत्यावायुविकारभूतप्राणापानादिधारकत्वादाकाशस्यात्मत्वम् ॥

पृथिवीपुच्छंप्रतिष्ठा ॥

पृथिव्यामाकाशस्यप्रतिष्ठितत्वात्तस्याःपुच्छत्वम् ॥

तदप्येषश्लोकोभवति । प्राणंदेवाअनुप्राणन्तिमनुष्याःपशवश्चये ॥

प्राणमनुप्राणन्ति प्राणाधीनजीवना इत्यर्थः ॥

प्राणोहिभूतानामायुः । तस्मात्सर्वायुषमुच्यते ॥

यस्मात्सर्वेषांभूतानांयावदस्मिञ्छरीरेप्राणोवसति तावदायुरिति प्राणस्योच्छ्वसननिश्वसनादिलक्षणस्यसर्वभूतायुर्हेतुत्वम् । अतः प्राणएवसर्वेषामायुरित्युच्यतइत्यर्थः ॥

सर्वमेवतआयुर्यन्ति । येप्राणंब्रह्मोपासते ॥

एवंलक्षणेप्राणेब्रह्मबुद्धिंकुर्वन्तः सर्वमायुः प्राप्नुवंतीत्यर्थः । एवं

प्राणमये आकाशाद्यन्नमयान्तान्तरात्मत्वबुद्धिमवतार्य तांबुद्धिंनिवर्तयति ॥

तस्यैषएवशारीर आत्मा । यः पूर्वस्य ॥

पूर्वस्यान्नमयस्य य आत्माएषएव तस्य प्राणमयस्याप्यात्मेत्यर्थः। शारीरः शरीरप्रतिसंबन्ध्यात्मेत्यर्थः । अनेनात्मशब्दस्यस्वरूपार्थत्वभ्रांतिर्व्युदस्ताभवति । ततश्चान्नमयप्राणमयावेकात्मकौनत्वन्नमयस्य प्राणमयआत्मेत्यर्थः ॥ तर्ह्यन्नमयप्राणमययोः क आत्मा-इत्याकांक्षायामाह ॥

तस्माद्वाएतस्मात्प्राणमयात् । अन्योन्तरआत्मा-मनोमयः ॥

अत्र मनोमयइत्यत्रप्राचुर्यार्थेमयट् मनोबुद्ध्यहंकारचित्ताख्यान्तःकरणवृत्तिषु मनोवृत्तेःप्रचुरत्वात् ॥

तेनैषपूर्णः । सवाएषपुरुषविधएव । तस्यपुरुषविधताम् । अन्वयंपुरुषविधः ॥

पूर्ववदर्थः ॥

तस्य यजुरेवशिरः ॥

तस्यान्तःकरणस्य यजुर्वेदविषयज्ञानजनकमनोव्यापारश्शिरइत्यर्थः । मुख्यार्थस्य यजुर्वेदस्य मनस्संबंधाभावेन मनसश्शिरस्त्वरूपणासंभवादितिद्रष्टव्यम् । एवमुत्तरत्रापि ॥

ऋग्दक्षिणः पक्षः।सामोत्तरः पक्षः।आदेश आत्मा ॥

इदं कुरु इदंमाकार्षीरितिविधिनिषेधरूपं रहस्यानुशासनमादेशइत्यर्थः। तत्र तज्जन्यज्ञानहेतुभूतान्तःकरणवृत्तिरादेशशब्देनोच्यते॥

अथर्वांगिरसः पुच्छंप्रतिष्ठा ॥

अथर्वांगिरोभिर्दृष्टामंत्राः प्रतिष्ठाहेतुभूतं पुच्छमित्यर्थः। अत्रापि अथर्वांगिरइशब्दः तज्जन्यज्ञानहेतुभूतमनोव्यापारपरः ॥

तदप्येषश्लोकोभवति। यतोवाचोनिवर्त्तन्ते। अप्राप्यमनसासह। आनन्दंब्रह्मणो विद्वान्। न बिभेति कदाचनेति ॥

यस्माद्ब्रह्मानन्दाद्वाङ्मनसे इयत्तालक्षणं पारमप्राप्य निवर्तेते तादृशं ब्रह्मानन्दं विद्वान् "दृश्यतेत्वग्र्ययाबुद्ध्या" मनसातुविशुद्धेन" इत्युक्तरीत्या शुद्धेन मनसा ज्ञात्वा कदापि न बिभेतीत्यर्थः। अत्र ब्रह्मानंदस्य विशुद्धमनोगोचरत्वप्रतिपादकत्वादस्य श्लोकस्य मनोविषयत्वमस्तीतिद्रष्टव्यम् ॥

तस्यैषए वशारीरआत्मा। यः पूर्वस्य ॥

पूर्वस्य प्राणमयस्य आत्मा सएवमनोमयस्याप्यात्मेत्यर्थः। एवंचान्नमयप्राणमयमनोमयानामेक आत्मेत्युक्तं भवति ॥ सकइत्यपेक्षायामाह ॥

तस्माद्वाएतस्मान्मनोमयादन्योन्तरआत्माविज्ञानमयः ॥

अत्र विज्ञानमयो जीवः। नबुद्धिमात्रं मयट्प्रत्ययेनव्यतिरेकप्रतीतेः ॥

तेनैषपूर्णः। सवाएषपुरुषविधएव। तस्यपुरुषविधताम्। अन्वयंपुरुषविधः ॥

पूर्ववदर्थः ॥

तस्य श्रद्धैवशिरः। ऋतंदक्षिणःपक्षः। सत्यमुत्तरःपक्षः॥

अत्र श्रद्धाऋतसत्यशब्दाः ज्ञानविशेषपराः ॥

योगआत्मा ॥

" ब्रह्मणेत्वामहस ॐ " इत्यात्मानंयुंजीतेतिविहितज्ञानविशेषो योगशब्देनोच्यते ॥

महः पुच्छंप्रतिष्ठा ॥

योगविरोधिनिरसनसामर्थ्यलक्षणंमहः पुच्छमित्यर्थः । एतेषांश्रद्धादीनामात्मगुणत्वेन प्रसिद्धत्वात्तत्तदवच्छिन्नमात्मस्वरूपं शिरःपक्षपुच्छादिमत्तयाप्रतिपाद्यतेइति द्रष्टव्यम् । अतः स्वस्मादनतिरिक्तैः स्वावयवैश्शिरःपक्षपुच्छादिरूपणपरत्वात्प्रकरणस्येतिभाष्यस्य न विरोधः ॥

तदप्येषश्लोकोभवति ॥ २ ॥ विज्ञानंयज्ञं तनुते । कर्माणि तनुतेपिच ॥

अत्र विज्ञानमयशब्दनिर्दिष्टोजीवोविज्ञानशब्देनोच्यते । आत्मस्वरूपस्य स्वप्रकाशतयाज्ञानैकनिरूपणीयत्वेनच विज्ञानशब्देनाभिधानसंभवात् । "कृत्यल्युटोबहुलम् ३।३।११३॥" इति जानातीत्यर्थेकर्तरिल्युडाश्रीयते । नन्द्यादित्वंवाश्रित्य "नन्दिग्रहि ३।१।१३४॥इत्यादिनाकर्तरिल्युःआश्रीयते ।तेन केवलविज्ञानमात्रपरामर्शेयज्ञं तनुतेकर्माणि तनुतेपिचेति प्रतिपादितवैदिकलौकिककर्मकर्तृत्वासंभवादन्तर्यामिब्राह्मणे " यआत्मनितिष्ठन्निति माध्यंदिनपाठगतात्मशब्दस्थानेयोविज्ञाने तिष्ठन्निति काण्वपाठदर्शनाद्विज्ञानशब्दोजीवात्मपरः ॥

विज्ञानं देवास्सर्वेब्रह्मज्येष्ठमुपासते ॥

सर्वेदेवा विज्ञानं जीवस्वरूपमेव प्रधानशब्दाभिलप्यादचेतनाद्ब्रह्मणोज्येष्ठं[1]प्रजापतिविद्योक्तरीत्याउपासतइत्यर्थः ॥

विज्ञानं ब्रह्मचेद्वेद तस्माच्चेन्न प्रमाद्यति । शरीरेपाप्मनोहित्वासर्वान्कामान्समश्नुतइति ॥

१ ममयोनिर्महद्ब्रह्मेत्युक्तत्वेनब्रह्मणः प्रधानादित्यर्थः ।

यस्तुजीवरूपं ब्रह्मवेदतस्माच्चजीवादन्तिमप्रत्ययपर्यन्तंनप्रमाद्य तिचेच्छरीरे पाप्मनोहित्वा देहेवर्त्तमानएव विनष्टाश्लिष्टपूर्वोत्तराघः सर्वान्कामान्समश्नुते ॥

तस्यैष एव शारीर आत्मा । यः पूर्वस्य।तस्माद्वाए तस्माद्विज्ञानमयादन्योन्तर आत्मा आनन्दमयः।तेनै षपूर्णः।सवाएवपुरुषविधएव।तस्यपुरुषविधताम् ।अन्व यंपुरुषविधः । तस्यप्रियमेवशिरः । मोदोदक्षिणः पक्षः। प्रमोदउत्तरःपक्षः । आनन्दआत्मा।ब्रह्मपुच्छंप्रतिष्ठा ॥

इष्टवस्तुदर्शनजन्यं सुखंप्रियम्। तल्लाभजन्यं सुखंमोदः।लब्धस्यो पभोगजन्यं सुखंप्रमोदः।सुखातिशयआनन्दः ॥नच मध्यमकायत्वेन रूपितस्यानन्दस्य पुच्छत्वेन रूपितस्यब्रह्मणश्च भेदाभावेन तस्यै- वात्मत्वेनपुच्छत्वेन च रूपणं कथमितिवाच्यम्॥एकस्यैवब्रह्मणोब्र- ह्मत्ववेषेणपुच्छत्वम्, आनन्दत्ववेषेणात्मशब्दितमध्यकायत्वमित्यु- पपत्तेः॥नचानन्दरूपब्रह्मस्वरूपस्य कथमानन्दप्रचुरलक्षणमानन्दम यत्वमानन्दस्यचानन्दप्रचुरत्वाभावादितिवाच्यम् ॥ आनन्दस्वरूप- स्यैव ब्रह्मणः प्रियमोदप्रमोदशब्दवाच्याशिरःपक्षतादिरूपितधर्मभू- तानन्दमयत्ववत्तस्याप्युपपत्तेः । अत्र पूर्वेष्वन्नमयादिषु चतुर्षु पर्यायेष्वनिरूपितस्यब्रह्म१णोवयवत्वस्यास्मिन्नानन्दमयपर्याये निरू- पणंब्रह्मविदाप्नोतिपरमित्युपक्रांतस्यब्रह्मोपदेशस्यानन्दमयपर्यायेस- मापनमितिज्ञापनार्थमितिद्रष्टव्यम् । अतोत्रानन्दमयएवप्रक्रांतंब्रह्म॥

तदप्येषश्लोकोभवति॥२॥असन्नेव सभवति।असद्ब्र- ह्मेतिवेदचेत्।अस्तिब्रह्मेतिचेद्वेद।संतमेनंततोविदुरिति।

पूर्वेषु चतुर्षु पर्यायेषूदाहृतानांश्लोकानां पुच्छवद्विषयत्वदर्श-

१ ब्रह्मरूपपुच्छत्वरूपस्येत्यर्थः ।

नादयमपिश्लोकः पुच्छवदानन्दमयविषयकएव । नतुब्रह्मपुच्छमिति-निर्दिष्टतदेकदेशविषयः । ततश्चब्रह्मशब्देनानन्दमयएवोच्यते । आनन्दमयसदसत्त्वज्ञानान्मोक्षसंसारौभवतइत्यर्थः ॥ आनन्दमयरूपस्यब्रह्मणः आकाशादिविज्ञानमयान्तपदार्थान्तर्यामितयानिर्दिष्टस्याप्यात्मान्तरमस्तिकिमितिशङ्कांव्युदस्यति ॥

तस्यैष एवशारीरआत्मा । यः पूर्वस्य ॥

पूर्वस्यआकाशादिविज्ञानमयान्तपदार्थस्यात्मभूत एष आनन्दमयआत्मा । तस्यानन्दमयस्यात्मेत्यर्थः । ततश्चानन्यात्मत्वमुक्तंभवति ॥ नचपूर्वेषु पर्यायेषु तस्यैष एव शारीर आत्मेत्यस्यानन्यात्मत्वप्रतिपादकत्वादर्शनादस्मिन्पर्यायेतदाश्रयणेऽर्थवैरूप्यंस्यादिति शंक्यम् ॥ पूर्वेषु पर्यायेष्वनुक्तस्यैवब्रह्मावयवत्वस्येहनिरूपणात्तस्माद्वाएतस्मादानन्दमयादन्योन्तरआत्मेतिनिर्देशाभावाच्च एतत्पर्यायगतस्यतस्यैषएवशारीरआत्मेत्यस्यानन्यात्मत्वमेवार्थः ॥ आनन्दमयब्रह्मप्रतिपादनानन्तरंब्रह्मविदाप्नोति परमित्युपक्रमाभिहितप्राप्तिविशदीकरणार्थंप्रश्नानुपक्षिपति ॥

अथातोनुप्रश्नाः । उताविद्वानमुंलोकंप्रेत्यकश्चनगच्छतीति । आहोविद्वानमुंलोकंप्रेत्यकश्चित्समश्नुता३इ ॥

पूर्वप्रतिपादनस्यबुभुत्साहेतुत्वमतः शब्देनोच्यते । उतेति-निपातस्य च्छांदसोदीर्घः । अथासपत्नानितिवदविद्वानितिपदे सतिहि आद्युदात्तत्वंस्यात् । तत्पुरुषेतुल्यार्थेतिस्मरणात् । अन्तोदात्तंचेदंपदम् । उत विद्वानितिच्छेदः । अविप्रकृष्टहृदयादिस्थानस्थमनवच्छिन्नंब्रह्मोपासिनोविद्वान्किमितः प्रेत्यामुंलोकंपरमेव्योमन्नित्युक्तंलोकं गच्छतीत्येकः प्रश्नः । उतगत्यनपेक्षमि-

हैवब्रह्माप्नोतीत्यर्थसिद्धः प्रश्नः। आहोविद्वान्समश्नुतइतिभोक्तृत्वंविवक्षितम्। अयमर्थः कश्चिदहं ग्रहेणोपासीनोपि विद्वानमुंलोकं गत्वाकिंसमश्नुते भोग्यभूतब्रह्मानुभवतीत्येकः प्रश्नः। उत ब्रह्मस्वरूपेणैकीभवतीत्यर्थसिद्धः प्रश्नः। एवं शास्त्रवैविध्यमूलागतिविशेषस्वरूपभेदसदसद्भावविषयाः प्रश्नाः बहुवचनेनविवक्षिताः। एतत्सर्वंव्यासाचार्यैः "उपासात्रैविध्यात् ।१।१।१३॥" तिसूत्रेस्पष्टमुक्तम्॥ एतान्प्रतिवक्तुं जगत्कारणत्वौपयिकगुणविशिष्टस्यैवब्रह्मणः प्राप्यत्वादिज्ञापनायाह॥

सोकामयतबहुस्यांप्रजायेयेति॥[१]

सआनन्दमयआत्मा देवमनुष्यादिरूपेण बहुस्यां तदर्थमाकाशादिभूतरूपेण प्रजायेयेतिव्यष्टिसमष्टिरूपचेतनाचेतनविषयसंकल्पमकुरुतेत्यर्थः॥

सतपोऽतप्यत॥

सपरमात्मा स्रष्टव्यालोचनरूपं तपः कृतवानित्यर्थः। तपआलोचनइतिहिधातुः॥

सतपस्तप्त्वा, इदंसर्वमसृजत। यदिदंकिंच, तत्सृष्ट्वातदेवानुप्राविशत्॥

ननुसर्वदासर्वव्याप्तस्य ब्रह्मणः कोसौसृष्टिकालानुप्रवेश इति-चेत्॥ उच्यते॥ गोजठरेगतवत्सवत्सर्वव्याप्तस्यब्रह्मणः प्रत्येकंसर्ववस्तुषु पुष्कलप्रतीत्यर्हस्थितिविशेषएवानुप्रवेशः। अनेन "सत्यं ज्ञानमनन्तंब्रह्म योवेदनिहितं गुहायाम्" इत्यत्रोक्तमनन्तस्य ब्रह्मणोहृदयगुहानिहितत्वमुपपादितंभवति॥

---

१ नन्वत्र तदैक्षतेत्यत्र च जननानंतरमेव बहुभवनस्य संभवात् विपरीतनिर्देशोऽनुचितइति-चेत्। न॥अव्यापारेतथानियमसत्त्वेपिघटंकरिष्यामीतिमृदमाहरिष्यामीतिसंकल्पेतादृश विपरीतनियमस्यैवसत्त्वेनदोषाभावात्। स्पष्टंचैतच्छ्रुतप्रकाशिकारण्यकांडैकत्रिंशसर्गभूषणादौ।

तदनुप्रविश्यसच्चत्यच्चाभवत् ॥

सच्छब्देननिर्विकारतया सततैकरूपश्चेतन उच्यते। त्यच्छब्देन पूर्वपूर्वावस्थात्यागविकारास्पदमचेतनमुच्यते । ब्रह्मैवचेतनाचेतन नामरूपभाग्भवतीत्यर्थः ॥ ननु ब्रह्मण एवसर्वोपादानतया सर्वभावे विकारास्पदत्वंस्यादित्याशंक्याह ॥

निरुक्तंचा निरुक्तंच, निलयनंचानिलयनंच ॥

जातिगुणक्रियावत्तयाजातिगुणक्रियाभिधायिशब्दवाच्यमचेतनं निरुक्तम् । जातिगुणादिशून्यचेतनजातमनिरुक्तम् । एता भूत मात्राः प्रज्ञामात्रास्वर्पिताइत्युक्तरीत्याऽचेतनवर्गाधारभूतं चेतनजा तंनिलयनम् । आश्रितमचेतनजातमनिलयनम् ॥

विज्ञानंचावि ज्ञानंच ॥

अजडस्वरूपंजडस्वरूपंच ॥

सत्यंचानृतंच सत्यमभवत् ॥

निर्विकारतयासत्यत्वंचेतनस्य।इतरस्यत्वतथात्वम् । ततश्चनिरुक्त त्वानिरुक्तत्वनिलयनत्वानिलयनत्वविज्ञानत्वाविज्ञानत्वयुक्तसत्या नृतशब्दितचेतनाचेतननामरूपभाग्भवदपि ब्रह्म सत्यमेवाभवत् । अजहन्निर्विकारत्वलक्षणस्वस्वभावमेवाभवदित्यर्थः ॥

यदिदंकिं च, तत्सत्यमित्याचक्षते ॥

यस्माच्चेतनाचेतनात्मकवर्गानुप्रविष्टतया सत्यशब्दितस्य ब्रह्म-णआत्मत्वमतएव सर्वमपिचेतनाचेतनात्मकंजगच्छास्त्रदृष्टिमन्तः पुरुषाः पराशरादयो"हरेर्नकिंचिद्व्यतिरिक्तमस्ति ज्योतींषिविष्णुर्भु-वनानिविष्णुः" इत्याचक्षतइत्यर्थः ॥

तदप्येषश्लोकोभवति ॥

स्पष्टोर्थः ॥

**असद्वा इदमग्रआसीत् । ततोवैसदजायत ॥**

इदंस्थूलचेतनाचेतनशरीरकं ब्रह्मानभिव्यक्तनामरूपंब्रह्म[1]सृष्टेः प्रागासीत् । तस्मादिदं जगदभिव्यक्तनामरूपमभवदित्यर्थः ॥ नन्वसच्छब्दितस्य ब्रह्मण उपादानत्वे कर्त्रैतरमपेक्षितं निमित्तोपादानयोर्भेदावश्यंभावादित्याशंक्याह ॥

**तदात्मानꣳस्वयमकुरुत ॥**

आत्मानमेवोपादानत्वेन स्वीकृत्य स्वयमेवाकुरत ॥

**तस्मात्तत्सुकृतमुच्यतइति ॥**

यस्मात्स्वयमेवस्वस्वकार्यम्।अतएव ब्रह्मसुष्टुकृतंकार्यंयस्यतत्सुकृतम् । कार्यस्यसौष्ठवंचानतिक्लेशरूपत्वम् । स्वभिन्नस्यकार्यस्य निर्माणेहि क्लेशप्रसक्तिः । ततश्चाक्लिष्टकार्यंब्रह्मेति "निश्वसितमेतन्महतोभूतस्य" इत्यादिश्रुतयोवदन्तीत्यर्थः । भवतु तत्सुकृतंतस्योपास्यत्वप्राप्यत्वयोः किमायातमित्यत्राह ॥

**यद्वैतत्सुकृतम् । रसोवैसः ॥**

सुकृतमिति निर्दिष्टब्रह्मरसः आनन्दः ॥

**रसꣳह्येवायंलब्ध्वानन्दीभवति ॥**

तल्लाभादस्यानदित्वम्।ततश्चतस्यानन्दत्वात् प्राप्यत्वोपास्यत्वे युक्तइतिभावः ॥ तदेवोपपादयति ॥

**कोह्येवान्यात्कः प्राण्यात्। यदेष आकाश आनन्दो नस्यात् । एषह्येवानन्दयाति ॥**

यद्ययमपरिच्छिन्नानन्दरसः परमात्मा नस्यात्सांसारिकमापवर्गिकंचसुखंकः प्राप्नुयात् । अतएषएवानंदयाति । अतस्तस्यसर्वविधानन्दहेतुत्वात्तस्यप्राप्यत्वमस्तीतिभावः ॥

१ अत्र तैलंगनागराक्षरयोः पुस्तकयोर्दृश्यमानमपि ब्रह्मपदमधिकमितिप्रतीयते ।

**यदाह्येवैषएतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयंप्रतिष्ठांविन्दते ॥ अथसोऽभयंगतोभवति ॥**

अदृश्ये चक्षुरादिग्रहणानर्हे आत्म्यं व्याप्यं शरीरमित्यर्थः । अनात्म्येऽशरीररूपइत्यर्थः । अतएवानिरुक्ते जातिगुणादिवाचिदेवादिपदावाच्ये।अनिलयने आधारशून्ये।अभयं अभयाय । नाव्ययीभावादितिचतुर्थ्या अम्भावः । अर्थाभावेयदव्ययमित्यव्ययीभावसमासः । अभयसाधनभूतांप्रतिष्ठां निरंतरस्मृतिलक्षणांनिष्ठांयोविन्दतेलभते स अभयंप्राप्नोति । अत्र व्यासाचार्य्यैः "अदृश्यइत्यचिद्व्यावृत्तिः । अनात्म्यइतिबद्धव्यावृत्तिः । सहिपरमात्मनाव्याप्यः ॥ यद्वा आत्म्यंव्याप्यंकर्मकृतशरीरंतद्रहितोऽनात्म्यः । अनिरुक्तइतिमुक्तव्यावृत्तिः । सहिबद्धावस्थायांदेवादिशरीरशब्दैरुक्तः । अनिलयनइतिनित्यमुक्तव्यावृत्तिः । तेषांभगवानाधार" इत्युक्तम् ॥ एवं विहितायाः प्रतिष्ठायाविच्छेदेऽनर्थंदर्शयति ॥

**यदाह्येवैषएतस्मिनुदरमंतरं कुरुते । अथतस्यभयंभवति ॥**

एष उपासकः एतस्मिन्परमात्मनि ध्यानस्यांतरंविच्छेदंदरमल्पमंतरमपि यः कुरुते तस्य भयंभवतीत्यर्थः । पूर्ववाक्येप्रतिष्ठाशब्देन निरन्तरध्यानवाचिनाध्यानगतनैरन्तर्यस्याभिहितत्वादत्रान्तरशब्देनापितस्यैवध्यानगतनैरन्तर्यस्य विरोधिनोध्यानविच्छेदस्य ग्रहणमुचितम् । नतुपरोक्तरीत्या "ब्रह्मण्यन्तरंभेदं यः कुरुते जानातीत्यर्थः" उचित इति द्रष्टव्यम् ।वस्तुतस्तु ब्रह्मैक्यवादिनामस्माकं ब्रह्मणि नानात्वनिषेधो नप्रतिकूलः । अस्माभिर्नानाब्रह्मवादस्यानभ्युपगमात् । तथापि प्रकरणानुगुण्यादस्मदुक्त एवार्थ उचित इति द्रष्टव्यम् ॥ किंभयं तत्राह ॥

तत्त्वेवभयंविदुषोमन्वानस्य ॥

विदुषोब्रह्मोपासननिष्ठस्यतदतिरिक्तविषयस्पृहया निरंतरमननमकुर्वतस्तदेवामननं भयम् । नहितदपेक्षयाऽन्यद्भयमस्ति । उक्तं च महर्षिभिः "यन्मुहूर्तंक्षणंवापिवासुदेवो न चिंत्यते । साहानिस्तन्महच्छिद्रंसाभ्रांतिस्साचविक्रिया ॥ १ ॥ वरंहुतवहज्वालापंजरांतर्व्यवस्थितिः ॥ नशौरिचिंताविमुखजनसंवासवैशसम् ॥ ॥ २ ॥ इति ॥

तदप्येषश्लोकोभवति ॥ ५ ॥ ७ ॥ भीषास्माद्वातः पवतेभीषोदेतिसूर्य्यः । भीषास्मादग्निश्चेंद्रश्चमृत्युर्धावतिपंचमइति ॥

अग्नींद्रसूर्यप्रमुखास्सर्वेपि देवप्रवराः परमात्मशासनातिवृत्तौ किं भविष्यतीतिभीत्या स्वस्वकर्मसु जागरूकाभवंति । अतश्चब्रह्मव्यतिरिक्तंकृत्स्नमपिपदं दुःखोदर्कत्वादनर्थरूपमेव । अतश्च तादृशपदकामनया मननविच्छेदस्यात्यंतभयावहत्वात्ततोनभयंकिंचिदस्तीत्यर्थः॥ एवं ब्रह्मवेदनस्य जगत्कारणत्वतदौपयिकसार्वज्ञादिगुणविशिष्टविषयकत्वमविच्छिन्नत्वं च विधाय प्राप्यस्यानन्दमयस्यब्रह्मण आनन्दमयशब्दप्रवृत्तिनिमित्तमानन्दप्राचुर्यंदर्शयति ॥

सैषानन्दस्यमीमाꣳसाभवति ॥

वक्ष्यमाणानन्दविषयविचारोभवतीत्यर्थः ॥

युवास्यात्साधुयुवाध्यायकः आशिष्ठोदृढिष्ठोबलिष्ठः । तस्येयंपृथिवीसर्वावित्तस्य पूर्णास्यात् । सएकोमामानुषआनन्दः । श्रोत्रियस्यचाकामहतस्य ॥

अत्रव्यासाचार्यैः।साधुयुवाध्यायकः साधु यथाविधि ।सम्यक्संप्रदायसिद्धतयास्वरवर्णादिभ्रंशरहितंवा युवशब्देन प्रत्यग्रत्वंविवक्षितम्।

अविस्मरणान्नित्यनवं यथा तथा अध्ययनवानित्यर्थः।यद्वा स्वसमवयस्कानांसर्वेषामध्यायकअध्यापकः। तदधिकज्ञानइत्यर्थः। आशिष्ठः आशुतरक्रियः। यद्वाऽशनक्षमः अरोगइत्यर्थः। यद्वाआशीर्वादविषयभूतः।सर्वानुरञ्जकइत्यर्थः।"सर्वान्देवान्नमस्यंति"इतिवत्।बलिष्ठोमनोबलवान्। द्रढिष्ठइतिशरीरबलस्योक्तत्वात् । यद्वा द्रढिष्ठःदृढतरः। सत्त्वव्यवस्थितस्वभावइत्यर्थः। बलिष्ठः शारीरमानससर्वविधबलवान्। वित्तस्यपूर्णावित्तेनपूर्णा।'पूरणगुणसुहितार्थ०२।२।११।।'इति षष्ठ्या अनुज्ञानात्। एवंगुणसमुदायंविभूतिपौष्कल्यंचोक्त्वा"सएकोमानुष आनन्दः"इतिश्रुत्यातस्यैवानन्दत्वमुक्तम्।नचज्ञानभिन्नस्यगुणविभूत्यादेः कथमानन्दत्वमितिशंक्यम्। अनुकूलत्वंह्यानन्दत्वम्।तच्चस्वतएवेष्टत्वम्।तच्चगुणविभूत्योरपिसंभवति। तद्विषयस्यज्ञानस्याप्यनुकूलत्वं विषयानुकूलत्वान्वयव्यतिरेकसिद्धम् । अतःश्रुतिस्वारस्याद्गुणविभूत्योरेवानन्दत्वम्। श्रोत्रियोब्रह्मनिष्ठः।अकामहतःसमस्तसांसारिकभोगानुपहतः। अतोमुक्तउच्यतइत्युक्तम् । एवंचयुवत्वदृढगात्रत्वसौंदर्यज्ञानबलैश्वर्यादयः संभूय यत्रभवन्तिसएकोमानुषानन्दः । अकामहतस्यश्रोत्रियस्यमुक्तस्यापिसआनंदोऽस्तिमुक्तस्यसर्वानन्दानुभवशालितया तत्रमानुषानन्दस्यान्तर्गतत्वादितिभावः॥

तेयेशतं मानुषा आनन्दाः।सएकोमनुष्यगन्धर्वाणामानन्दः।श्रोत्रियस्यचाकामहतस्य। तेयेशतंमनुष्यगन्धर्वाणामानन्दाः।सएकोदेवगन्धर्वाणामानन्दः।श्रोत्रियस्यचाकामहतस्य । तेयेशतंदेवगंन्धर्वाणामानन्दाः। सएकः पितॄणांचिरलोकलोकानामानन्दः। श्रोत्रियस्य चाकामहतस्य। तेयेशतं पितॄणांचिरलोकलोकानामानन्दाः। सएक आजानजानांदेवानामानन्दः। श्रोत्रिय-

स्यचाकामहतस्य। तेयेशतमाजानजानांदेवानामान-न्दाः। सएकः कर्मदेवानांदेवानामानन्दः।येकर्मणादेवानपियन्ति।श्रोत्रियस्यचाकामहतस्य।तेयेशतंकर्मदेवानांदेवानामानन्दाः। सएकोदेवानामानन्दः। श्रोत्रियस्यचाकामहतस्य। तेयेशतंदेवानामानन्दाः। सएकइन्द्रस्यानन्दः।श्रोत्रियस्यचाकामहतस्य।तेयेशतमिन्द्रस्यानन्दाः। सएकोबृहस्पतेरानन्दः।श्रोत्रियस्यचाकामहतस्य ।तेयेशतंबृहस्पतेरानन्दाः। सएकः प्रजापतेरानन्दः। श्रोत्रियस्यचाकामहतस्य॥

येमनुष्याएवसंतः कर्मविशेषेण वा विद्याविशेषेणवान्तर्धानादिशक्त्युपेततया गन्धर्वत्वंप्राप्तास्तेमनुष्यगन्धर्वाः। अन्तरिक्षलोकवासिनोदेवगन्धर्वाः । चिरकालस्थायिलोकश्चिरलोकः। चिरलोकोलोकोयेषांते चिरलोकलोकाः पितरः। आजानोदेवलोकः। तत्रजाताआजानजाः । स्मार्तकर्मविशेषतोदेवस्थानेषु जाताइत्यर्थः । अग्निहोत्रादिकर्मणा अग्नीन्द्रादिसायुज्यंप्राप्ताः कर्मदेवाः। देवास्तुवसुरुद्रादयः त्रयस्त्रिंशद्धविर्भुजः। इन्द्राबृहस्पती प्रसिद्धौ। प्रजापतिश्चतुर्मुखः नतु दक्षादयः । एकवचनश्रवणात्॥

तेयेशतंप्रजापतेरानन्दाः। सएकोब्रह्मणआनन्दः। श्रोत्रियस्यचाकामहतस्य ॥

अत्र ब्रह्मशब्दोब्रह्मविदाप्नोतिपरमिति प्रकृतब्रह्मपरः॥ नच ब्रह्मानंदस्य ते येशतमितिपरिच्छिन्नत्वं कथमितिशङ्क्यम्।क्षणार्द्धेन बहूनियोजनानि खेगच्छति इषुवद्गच्छति सवितेति इषुसाम्यप्रतिपादकवचनस्य गतिमान्द्यनिवृत्तिपरत्ववत्तेयेशतमितिवाक्यस्यापि

चतुर्मुखानन्दाधिक्यमात्रपरत्वेन शतगुणितचतुर्मुखानन्दान्यूनानधिकपरत्वाभावात् ॥ एवंभूत आनन्दमयो योवेदनिहितं गुहायाम्" इति हृदयगुहानिहितत्वेनोपास्यमानः कीदृशविग्रहविशेषविशिष्टः-कोवादेवताविशेषइत्याकाङ्क्षायामाह ॥

**सयश्चायंपुरुषे । यश्चासावादित्ये । सएकः ॥**

"यएषोऽन्तरादित्येहिरण्मयः पुरुषोदृश्यतेहिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात्सर्वएवसुवर्णः तस्ययथाकप्यासंपुण्डरीकमेवमक्षिणीतस्योदितिनाम" इत्यादित्यमण्डलान्तवर्तीकमनीयविग्रहयुक्तोयः पुण्डरीकाक्षः सएव हृदयगुहावर्तीविज्ञानमयादन्तरस्ततश्चपुण्डरीकाक्षत्वादिविग्रहोपेतो नारायणएवेत्यर्थः । ततश्च तादृशविग्रहविशिष्टत्वेन हृदयगुहान्तर्वर्तिनोभगवतोध्यानंकर्तव्यमितिफलितोर्थः॥ अत्र "सच्चत्यच्चाभवत्" इतिचिदचिच्छरीरकत्वेनानुसन्धानमुक्तम् । सत्यंज्ञानम्"इतिस्वरूपेणानुसन्धानमुक्तम् । तच्चस्वरूपेणानुसन्धानमादित्यमण्डलान्तर्वर्तिपुण्डरीकाक्षत्वादिविग्रहविशिष्टतयाचोक्तंभवति । "जीवमुख्यप्राणलिङ्गान्नेतिचेन्नोपासात्रैविध्यात्१।१।३२॥" इति सूत्रे भगवता भाष्यकृतातदिदंत्रिविधंब्रह्मानुसन्धानंप्रकरणांतरेष्वप्याश्रितम् । "सत्यंज्ञानमनन्तंब्रह्म"इत्यादिषु स्वरूपेणानुसन्धानं "तत्सृष्ट्वातदेवानुप्राविशत् तदनुप्रविश्यसच्चत्यच्चाभवत्" इति भोक्तृशरीरकतयाभोग्यभोगोपकरणशरीरकतयाचानुसंधानमित्युक्तम् । एवमस्यप्राप्यत्वोपयुक्तंरूपमुक्तम् ॥ "उताविद्वानमुंलोकम्" त्यादिनोपक्षिप्तानां प्रश्नानामुत्तरमाह ॥

**सयएवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसंक्रामति । एतंप्राणमयमात्मानमुपसंक्रामति । एतंमनोमयमात्मानमुपसंक्रामति । एतं**

१ श्रीभगवद्गीतातृतीयाध्यायारम्भेश्रीरामानुजभाष्येपिप्रपंचितोयमर्थः ।

विज्ञानमयमात्मानमुपसंक्रामति । एतमानन्दमयमात्मानमुपसंक्रामति ॥

अत्र "सयएवंवित् अस्माल्लोकात्प्रेत्य" इत्यनेन सर्वेषांब्रह्मविदामर्चिरादिमार्ग उक्तोभवति। "आनन्दमयमात्मानमुपसंक्रामति" इति मुक्तदशायां जीवब्रह्मणोरुपास्योपासकयोः भोक्तृभोग्यभावप्रतिपादनान्मुक्तौजीवब्रह्मणोरैक्यपक्षोव्युदस्तोभवति। एतमन्नमयमित्यादिपंचस्वपिपर्यायेषुएतच्छब्दः परमात्मपरः । अन्नमयप्राणमयमनोमयविज्ञानमयशब्दास्तच्छरीरकपरमात्मपराः । अत्रव्यासार्यैःसर्वोपि विद्वानस्माल्लोकात्प्रेत्यान्नमयादिसमष्टिव्यष्टिविभूतिकंनिरतिशयानन्दंपरमात्मानंभोग्यभूतंभोक्तासन्ननुभवतीतिप्रश्नस्योत्तरमुक्तंभवतीत्युक्तम् ॥ अभयंप्रतिष्ठांविन्दते, अथसोऽभयंगतोभवतीत्युक्तार्थे साक्षित्वेन श्लोकं पठति ॥

तदप्येषश्लोकोभवति। यतोवाचोनिवर्तंते । अप्राप्यमनसासह ॥ आनन्दंब्रह्मणोविद्वान् । नबिभेतिकुतश्चनेति ॥

वाङ्मनसे आनंदस्य इयत्तालक्षणं पारंगतुंप्रवृत्ते तदप्राप्यैवनिवृत्तेभवतः । तादृशानन्दगुणकब्रह्मोपासनेन सर्वक्लेशभयादत्यंतनिवृत्तिर्भवतीत्यर्थः ॥ तदेवोपपादयति ॥

एतꣳहवावनतपति। किमहंसाधुनाकरवम् । किमहंपापमकरवमिति ॥

स्वर्गादिहेतुकंसुकृतं नाकार्षंनरकादिहेतुभूतदुष्कृतमकार्षमिति ईदृशीचिंता एनंब्रह्मविदंनबाधते । स्वर्गादिलोकेष्विच्छायाअभावात् । ब्रह्मज्ञानदग्धपापतयानरकादिभयस्याप्यभावात्॥ एतादृशंब्रह्मविद्याप्रयुक्तमाहात्म्यमपिध्येयमित्याह ॥

सयएवंविद्वानेतेआत्मानꣳस्पृणुते ॥

एतेएताभ्यांचिंताभ्यामात्मानंस्पृणुते रक्षतीत्यर्थः । पुण्यपाप-फलानुभवो नास्तीत्युक्तंभवति ॥

उभेह्येवैषएतआत्मानᳪस्पृणुते । यएवंवेद ॥

पुनर्वचनंपुण्यपापविधूननध्यानसातत्यतात्पर्यद्योतनायानुवाक-समाप्तिद्योतनायच ॥

॥ इत्युपनिषत् ॥

इत्थंपरमरहस्योपदेशः तादृशोपदेशयोग्यायैववक्तव्यइतिभावः॥

अन्तरधिकरणम् ।

अन्तस्तद्धर्मोपदेशात् ।१।१।२१ ॥

छांदोग्येप्रथमाध्यायेषष्ठखण्डे ॥

अथयएषोन्तरादित्येहिरण्मयःपुरुषोदृश्यते ॥

आदित्यमण्डलस्यमध्ये हिरण्मयः कमनीयविग्रहः यः पुरुषो-योगिभिर्दृश्यत इत्यर्थः । "दृश्यतेत्वग्र्ययाबुद्ध्यासूक्ष्मयासूक्ष्मद-र्शिभिः" इतिश्रुत्यैकार्थ्यात् । "हिरण्मय इति रूपसामान्याच्च-न्द्रमुखवत्" इति वाक्यकारः। ततश्चहिरण्मयशब्दस्य न मुख्यार्थो-ग्राह्य इति वाक्यकाराभिप्रायः । ततश्च हिरण्मयत्वमुज्ज्वलत्वमि-त्यर्थः । अतोनीलतोयदाभस्यापिहिरण्मयत्वेनानुपपत्तिः । यद्वा "कच्चिन्नतद्धेमसमानवर्णम्। तस्याननम्" इतिश्रीरामायणप्रयोगात्। "पश्यतेरुक्मवर्णम्"इतिश्रुतेश्च। नीलतोयदाभस्यापिरुक्मवर्णत्वंसं-भवति। तत्र हेतुश्च संप्रदायगम्यः। एतत्सर्वंवेदार्थसंग्रहप्रकाशिका-यांस्पष्टम्। ततएववावगंतव्यम्। "यदापश्यःपश्यतेरुक्मवर्णम्" इति प्रकरणे"मनसातुविशुद्धेन"इति रुक्मवर्णविग्रहविशिष्टस्यविशु-द्धमनोग्राह्यत्वोक्तेः आरोपिताकारस्यविशुद्धमनोग्राह्यत्वाभावा-दनारोपितत्वंसिद्धम्। "ईक्षतिकर्मव्यपदेशात्सः ।१।३।१२।"

१ सचरहस्यत्रयव्याख्यानेतत्त्वदीपेद्रष्टव्यः ।

इत्यत्रेक्षणस्यपरमार्थविषयत्वंवक्तव्यमितिपरैरप्यङ्गीकृतत्वाच्च । "आदित्यवर्णतमसः परस्तात्" इतितमःपारवर्तिनः आदित्यवर्णविग्रहविशिष्टत्वाभिधानेन कल्पितत्वाप्रसक्तेः । नहिकल्पितस्य तमःपारवर्तित्वंसंभवति ॥

---

१ यत्त्वत्रतार्किकमोहप्रकाशग्रन्थे ब्रह्मानन्दसंन्यासी "अत्र केचिद्वैष्णवादयः सशरीरत्व नानात्वरूपवत्वादि कमभ्युपगच्छंति॥तदसंगतम् ॥ अनित्यत्वासर्वज्ञत्वादिदोषस्य दुर्निवारत्वात्॥ननुतच्छरीरस्याप्राकृतत्वान्न तस्यानित्यत्वादिकं सम्भावयितुं शक्यमितिचेन्न।विकल्पासहत्वात् । तथाहि।किन्नामाप्राकृतत्वं प्रकृतिविकारभिन्नत्वमुत प्रकृतिभिन्नत्वंवा । नाद्यः । विकारभिन्नायाः प्रकृतेः शङ्खचक्राद्यायुधविशिष्टहस्तपादादिविकाररूपशरीरत्वानुपपत्तेः । शरीराणांभौतिकत्वनिश्चयात्।प्रकृतिविकारशून्यशरीरस्य वन्ध्यापुत्रशरीरवदप्रसिद्धत्वाच्च । नान्त्यः । प्रकृतिभिन्नस्य चेतनस्य हस्तपादादिविशिष्टशरीररूपेण परिणतत्वादनित्यत्वस्य दुर्निवारत्वेन शून्यवादप्रसङ्गात् ।तादृशशरीराप्रसिद्धेश्च ॥ किञ्चरामकृष्णादीनां भिन्नत्वेनानेकेश्वरकल्पने प्रमाणाभावात् । एकेनैवेश्वरकार्यसंभवेऽनेकेश्वरकल्पनावैयर्थ्यापत्तेश्च । अस्मन्मतेत्वेकस्यैवेश्वरस्य मिथ्याभूतमायिकरामकृष्णाद्यनेकविग्रहपरिग्रहवत्त्वान्न कोपि दोषः । भवतां पुनः सात्त्विकानेकसत्यविग्रहवादिनामगतिरेव स्यात् ॥ नन्वीश्वरस्याचिन्त्यशक्तिमत्त्वान्न कोपि दोष इतिचेन्न ॥ तस्य जगत्कर्तृत्वाद्यसिद्ध्या तन्मूलाचिन्त्यशक्तिमत्त्वस्याप्यसिद्धेः ॥ किञ्चतन्मतसिद्धः परमेश्वरोऽनित्यः परिच्छिन्नत्वात् रूपादिमत्त्वात् विभक्तत्वात् भक्तपक्षपातित्वेन रागादिमत्त्वात् दृश्यत्वेन जडत्वाच्च घटवत्" इत्यक्षिणी निमील्य प्रलपितवान्।तत्तुशास्त्रहृदयग्राहिभिरनादरणीयत्वादरण्यरोदनमेव । तथाहि।तदुक्तप्रथमवाक्यादीदृशानुमानं फलति, ईश्वरोऽनित्यः असर्वज्ञश्च सशरीरत्वात् नानात्वात् रूपवत्त्वाच्चेति॥तत्रेदंवक्तव्यम्।सशरीरत्वमनित्यत्वव्याप्यमितिकदृष्टंत्वया।येनदृष्टांतेनेदं साधयसि।जीवानांसशरीरत्वेनानित्यत्वं जानासि चेत्सम्यग्जीवसि । तस्मादुभयवादिसंप्रतिपन्नजीवानां सशरीरत्वेप्यनित्यत्वं नास्तीत्यप्रसिद्धनिबन्धनाव्याप्तिः।सशरीरत्वेनासर्वज्ञत्वंतु गीतोपदेष्टरि श्रीकृष्णे व्यभिचरितम्॥किञ्चमुक्ता अपि लीलयाविग्रहंकृत्वा भजंत इति नृसिंहतापनीयश्रीशंकरभाष्यप्रतीकमुपादाय "व्याख्यातं च सर्वज्ञैः श्रीमद्भिर्भाष्यकारैः" इति श्रीधरस्वाम्युक्तिरपि त्वया भाष्यकारोक्त्या सह खण्डिता भवति कथमितिचेत् येमुक्तास्तेतु तवमते वेदमपि ब्रह्मव्यतिरिक्तत्वेन मिथ्यामन्यमानाः कथंमिथ्याविग्रहान् भजेयुः। कथंवा शरीरवन्तः श्रीशंकराचार्याः सर्वज्ञाभवेयुरिति सूक्ष्मधियाविचारय ॥ किञ्च त्वन्मते ईश्वरोनित्यः सर्वज्ञश्च शरीराभावात् नानात्वाभावात् रूपवत्त्वाभावाच्चेत्यनुमानं सिध्यति । तत्र शरीराभावेपि नित्यत्वं सर्वज्ञत्वंच घटादौ व्यभिचरितम्, नानात्वाभावेपि नित्यत्वं सर्वज्ञत्वं चाकाशे वेदांतिमते व्यभिचरितम्, रूपवत्वाभावेपि नित्यत्वं सर्वज्ञत्वंच वाय्वादौ व्यभिचरितम्, इतिकीदृशीतेतार्किकमोहप्रकाशकता ॥ नन्वित्यादिवाक्येपि प्रथमे त्वदभिमतजडविकारभिन्ना प्रकृतिः विविधशक्तिमती प्रकृतित्वात् भगवदुक्तजगद्विधारकजीवरूपप्रकृतिवत् इत्यनुमानेन विकारभिन्ना प्रकृतिः शरीरत्वाभाववती प्रकृतित्वादिति तवानुमानं सत्प्रतिपक्षितम्।तेनाभौतिकत्वेपि शरीरत्वंनानुपपन्नम्। अत्रास्मद्दृष्टांते प्रमाणंतु "अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जगत्" इतिवाक्यम् । द्वितीयेपि

विवादास्पद ईश्वरोऽनित्यः शरीररूपेणपरिणतत्वात् घटवदितितवाभिमतानुमाने परिणतत्वादिति हेतुः सोपाधिकः। उपाधिश्चतत्र चेतनभिन्नत्वम्। अस्तिच घटादौ साध्यव्यापकत्वेन त्वदभिमतईश्वरव्यक्तिविशेषे साधनाव्यापकत्वेनचोपाधित्वं तस्येति।ततस्तादृशशरीर प्रसिद्धिरपि समर्थिता। पुनः किंचेत्यादि वाक्यंत्वस्मन्मतापरिज्ञाननिबंधनम्।नास्माभीराम कृष्णादीनां विग्रहभेदेपितत्त्वभेदः स्वीक्रियते।येनत्वदुक्तोदोषः स्यात्।यदिच त्वया रामकृष्णादयस्तत्त्वतोपि भिन्नाः शरीरभेदात् देवदत्तवदित्यनुमानेन भेदः साध्यते, तदा त्वस्माभीरामकृष्णादयो विग्रहभेदेपितत्त्वतो नभिन्नाः सौभर्यादियोगिवदित्यनुमानेन सत्प्रतिपक्षी क्रियते। अस्मदित्यादिवाक्येतु रामकृष्णादीनां मिथ्यामायिकशरीरवत्त्वंकेन चिद्युक्त्याभासेन साध्यमानमपि तद्विपरीतशाब्दप्रमाणसत्त्वेन बाधितमेव। प्रमाणानित्वनुपदमेव वक्ष्यामोऽवसरे। पुनर्नन्वित्यादिवाक्ये जगत्कर्तृत्वाभावहेतुना अचिन्त्यशक्तिमत्त्वाभावसाधनं तव जगद्व्यापारवर्जाधिकरणसिद्धजगत्कर्तृत्वाभाववत्सु विश्वामित्रप्रभृतिषु व्यभिचरितम्। पुनः किञ्चेतिवाक्येपि हेत्वाभासपंचतयी पूर्वोक्तचेतनभिन्नत्वोपाधिनोपाधिमती। तत्रैव दृश्यत्वेनजडत्वसाधनंतु आत्मावारे द्रष्टव्यइति श्रुत्यपर्यालोचनमूलकमितिसंक्षेपः। वस्तुतस्तु यक्षानुरूपोबलिरिति न्यायानुसारेण विनोदार्थमेवमुक्तम्। नत्वेतेनैव वस्तुस्थिरीकरणम्। यत एतेप्यनुमानप्रयोगा विज्ञैरन्यथा कर्तुंशक्यंते। अतएवतुशास्त्रयोन्यधिकरणे तर्काप्रतिष्ठानसूत्रेच भाष्यादौ उत्तरोत्तरतर्कयुक्तिमतांलोके संभवेन नहिशास्त्रमननुरुध्य तर्कः प्रतिष्ठितोभवतीति सिद्धांतितम्। अन्यथात्वदुक्तरीत्या मेरुः पाषाणमयः पर्वतत्वात् विन्ध्यवत्। नरशिरः,कपालं, शुचि, प्राण्यङ्गत्वात् स्नातजीवच्छ्रोत्रियकरवत् तप्तचक्राङ्कनं न धर्मः निखिलजनैरननुष्ठीयमानत्वात् क्वचित्प्रतिषेधवचनोपलंभाच्च केशालुंचनादिवदित्यादीनामप्यनुमानानां विजयः स्यात्।तस्मादीदृशानामनुमानप्रयोगाणां बाधकानि शास्त्रवचनान्येवेति त्वदनुमानबाधकानिशास्त्राणि क्रमेण प्रदर्श्यन्ते। तथाहि। "अजायमानो बहुधाविजायते इति दिव्योह्यमूर्तः पुरुषः सबाह्याभ्यंतरो ह्यजः इति वेदाहमेतं पुरुषं महांतमादित्यवर्णं तमसः परस्तात्॥ तमेवं विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"इत्यादिश्वेताश्वतरादिश्रुतिषु परब्रह्मणो मूर्तिमत्त्वं नानात्वंच दिव्यं प्रतीयते॥

नन्वेतत्सर्वमस्माभिर्मायिकपरमेश्वरपरत्वेन योजयितुं शक्यते। सत्यंशक्येत। यदि भगवती श्रुतिरेवासंदिग्धं ब्रुवाणा युष्मन्मुखं नापिदधीत।प्यधात्तुसा।तथाहि। अजायमान इत्यत्र तस्य धीराः परिजानंति योनिमिति वाक्यशेषणेन युष्मदभिमताविद्यानिवृत्त्या ज्ञानिनां वेद्यत्वेनाविद्यागन्धं निवारितवती बहुधा जायमानस्यापि। दिव्यो ह्यमूर्तइत्यत्रापि सहस्रशीर्षादिमत्त्वेन प्रसिद्धस्य पुरुषस्य दिव्यत्वं ब्रुवती मायागंधमुत्सारितवती।वेदाहमित्यत्रापि तमेवंविदित्वातिमृत्युमेतीति वचनेन मोक्षसाधनवेदनविषयस्यादित्यवर्णस्य तमसः परत्वं वदंती मायापारवर्तित्वं निर्धारयति। अत्र तमःशब्दस्य लौकिकतमःपरत्वं तु नशक्यं संभावयितुं व्यर्थविशेषणत्वापातात्। नहि प्रत्यक्षसिद्धं तमःपरत्वमादित्यवर्णस्य श्रुत्या वक्तुमुचितम्। अप्राप्तेहिशास्त्रमर्थवदिति न्यायात्। किंतु नासदासीन्नोसदासीत्तदानींतमआसीत् पूर्वसिद्धतमसोहिपाश्चिमः इत्यादौ युष्मत्सिद्धांतसिद्धस्य मायावाचकस्यैव तमःशब्दस्य ग्रहणमुचितम्। तथा महाभारतेपि नभूतसंघसंस्थानो देहोस्य परमात्मनः इति श्रीकृष्णविग्रहविषयवचनम्। तथागीतायामपि दिव्यं ददामि तेचक्षुरित्युक्त्वा विश्वरूपप्रदर्शनेन तस्य रूपस्यामायिकत्वं स्फुटमेव। तथा श्रीरामायणे तमसः परमोधाता शंखचक्रगदाधरः इत्यत्र श्रीराममूर्तेस्तमःपरत्वमुच्यते। श्रीविष्णुपुराणेपि इच्छागृहीताभिमतोरुदेहोऽव्यक्तस्वरूपः प्रकटस्वरूपइत्यादिकमुच्यतइत्युपरम्यतआस्तिकजनसंतोषमनीषया। एतेन सत्यार्थविवेककृतोक्तंजीवविषयकम् अणुर्जीवोऽनित्यः परिच्छिन्नत्वात् घटवत् इत्यादिकमपिपरास्तम्। जीवविषयेपिनजायतेम्रियतेवाविपश्चिदित्यादिश्रुतिसद्भावात्।

हिरण्यश्मश्रुर्हिरण्यकेशआप्रणखात्सर्वएवसुवर्णः॥

रमणीयश्मश्रुकेशो रमणीयसर्वावयव इत्यर्थः ॥

तस्य यथाकप्यासंपुण्डरीकमेवमक्षिणी ॥

कंपिवतीतिकपिरादित्यः। तेनास्यते क्षिप्यते विकास्यत इति कप्यासम्। तदाहवाक्यकारः "आदित्यक्षिप्तं वा श्रीमत्वात्" इतिकं पिबतीति कपिर्नालं तस्मिन्नास्त इति कप्यासम्। अपचितादपि पंकजान्नालस्थस्यपुण्डरीकस्य शोभातिशयवत्वं तादृशमिहविवक्षितम्। यद्वा। कंजलम् "आसउपवेशने" इतिधातुरपिपूर्वकः। "वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः" इतिवचनादकारलोपः। के जलेअप्यास्तइतिकप्यासं सलिलस्थमित्यर्थः। एवमस्यार्थत्रयस्योपपन्नतया वाक्यकारेण सिद्धांतितत्वमभिप्रेत्यभगवताभाष्यकारेण [1]वेदार्थसंग्रहे "गंभीरांभः समुद्भूतसुमृष्टनालरविकरविकासितपुण्डरीकदलामलायतेक्षणः" इत्यभिहितम्। मर्कटजघनसदृशपुण्डरीकसादृश्याद्यर्थांतरंत्वश्लीलत्वा[2]दिदोषदुष्टतया वाक्यकृदनादृतत्वाद्भाष्यकारेणाप्यनादृतम्। यद्यप्यमरकोशे "पुण्डरीकंसिताम्भोजम्" इत्यनुशिष्टं तथापि शबरस्वामिनानवमाध्याये "मौद्गंचरुंनिर्वपेतश्रियैश्रीकामः" इतिविहितायामिष्टौपुण्डरीकाणिबर्हींषिभवन्तीतिस्तरणार्थत्वेन विहितेषुपुण्डरीकेष्वतिदेशतः प्राप्तस्य "दर्भैस्तृणातिहरितैः" इतिमंत्रस्य दर्भपदस्थानेपुण्डरीकपदंहरितपदस्थानेरक्तपदमूहितव्यमित्युक्तत्वात्। रक्ताम्भोजमेवपुण्डरीकमितिद्रष्टव्यम् ॥

तस्योदितिनाम ॥

स्पष्टोर्थः। तस्योन्नामकत्वेहेतुमाह ॥

---

१ अंते मीमांसकमतनिराकरणानन्तरं नित्यविभूत्यादिनिरूपणावसरइतिभावः। २ अयंच पदवाक्यार्थ दोषाणां मध्ये पद दोषएव तथाचसाहित्यरत्नाकरेदोषतरंगे पददोषनिरूपणे "अश्लीलंतदमांगल्यंजुगुप्साव्रीडकारणम्" इतितल्लक्षणमुक्तम्।

सएषसर्वेभ्यः पाप्मभ्यउदितः ॥

सर्वपाप्मोद्गतत्वादुन्नामकत्वमित्यर्थः । नीडाच्छकुंतस्योद्गमनवत्पापपंजरादुद्गमनरूपमुख्यार्थस्यकुत्राप्यभावादुद्गमनेननतत्संबन्धराहित्यंलक्ष्यते"नैनंसेतुमहोरात्रे तरतः नजरानमृत्युर्नशोकोनसुकृतंनदुष्कृतमिति" परमात्मनः सुकृतदुष्कृतसम्बन्धाभावोहिप्रतिपाद्यते । तरतेः प्राप्तिवाचित्वात् । पापशब्दश्च पुण्यपापरूपोभयविधकर्मपरः । परमात्मप्रकरणेषु "नैनंसेतुमहोरात्रेतरतो नजरानमृत्युर्नशोकोनसुकृतंनदुष्कृतम् । सर्वेपाप्मानोतोनिवर्तंते" इतिसुकृतेपिपापशब्दप्रयोगात् । "पाप्मानः किलजरामृत्युशोकादयः संख्यातत्वादिति" वाक्यकारवचनादलौकिकत्वेसत्यनिष्टफलसाधनत्वरूपप्रवृत्तिनिमित्तयोगात्पुण्यस्यापिपापशब्दाभिधेयत्वोपपत्तेः । मुमुक्ष्वपेक्षया स्वर्गादीनामप्यनिष्टत्वात् । "एते वैनिरयास्तातस्थानस्यपरमात्मनः" । "क्वनाकपृष्ठगमनं पुनरावृत्तिलक्षणम् । क्वजपोवासुदेवेति मुक्तिबीजमनुत्तमम्" इति स्मरणात् । सर्वपापोदितत्वं नाम कर्मवश्यतागन्धराहित्यमिति फलितोर्थः । कृतानामपि कर्मणां फलजननशक्तिप्रतिभटलक्षणः कश्चिदैश्वरस्वभावविशेषोपहतपाप्मत्वाख्यः सर्वपापोदितशब्दार्थ इतिद्रष्टव्यम् । एवंनाम विशिष्टस्यध्यानस्यफलमाह ॥

उदेति ह वै सर्वेभ्यः पाप्मभ्योयएवंवेद ॥

स्पष्टोर्थः ॥

तस्य ऋक्सामच गेष्णौ ॥

ऋक्सामेतद्गानरूपेअग्नीन्द्रादिप्रतिपादकऋक्सामज्ञेयत्वोक्त्यासर्वात्मकत्वमुक्तंभवति ॥

तस्मादुद्गीथः ॥

यस्मात्परमात्मनः उन्नामकत्वंतद्गेष्णत्वंचऋक्सामयोः अतः ऋक्सामात्मकद्वितीयभक्तेरुद्गीथत्वम् ॥

तस्मात्त्वेवोद्गाता एतस्यहिगाता ॥

उन्नामकपरमात्मगातृत्वादेव ऋत्विग्विशेषस्यउद्गातृसंज्ञत्वम् ॥

सएषयेचामुष्मात्परांचोलोकास्तेषांचेष्टेदेवकामानांच ॥

सएषहिरण्मयः पुरुषः आदित्यमण्डलोर्ध्ववर्तिलोकानांदेवभोग्यभोगोपकरणभोगस्थानानांच नियन्तेत्यर्थः ।

इत्यधिदैवतम् ॥

उपदिष्टमितिशेषः ॥

अथाध्यात्मम् ॥

उपदिश्यत इतिशेषः ॥

अथयएषोन्तरक्षिणिपुरुषोदृश्यते सैवऋक्तत्सामतदुक्थंतद्यजुस्तद्ब्रह्म ॥

सएवऋग्यजुःसामात्माउक्थादिशस्त्रात्माब्रह्मचेत्यर्थः । अत्रोक्थस्यत्रय्यपेक्षयापृथक्परिगणनं गोबलीवर्दन्यायेनद्रष्टव्यम् ॥

तस्यैतस्यतदेवरूपं यदमुष्यरूपं यावमुष्यगेष्णौतौगेष्णौ यन्नाम तन्नाम ॥

एतस्याक्ष्यन्तरवर्तिनः आदित्यान्तरवर्तिनो यद्धिरण्मयत्वादिरूपमुदिति नाम ऋक्सामरूपगेष्णौचतानि सर्वाणिभवंतीत्यर्थः ॥

सएषएवैतस्मादर्वाञ्चोलोकास्तेषांचेष्टे मनुष्यकामानां चेति ॥

एतस्मादक्षिस्थानादधोवर्तिनां लोकानां मनुष्यभोग्यादीनांचनियंतेत्यर्थः ॥

तद्यइमेवीणायांगायंत्येतंतेगायंति ॥

यस्मादयमीश्वरस्तस्माद्धेतोर्वीणागायकाः सर्वेपि इममेवगायंतीत्यर्थः । तस्यसर्वात्मकत्वेनदेवमनुष्यादिकर्मकगानस्यापिपरमात्मविषयकत्वादितिभावः ॥

तस्मात्तेधनसनयः ॥

सनिर्लाभः धनानां सनिर्येषांते धनसनयः । ईश्वरगायकत्वादेववीणागायकानां धनलाभवत्त्वं नह्यनीश्वरगातृत्वे धनप्रशक्तिरस्तीतिभावः ॥

अथयएवंविद्वान्सामगायति उभौसगायति ॥

अध्यात्माधिदैवतभिन्नविद्यायुक्तः सन्नुद्गीथंयोगायति सचाक्षुषमादित्यस्थंच परमात्मानं गायतीत्यर्थः । उद्गीथस्यचाक्षुषेण परमात्मना आदित्यांतरवर्तिना च परमात्मनाऐक्याध्यासविशिष्टतया तादृशोद्गीथगायकस्यैव परमात्मगायकत्वादितिभावः । तस्यैवंविदः फलमुच्यते ॥

सोमुनैव सएषयेचामुष्मात् पराञ्चोलोकास्तांश्चाप्नोति देवकामांश्चअथानेनैवयेचैतस्मादर्वाञ्चो लोकास्तांश्चाप्नोति मनुष्यकामांश्च ॥

सविद्वानमुनैवादित्यान्तरवर्तिना उपासितेन तदुपासनाविशिष्टएषः तदूर्ध्वलोकान्देवकामांश्चाप्नोति । अनेनाक्ष्यन्तरवर्तिना मनुष्यलोकाधस्तनलोकान्मनुष्यकामांश्चाप्नोति चक्षुरादित्यस्थानवर्तिपरमात्मोपासनया सर्वलोकावाप्तिर्भवतीत्यर्थः ॥

तस्माद्धैवं विदुद्गाताब्रूयात् कंते काममागायानीति ॥

एतादृश विद्यायुक्तउद्गातायजमानं प्रतिहेयजमान तेकंदेवकामं मनुष्यकामंवागायानि संपादयानीतिब्रूयादित्यर्थः । नन्वेतादृशो क्तावुद्गातुः कथं सामर्थ्यमित्यत्राह ॥

एषह्येवकामगानस्येष्टे यएवं विद्वान्सामगायति सामगायति ॥

एवं विदुषस्सामगस्य कामसंपादकगानसामर्थ्यमस्तीत्यर्थः । द्विरुक्तिर्विद्यासमाप्त्यर्था ॥

आकाशाधिकरणम् ।

आकाशस्तल्लिंगात् । १ । १ । २३ ॥

छांदोग्येप्रथमप्रपाठकेऽष्टमखण्डे ॥

त्रयोहोद्गीथे कुशलाबभूवुः शिलकःशालावत्यश्चैकितायनोदाल्भ्यः प्रवाहणोजैवलिरिति ॥

शालावत्सुतः शिलकनामादाल्भ्यः दल्भगोत्रश्चिकितायन सुतः प्रवाहणोनामाजिवलसुतश्चत्रय एते उद्गीथविज्ञानेनिपुणाबभूवु रित्यर्थः । शालावच्छब्दादपत्यार्थेऽण् तदंतात्स्वार्थे“अभिजिद्विद भृच्छालावत्”५।३।१०८। इत्यादिना यञ्प्रत्ययः। दल्भशब्दाद्गो त्रापत्येगर्गादित्वाद्यञ् । चिकितायनशब्दादपत्यार्थे ऋषित्वादणि चैकितायनः जिवलशब्दात् अतइञ् ४।१।९५। जैवलिः ॥

तेहोचुरुद्गीथेवैकुशलाःस्मःहंतोद्गीथेकथांवदामइति

वयमुद्गीथविज्ञाने कुशलाभवामः अतो विद्यावैशद्याय वादकथां परस्परं प्रवर्तयाम इत्यूचुरित्यर्थः ॥

तथेतिह समुपविविशुः ॥

एकत्रोपविष्टवंतः ॥

सह प्रवाहणो जैवलिरुवाच ॥

प्रवाहणः क्षत्रियः तौ ब्राह्मणौ प्रागल्भ्यादुवाचेत्यर्थः ॥

भगवंतावग्रेवदतांब्राह्मणयोर्वंदतोर्वाचंश्रोष्यामीति ।

भगवंतौ पूजावंतौ ब्राह्मणौ अग्रे वादकथां कुरुताम् तत्प्रकारं श्रोष्यामीति ॥

सहशिलकश्शालावत्यश्चैकितायनं दाल्भ्यमुवाच हंत त्वापृच्छानीति पृच्छेति होवाच ॥

स्पष्टोर्थः ॥

कासाम्नो गतिरिति ॥

गतिरयनं प्राप्यमित्यर्थः ॥

स्वरइतिहोवाच ॥

स्वरात्मकत्वात्साम्नइतिभावः ॥

स्वरस्य कागतिरिति प्राण इतिहोवाच ॥

प्राणनिर्वर्त्यत्वात्स्वरस्येतिभावः । एवमुत्तरत्राप्यौचित्यमनुसन्धेयम् ॥

प्राणस्यकागतिरित्यन्नमितिहोवाच अन्नस्यकागगतिरित्यापइतिहोवाच अपांकागतिरित्यसौलोक इति होवाच ॥

द्युलोकादेव वृष्टिप्रभवादितिभावः ॥

अमुष्यलोकस्य कागतिरिति नवैपरंस्वर्गं लोकमतिनयेदिति होवाच ॥

स्वर्गलोकमतीत्यपरमाश्रयांतरं साम ननयेत् । इति स्वर्गलोकव्यतिरिक्तमाश्रयांतरं सामनप्रापयेदित्यर्थः । नवदेदितियावत् ॥

स्वर्गं वयंलोकꣳसामाभिसꣳस्थापयामःस्वर्गसंꣳस्तवꣳहिसामेति ॥

अतोवयमपि सामाभि सामप्रति आश्रयत्वेन स्वर्गलोकं सम्यक्सं स्थापयामः " स्वर्गोवैलोकः सामवेद " इति श्रुत्यास्वर्गत्वेन साम्नः स्तूयमानत्वादित्यर्थः ॥

तंहशिलकः शालावत्यउवाच अप्रतिष्ठितं वै किल-ते दाल्भ्यसाम यस्त्वेतर्हिब्रूयान्मूर्द्धाते विपतीष्यती-ति मूर्द्धातेविपतेदिति ॥

हे दाल्भ्य अप्रतिष्ठितं स्वर्गलोकं सामगतिपरंपराविश्रांतिभूमिं वदतस्तवमतेसाम अप्रतिष्ठितमेव स्यात् एतस्मिन्समये यः कश्चि-दागत्य वादकथायामयुक्तमर्थप्रतिजानानस्य ते मूर्धाव्यपतिष्यती ति यदिब्रूयात्तदाविपतेदेव नसंशयः । मयातुसौहार्दात्तथानोक्तमतो जीवसीतिशिलक उक्तवानित्यर्थः ॥

हंताहमेतद्भगवत्तोवेदानीति विद्धीतिहोवाच ॥

तर्ह्यहं सामगतिपरंपराविश्रांतिभूमिं त्वत्तोजानीयामितिप्रार्थितः तथेत्युक्तवानित्यर्थः ॥

अमुष्य लोकस्य कागतिरित्ययंलोक इतिहोवाच ॥

यागदानहोमादिभिर्भूलोकस्यस्वर्गोपजीव्यत्वादितिभावः ॥

अस्य लोकस्य कागतिरिति नप्रतिष्ठां लोकमति-नयेदिति होवाचप्रतिष्ठांवयं लोकꣳसामाभिसंस्थाप-यामः प्रतिष्ठासंस्तवꣳहिसामेति ॥

पृथिवीलोकस्य कागतिरिति दाल्भ्येन पृष्टः शिलकः प्रतिष्ठां पृथिवीलोकमतिक्रम्यसामगतिपरंपराविश्रांतिभूमिमन्यन्न कश्चिद-पिवदेत् । अतोवयमपि तथैववदामः 'इयंवैरथंतरम्' इतिश्रुत्या-साम्नःप्रतिष्ठालोकत्वेन स्तूयमानत्वात् । स्वर्गस्यज्योतिश्चक्रलग्न-

तयावंभ्रम्यमाणत्वेन प्रतिष्ठात्वाभावेपि पृथिव्यास्तुस्थिरत्वात्प्रतिष्ठात्वमित्युक्तवानित्यर्थः ॥

**तꣳह प्रवाहणो जैवलिरुवाच अंतवद्वैकिलते शालावत्यसाम ॥**

अंतवतींपृथिवीं सामगतिपरंपराविश्रांतिभूमितया प्रतिजानानस्य ते मते सामान्तवदेवस्यादित्यर्थः ॥

**यस्त्वेतर्हिंब्रूयान्मूर्धा तेविपतिष्यतीति मूर्द्धांतेविपतेदिति हंताहमेतद्भगवत्तोवेदानीति विद्धीतिहोवाच ॥**

पूर्ववदर्थः ॥

**अस्य लोकस्य कागतिरित्याकाश इतिहोवाच ॥**

अस्य पृथिवीलोकस्य कागतिरिति शालावत्येनपृष्टः प्रवाहणः आकाश इत्युक्तवानित्यर्थः । अत्राकाशते आकाशयतीति वा व्युत्पत्त्या आकाशशब्दोब्रह्मपरः । "आकाशोहवै नामरूपयोर्निर्वहिता" इत्यादावाकाशशब्दस्य ब्रह्मण्यपि प्रसिद्धत्वात् । नतुभूताकाशपर इतिद्रष्टव्यम् । तदेवगतित्वं प्रपञ्चयति ॥

**सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यंस्तयन्ति ॥**

चिदचिदात्मकः[1] प्रपञ्चः आकाशादेवोत्पद्यते तत्रैवलीयते इत्यर्थः ॥

---

१ चिदचिदात्मकः प्रपंचउत्पद्यते इत्युक्त्या अचिद्वस्तुनइवचिद्वस्तुनोपि स्वाभाविको भेदः पूर्वसिद्धइतिसूच्यते । अत्र तार्किकमोहप्रकाशग्रन्थे ब्रह्मानंदतीर्थनामकः संन्यासी जगाद । यत्तु रामानुजेनोत्प्रेक्षितम् जीवस्येश्वरांशत्वमणुत्वं चिद्रूपत्वं गुणिव्यतिरिक्तदेशव्यापिज्ञानगुणवत्त्वं चेति तदसदित्यादिना विस्तरेण । तत्र तत्पंक्तीरनुद्धृत्य तदाशयोनूद्य दूष्यते तथाहि जीवस्येश्वरांशत्वे " अंशोनानाव्यपदेशात् " । १ । २ । ४१ इति ब्रह्मसूत्रं " ममैवांशोजीवलोक " इति गीता " तवपुरुषं वदंत्यखिलशक्तिधृतोंशकृतम् । अंशांशास्ते देवमरीच्यादय एते तत्रांशेनावतीर्णस्य ततोजगन्मंगलमच्युतांशमित्यादि

## आकाशोह्येवैतेभ्योज्यायान् ॥

ज्यायस्त्वंनाम सर्वैः कल्याणगुणैः सर्वेभ्योनिरतिशयनिरूपाधिकोत्कर्षः ॥

---

श्रीभागवतादिकंच प्रमाणजातमस्तीति कथमंशत्वं दुष्टतर्केणनिवारयितुं शक्यम् । अणुत्वेपि " एषोणुरात्मा चेतसावेदितव्यः " " आराग्रमात्रोह्यवरोपि दृष्टः " " वालाग्रशतभागस्य शतधा कल्पितस्य च । भागोजीवः सविज्ञेयः" इत्याद्याः श्रुतयः नाणुरतच्छ्रुतेरितिचेन्नेतराधिकारात् । २ । ३ । २२ । इतिब्रह्मसूत्रम् ।"अणुर्नित्योव्याप्तिशीलः" इतिपद्मपुराणादिकं प्रमाणजातमस्ति चिद्रूपत्वेतु शास्त्रज्ञानां विवाद एव न विद्यते गुणिव्यतिरिक्तदेशव्यापिज्ञानगुणवत्त्वेपि "विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथा परा । अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते" ६ । ७ इतिचिदचिद्रूपं जगत् शक्तिशब्देन निर्दिश्य "एक देशस्थित स्याग्नेर्ज्योत्स्ना विस्तारिणी यथा । परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्" १ । २२ इत्यादिना प्रभाप्रभावद्दृष्टांतेन निरूपयद्विष्णुपुराणादिकं प्रमाणमस्त्येव । ( निरवयवयोस्तयोरंशांशित्वासंभवात् ) इतित्वशास्त्रज्ञचोदितम् । यतो न वयं ब्रह्मखंडत्वेन जीवस्यांशत्वं ब्रूमः । अपितु ब्रह्मविशेषणत्वेनैव यथा घटघटत्वयोर्घटत्वंविशेषणत्वेनांश इतिव्यवहरंति शास्त्रज्ञाः विशेष्यविशेषणभावस्तु ब्रह्मजीवयोर्निरूपित एवपूर्वं विशिष्टाद्वैतनिर्वचने एतेनैव ईश्वरस्यांशित्वेनांशदुःखेन दुःखित्वं सावयवत्वेनानित्यत्वं जीवस्यांशत्वे जन्यत्वेनानित्यत्वमित्याद्यग्रिमं सर्वमप्युत्तारितम् । जीवस्याणुत्वेनानित्यत्वापादनंतुश्रुत्याबाधितमिति पूर्वमेवोक्तम् । तथातस्याणुत्वे सकलदेहक्रियासुखाद्यनुपलब्धिरपि "अविरोधश्चन्दनवत् । २ । ३ । २४ । गुणाद्वालोकवत् । २ । ३ । २६॥"इति सूत्राभ्यामेवनिरस्ता ज्ञानं न गुणिव्यतिरिक्तदेशव्यापि गुणत्वात् रूपादिवदित्यनुमानं तु अस्मन्मतापरिज्ञानात्स्वरूपासिद्धहेतुमत्त्वेन हास्यास्पदमेव । तथाहि "द्रव्याद्रव्यप्रभेदान्मितमुभयविधं तद्विदस्तत्वमाहुर्द्रव्यं द्वेधा विभक्तं जडमजडमिति प्राच्यमव्यक्तकालौ ॥ अंत्यं प्रत्यक् पराक्च प्रथममुभयथा तत्र जीवेशभेदान्नित्या भूतिर्मतिश्चेत्यपरमिह जडामादिमां केचिदाहुः" । इत्यादिना तत्वमुक्ताकलाप न्यायसिद्धांजन सिद्धांतसिद्धांजनादौश्रीमद्वेदांतदेशिकादिभिर्ज्ञानस्य द्रव्यत्वमेव सुदृढंस्थापितम् । अस्य ज्ञानस्य द्रव्यत्वेपि गुणत्वव्यवहारस्तु यथाभवति तथा प्रभाप्रभावद्दृष्टांतादिना निपुणतरमुपपादितं महासिद्धांते श्रीभाष्यश्रुतप्रकाशिकयोरिति तत्रैवावलोकनीयम्।एतेनैवाग्रिमःसर्वोपि प्रलापोनिरस्तएव किंचेत्यादिविकल्पत्रयेपि " पृथगुपदेशात् ॥ तद्गुणसारत्वात्" । २ । ३ । २९। इतिसूत्राभ्यांजीवधर्मभूतज्ञानयोर्भिन्नत्वं जीवस्य ज्ञानशब्देनव्यवहारश्च भवतीति युक्तिभिर्निरूपितं वेदार्थसंग्रहादौ अणोरपिजीवस्य धर्मभूतज्ञानस्य संकोचविकासशालित्वेच " तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता । सर्वभूतेषु भूपालतारतम्येन वर्तते" । २ । ७ । २९ । इत्यादिवद्विष्णुपुराणादिकं प्रमाणमिति कथमंतर्दग्धो दग्धांगोंत्यजशिष्य शब्दादिभिरसत्प्रलापं कुर्वाणश्च न लज्जते इति कृतगुरुपरिचर्या निर्मत्सराः शास्त्रज्ञा एवंविदांकुर्वंतु ॥ एवं तस्मिन्नेवग्रंथे आत्मनोनिर्विशेषत्ववादः जीवेश्वरयोः स्वाभाविकभेदाभाववादश्चैतदुक्तौ नैयायिकश्रीमाध्वश्रीवल्लभश्रीनिंबार्कादिभिरेवशतशः खंडितौ इतिकिंतेन पिष्टपेषणेनेत्युपरम्यते विस्तरभीलुकेन ॥

**आकाशः परायणम् ॥**

परायणत्वं परमगतित्वम् । परमप्राप्यत्वमितियावत् ॥

**सएष परोवरीयानुद्गीथः ॥**

परः उत्कृष्टः । वरीयान् वरीयसामपिवरइत्यर्थः । अत्र परःशब्दः सकारान्तोद्रष्टव्यः । एवंरूप आकाश उद्गीथः परमात्मदृष्टिविशिष्ट उद्गीथ इत्यर्थः । उद्गीथे एतादृशाकाशदृष्टिः कर्तव्येति यावत् ॥

**सएषोऽनन्तः ॥**

उद्गीथे अध्यस्यमानः अयमाकाशोऽनन्तः अपरिच्छिन्न इत्यर्थः। ततश्चानन्तस्याकाशशब्दितस्य परमात्मन एव सामगतिपरंपराविश्रांतिभूमित्वान्मत्पक्षे अन्तवद्वैकिल ते सामेत्युक्तोन्तवत्त्वदोषो नप्रसरतीतिभावः ॥

**परोवरीयोहास्य भवति । परोवरीयसोहलोकाञ्जयति । एतमेवंविद्वान्परोवरीयांसमुद्गीथमुपास्ते ॥**

यः परोवरीयांसमेतमाकाशशब्दितं परमात्मानं विद्वान् आकाशत्वेनोद्गीथमुपास्ते,तस्यपरोवरीयस्त्वगुणकंजीवनं भवति, परोवरीयस्त्वगुणकसकललोकावाप्तिश्च भवति ॥ प्रवाहणउद्गीथंसंवादयति॥

**तꣳहैनमतिधन्वा शौनक उदरशांडिल्यायोक्त्वोवाच ॥**

अतिधन्वनामा शुनकसुतः उदरशांडिल्यायर्षये । उदरशब्देन संततिर्लक्ष्यते । संततिशांडिल्यायेत्यर्थः । एतमुद्गीथमुक्त्वा अन्यदप्युवाचेत्यर्थः । किंतदित्यत्राह ॥

**यावन्तएनं प्रजायामुद्गीथंवेदिष्यंते परोवरीयोह्येभ्यस्तावदस्मिँल्लोके जीवनं भविष्यति तथामुष्मिँल्लोकेलोकइति ॥**

लोकेलोकइति वीप्सायां द्विर्वचनम् ।यावन्तः पुरुषाः उद्गीथमुपासिष्यंते तेषामुत्कृष्टमिहलोके जीवनंभविष्यति, तथा सर्वस्मिन्नपि परलोके भविष्यतीति । वेदिष्यंते इत्येतद्व्यत्ययेनात्मनेपदम् । इतीति। अतिधन्वा उवाचेतिपूर्वेणान्वयः । अत इदानींतनानामपि तद्विदां तत्फलमस्तीत्याह ॥

सयएतमेवंविद्वानुपास्ते । परोवरीयएवहास्यास्मिँल्लोके जीवनं भवति । तथामुष्मिलोकेलोकइति ॥

लोकेलोकइतिद्विरुक्तिर्विद्यासमाप्त्यर्था ॥

प्राणाधिकरणम् ।

अतएवप्राणः । १ । १ । २४ ॥

छांदोग्येप्रथमेनवमे--

मटचीहतेषु कुरुष्वाटिक्या सहजाययोषस्तिर्हचाक्रायण इभ्यग्रामे प्रद्राणक उवास ॥

चक्रस्य सुतः उषास्तिनामा कश्चन ऋषिः अश्मवृष्टिकृतदुर्भिक्षदूषितेषु कुरुदेशेषु आटिक्या अनुपजातपयोधरादिव्यंजनयाभार्यया सहइभ्यानां गजारोहाणां ग्रामे प्रद्राणकः अनशनेन कुत्सितांगतिमापन्नः ब्रह्मविद्यानिष्पत्तयेप्राणानामनवसादंकांक्षन्नुवास । द्राकुत्सायांगताविति हि धातुः । चक्रस्यगोत्रापत्यमित्यर्थे अश्वादित्वात् फञि चाक्रायण इतिरूपम् ॥

सहेभ्यंकुल्माषान् खादन्तंबिभिक्षे ॥

सोऽन्नार्थी पर्यटन्कुत्सितान्माषान्खादन्तमिभ्यंयाचितवान् । कुल्माषान्खादन्तमितिनिर्देशात्कुत्सितमाषार्थेकुल्माषशब्दस्यसाधुत्वम् ॥

तꣳहोवाच नेतोऽन्येविद्यन्ते यच्चयेम इम उपनिहिताइति ।

इतोमया भक्ष्यमाणादुच्छिष्टराशेः कुल्माषाअन्ये नविद्यन्ते यद्यस्माद्धेतोः इमेकुल्माषाः मे चये मदीये भक्ष्यचये उच्छिष्टराशौउपनिहिताः प्रक्षिताः, अतः किंकरोमीत्युषस्तिमिभ्य उवाचेत्यर्थः ॥

एतेषांमेदेहीतिहोवाच ॥

उच्छिष्टानामपि मध्येमह्यमपिकिंचिद्देहीति प्रार्थितवानित्यर्थः ॥

तानस्मैप्रददौ ॥

तान्कुल्माषान् उषस्तये दत्तवानित्यर्थः ।

हंतानुपानमित्युच्छिष्टंवैमेपीतंस्यादितिहोवाच ॥

समीपस्थमुदकं गृहीत्वा गृहाणानुपानमितिइभ्येनोक्तः तदुदकपाने उच्छिष्टोदकपानंमेस्यादित्युवाचेत्यर्थः ॥

नस्विदेतेप्युच्छिष्टाइतिनवा अजीविष्यमिमा न खादन्नितिहोवाच । कामोमउदपानमिति ॥

किमेते कुल्माषा अनुच्छिष्टा इतिइभ्येनपर्यनुयुक्तः कुल्माषाखादने स्वस्यजीवनहानिर्भवति तावन्मात्रखादनेन धृतप्राणस्य स्वस्योच्छिष्टोदकपानं कामकारितं निषिद्धंस्यादित्युषाचेत्यर्थः ॥

सहखादित्वाऽतिशेषाञ्जायाया आजहार ॥

उषस्तिस्तान् भक्षयित्वाऽतिशिष्टाञ्जायायै दत्तवानित्यर्थः ॥

साग्रएवसुभिक्षाबभूवतान् प्रतिगृह्य निदधौ ॥

साजाया प्रागेव लब्धान्ना बभूव । तथापिस्त्रीस्वभावादनवज्ञाय ( ज्ञया ) तान्पत्युर्हस्तात्प्रतिगृह्य निक्षिप्तवती ॥

सह प्रातः संजिहान उवाच यद्धतान्नस्य लभेमहि लभेमहि धनमात्राम् ॥

सहोषस्तिः शयनंपरित्यजन्नेव पत्न्यांशृण्वन्त्यां यद्यन्नस्यस्तोकमपिलभेमहि तेनप्राणं धृत्वाल्पमपिधनंलभेमहीत्युवाचेत्यर्थः । कथं धनमात्रालभ्यते इत्यत्राह ॥

राजासौयक्ष्यतेस मा सर्वैरार्त्विज्यैर्वृणीतेति ॥

राजासौनातिदूरे यजते स मांदृष्ट्वा सर्वाण्यार्त्विज्यानित्वया कारयितव्यानीति प्रार्थयेतेत्युवाचेत्यर्थः ॥

तंजायोवाच हंत पत इम एव कुल्माषा इति ॥

हेपतेमद्धस्तनिक्षितास्त्वया कुल्माषास्ते इम एव तान्गृहाणेत्युक्तवतीत्यर्थः ॥

तान्खादित्वाऽमुंयज्ञं विततमेयाय ॥

तानेवपर्युषितोच्छिष्टान्कुल्माषान् भक्षयित्वा विस्तीर्णं यज्ञवाटंगतवानित्यर्थः ॥

तत्रोद्गात्रादीना ( द्गातॄना ) स्तावे स्तोष्यमाणानुपोपविवेश ॥

आस्तुवंत्यस्मिन्नित्यास्तावः स्तोत्रस्थानम् । सदसि स्तोतुंप्रवृत्तानामुद्गातृप्रस्तोतृप्रतिहर्तॄणांसमीपे उपविष्टवानित्यर्थः ॥

सहप्रस्तोतारमुवाच । प्रस्तोतर्यादेवता प्रस्तावमन्वायत्ता, तांचेदविद्वान्प्रस्तोष्यसि, मूर्द्धाते विपतिष्यतीति ॥

हेप्रस्तोतः प्रस्तावभक्तावध्यस्य यादेवतोपास्या तामविदित्वा यदि विदुषो मम समीपे प्रस्तोष्यसि मूर्द्धा ते विपतिष्यतीत्यर्थः । यद्यपि तेनोभौकुरुतो यश्चैतदेवंवेद यश्चनवेदेत्यविदुषोप्यार्त्विज्या-

धिकारोस्ति । तथापि विद्वत्सन्निधाववविदुषः कर्माधिकारोनास्तीतिभावः ॥

एवमेवोद्गातारमुवाच । उद्गातर्यादेवतोद्गीथमन्वायत्ता, तांचेदविद्वानुद्गास्यसि । मूर्धा ते विपतिष्यतीति । एवमेव प्रतिहर्तारमुवाच । प्रतिहर्तर्यादेवता प्रतिहारमन्वायत्ता, तांचेदविद्वान्प्रतिहरिष्यसि, मूर्धा ते विपतिष्यतीति ॥

स्पष्टोर्थः ॥

तेह समारतास्तूष्णीमासांचक्रिरे ॥

ते ह प्रस्तोत्रादय उपरताः संतः मूर्द्धपातभयात्तूष्णीमेव स्थिता इत्यर्थः ॥

अथहैनं यजमान उवाच । भगवन्तं वा अहं विविदिषाणीति ॥

कोभवानिति भवन्तंज्ञातुमिच्छामीति उषस्ति यजमान उक्तवानित्यर्थः ॥

उषस्तिरस्मि चाक्रायण इति होवाच ॥

स्पष्टोर्थः ॥

सहोवाच भगवन्तंवाअहमेभिः सर्वैरार्त्विज्यैःपर्यैषिषं, भगवतो वाहमविद्याऽन्यानवृषि भगवांस्त्वेवमेसर्वैरार्त्विज्यैरिति ॥

भगवंतंसर्वगुणोपेतं श्रुत्वा सर्वाण्यार्त्विज्यानि भगवदधीनानि कर्तुं भवतोन्वेषणंकृतवानस्मि।भगवतः अविद्या विदिर्लाभः नविदिः अविदिः'इक्कृष्यादिभ्यः।३।३।१०८।।वा०'इति इक्। अविद्या अला-

भेन, इमानृत्विजोवृतवानस्मि । इतः परमपि भगवानेवसर्वैर्ऋत्विक्कर्मभिर्वृत इत्युवाचेत्यर्थः । सर्वार्त्विज्यार्थंवृत इति यावत् ॥

**तथेतिह्यथतर्ह्येत एवसमतिसृष्टास्तुवतां यावत्त्वेभ्योधनं दद्यास्तावन्मे ( न्मम ) दद्याइति ॥**

तथेत्युपगम्यानंतरं त्वया पूर्ववृताएतएव मया सम्यक् प्रसन्नेनानुज्ञाता उपदिष्टदेवताः संतस्तुवतां स्तुवंतु । एभ्योयावद्धनंप्रयच्छसि तावन्मम दद्याइत्युक्तवान् ॥

**तथेतिहयजमानउवाच ॥**

स्पष्टोर्थः ॥

**अथ हैनंप्रस्तोतोपससाद ॥**

उषस्तिवचनंश्रुत्वाप्रस्तोता विनयेन समीपमागतवानित्यर्थः ॥

**प्रस्तोतर्यादेवता प्रस्तावमन्वायत्ता, तांचेदविद्वान् प्रस्तोष्यसि, मूर्धा ते विपतिष्यतीति, मा भगवानवोचत् कतमा सा देवतेति ॥**

भगवान्मांप्रतिप्रस्तोतर्यादेवतेत्यादिना यां देवतां पृष्टवान्सा देवता केति पप्रच्छेत्यर्थः ॥

**प्राणइतिहोवाच ॥**

अत्र प्राणयितृत्वगुणयोगात् प्राणशब्देन परमात्मैवोच्यते ॥ प्राणशब्दस्यमुख्यप्राणपरत्वं व्यावर्तयति ॥

**सर्वाणिहवा इमानि भूतानि प्राणमेवाभिसंविशंति, प्राणमभ्युज्जिहते, सैषा देवता प्रस्तावमन्वायत्ता ॥**

प्राणमभिलक्ष्यसंविशंति । समित्येकीकारे । ऐक्येन विशंति लीयन्तइत्यर्थः । प्राणमभ्युज्जिहते प्राणादेवोद्गच्छंतीत्यर्थः । सर्वभू-

तलयोत्पत्तिस्थानत्वेन वेदान्तेषु प्रसिद्धा प्राणरूपादेवता प्रस्ताव-भक्त्यनुगता प्रस्तावभक्तावध्यस्योपास्येत्यर्थः ॥

तांचेदविद्वान्प्रास्तोष्यो मूर्धा ते व्यपतिष्यत्तथोक्त स्यमयेति ॥

तांचेदविद्वान्प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति मदुक्त्यनंतर-मप्युक्तिमनादृत्यतद्देवतामनभिज्ञाय यदि प्रास्तोष्यस्ततोमूर्धाते व्यपतिष्यदेव । अतस्साधुकृतं त्वया मत्समीपमागत्य विनयेन पृच्छतेतिभावः । अत्र मूर्द्धाते व्यपतिष्यत् तथोक्तस्यमयेत्यु-क्त्या विदुषैवमुक्तस्याविदुषः तदनाकरेण कर्मकरणे शिरः पातलक्षणः प्रत्यवायः । नतुविदुषानुक्तस्याविदुषइतिभावः । व्यासार्यैस्तु मूर्धा ते व्यपतिष्यदित्यस्यऽऽत्मसत्ता नलभ्येतेत्यर्थ इत्यात्मसत्ताहानिपर्यन्तः प्रत्यवायोवर्णितः ॥

ज्योतिरधिकरणम् ।

ज्योतिश्चरणाभिधानात् । १ । १ । २५ ॥

छांदोग्येतृतीयाध्यायेद्वादशखण्डस्योपक्रमे ॥

चतुष्पात्त्वषाड्विध्याभ्यां ब्रह्मणोगायत्रीसादृश्यानुसंधानरूपा वि-द्याप्रस्तूयते " इन्द्रःशचीपतिः । बलेनपीडितः । दुःश्च्यवनोवृषा । समित्सुसासहिः"इतिहिगायत्रीचतुष्पदा।एकैकस्य पादस्य षडक्षरा-त्मकतया षडक्षरपादवत्त्वेन षड्विधाच।एवंब्रह्मणोपि भूतशब्दितात्म-वर्ग एकःपादः, कर्मार्जितभोगस्थानरूपः पृथिवीलोक एकः पादः, भोगोपकरणंशरीरमेकः पादः, आत्मस्थित्यनुगुणंप्रदेशविशेषरूपं हृदयमेकः पादः, इतिभूतपृथिवीशरीरहृदयानि चत्वारः पादाः । तत्रसर्वभूतलक्षणपादस्यब्रह्मात्मकवाक्कर्तृकगानकर्मत्वत्राणकर्मत्व लक्षणंविधाद्वयम् । पृथिवीलक्षणस्य पादस्य सर्वभूतप्रतिष्ठात्वसर्व-

भूतानतिवर्तित्वलक्षणंविधाद्वयम् । शरीरहृदयलक्षणयोः पादयोः प्राणप्रतिष्ठात्वतदनतिवर्तित्वलक्षणंविधाद्वयम् । द्वयोरपिविधाद्वययो र्भेदाभावात् । ततश्च ब्रह्मरूपागायत्रीभूतपृथिवीशरीरहृदयरूपपाद- चतुष्टवत्तयाचतुष्पदा । एवंगानकर्मत्वत्राणकर्मत्वसर्वभूतप्रतिष्ठात्व- सर्वभूतानतिवर्तित्वसर्वप्राणप्रतिष्ठात्वसर्वप्राणानतिवर्तित्वलक्षणवि- धाषट्कयुक्ततया षड्विधा । अतश्चतुष्पात्त्वषाड्विध्याभ्यांब्रह्मणि गाय- त्रीसादृश्यानुसंधानं कर्तव्यमितिप्रतिपादयति ॥

गायत्रीवाइदंसर्वंभूतंयदिदंकिञ्च ॥

अत्रगायत्रीशब्देन नप्रसिद्धागायत्र्यभिधीयते।तस्या भूतादिपाद चतुष्टयसंबन्धाभावात्,"एतावानस्य महिमा"इति पुंसूक्तमंत्रप्रतिपा- द्यत्वाभावाच्च । अपितु परमात्मा । यथाकुण्डपायिनामयने मासमेक मग्निहोत्रं जुहोतीत्यग्निहोत्रशब्दः प्रयुज्यमानः तत्सादृश्यविशिष्टा- नुष्ठानार्थः, तथा गायत्रीशब्दोब्रह्मणि प्रयुज्यमानः तत्सादृश्यानु- सन्धानार्थः । ततश्च गायत्रीशब्देनब्रह्मैवाभिधीयते । वैशब्दोऽवधार- णार्थः । ब्रह्मैव परिदृश्यमानं सर्वभूतात्मकमित्यर्थः । ततश्च ब्रह्मणो- भूतलक्षणपादवत्त्वमुक्तम् ॥ गायत्रीशब्दप्रवृत्तिनिमित्तमपि ब्रह्मण्यु- पपादयन्विधाद्वयमाह ॥

वाग्वैगायत्री ॥

गायत्रीशब्दितं ब्रह्मैव वाग्रूपविशिष्टंभवतीत्यर्थः । " शब्दमू- र्तिधरस्यैतद्रूपंविष्णोर्महात्मनः " इतिपराशरस्मृत्यनुरोधेन[1] ब्रह्मण एव शब्दरूपत्वमितिभावः ॥ ततश्चकिमित्यत्राह ॥

वाग्वाइदंसर्वंभूतंगायति (च) त्रायतेच ॥

वाग्रूपमेवब्रह्म सर्वाणिभूतान्यभिधत्ते । हिताहितविधिनिषेधमुखेन

१ पराशरास्मृतिशब्देनविष्णुपुराणंविवक्षितम् ।

त्रायतेच। अतोब्रह्मणोवाग्रूपस्य गानत्राणकर्तृत्वाभ्यां गायत्री-शब्दवाच्यत्वम्। भूतात्मकपादवतोब्रह्मणोवाक्कर्तृकगानत्राणकर्म-त्वाभ्यां द्वैविध्यंचोक्तंभवति॥ उक्तार्थानुवादपूर्वकंद्वितीयंपादं सामा-नाधिकरण्येनाह॥

## यावैसागायत्रीइयंवावसायेयंपृथिवी॥

उक्तरूपविशिष्टप्रकृतधर्मिपरः यच्छब्दः। यासासर्वभूतरूपैक-पादयुतागायत्री गायत्र्याख्यंब्रह्म तदेव प्रसिद्धापृथिवीत्यर्थः। कथं पृथिव्याब्रह्मात्मकत्वमित्यत्राह॥

## अस्यांँहीदँसर्वंभूतंप्रतिष्ठितम्॥

ब्रह्मात्मकत्वादेव हि सर्वभूतप्रतिष्ठात्वम्। नहि केवलपृथिव्याः सर्वभूतधारणशक्तिरस्तीत्यर्थः॥ प्रतिष्ठात्वंच नियतमित्याह॥

## "एतामेवनातिशीयते" इति॥

पृथिवीं भूतजातं नातिवर्तते। कर्मवश्यात्मनांहि प्रतिष्ठात्वादेव पृथिवीनियमेनाशक्यातिक्रमणेत्यर्थः। पृथिवीमयब्रह्मांडोदरे हिभो-क्तृवर्गः परिवर्तते,नततोऽन्यत्रेतिभावः। एवंद्वितीयःपादो भूतप्रतिष्ठा-त्वतदनतिवर्तित्वरूपंविधाद्वयं चोक्तम्॥

अथतृतीयंपादमाह॥

## यावैसापृथिवी यं वाव सा यदिदमस्मिन् पुरुषे शरीरम्॥

पुरुषशब्दः शरीरविशिष्टजीवपरः। पृथिवीरूपपादविशिष्टा या गायत्री गायत्र्याख्यंब्रह्म साशरीरंशरीराख्यपादविशिष्टेत्यर्थः। भूत-पृथिव्योर्गायत्रीसामानाधिकरण्येन निर्दिष्टतया भूतपृथिवीशब्दयो-र्ब्रह्मपर्यंतत्वेन तदुपस्थापनक्षमत्वात्। अग्न्यप्रायन्यायेनात्रशरीर-लक्षणपादान्तरस्यनिष्कर्षकशब्दत्वेपि सामानाधिकरण्येन निर्दे-शोयुक्तः॥

शरीरस्यब्रह्मात्मकत्वंप्राणप्रतिष्ठात्वतदनतिवर्तित्वाभ्यामुपपादयति ॥

अस्मिन्हीमे प्राणाः प्रतिष्ठिताः । एतदेवनातिशीयन्ते ॥

नातिवर्तन्तइत्यर्थः ॥

चतुर्थपादमाह ॥

यद्वै तत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नंतःपुरुषे हृदयम् ॥

शरीराख्यपादविशिष्टं यद्गायत्र्याख्यंब्रह्म तदेवहृदयं हृदयलक्षणपादकमित्यर्थः ॥

हृदयस्य ब्रह्मात्मकत्वमुपपादयति ॥

अस्मिन्हीमे प्राणाःप्रतिष्ठिताः।एतदेवनातिशीयंते॥

प्राणशब्देन प्राणापानादय इंद्रियाणिवा कथ्यन्ते । तेषां हृदयसंबन्धिनाडीद्वारा हृदयप्रतिष्ठितत्वम् । एवंतृतीयचतुर्थपादयोः प्राणप्रतिष्ठात्वतदनतिवर्तित्वरूपंविधाद्वयंचोक्तम् ॥

एवमुक्तंचतुष्पात्त्वं षाड्विध्यंच निगमयति ॥

सैषाचतुष्पदाषड्विधागायत्री ॥

नन्वेवं चतुष्पात्त्वेब्रह्मणः परिच्छिन्नत्वंस्यादितिशङ्कायामुक्तस्य महिम्न एतावत्त्वप्रतिषेधिकामृचमुदाहरति ॥

तदेतदृचाभ्यनूक्तम् ॥

तदेतद्गायत्र्याख्यंब्रह्माभिमुखीकृत्यऋचाप्युक्तम् ॥

तामेवर्चंपठति ॥

तावानस्यमहिमा ॥

पूर्वोक्तः सर्वोपि एतस्यमहिमा नियाम्यवर्गः ।

ततोज्यायाꣳश्च पुरुषः ॥

पूर्वोक्तमहिमापेक्षया पुरुषःपरमात्मा ज्यायान् । ततोधिकमहिमशालीत्यर्थः ॥

पादोस्यसर्वाभूतानि ॥

अत्र सर्वाभूतानीति कार्यजगदंतर्गताऽचित्संसृष्टाश्चेतनाउच्यंते । सर्वा सर्वाणि पादः अंशमात्रमित्यर्थः। सर्वशब्दात्परस्य शेः"सुपांसुलुक्० ।७।१।३९॥" इतिलुकिनलोपेरूपम् ॥

त्रिपादस्यामृतंदिवि ॥

अत्रद्युशब्दः समष्टिव्यष्टितत्त्वबहिर्भूताप्राकृतस्थानविशेषपरः । अप्राकृतस्थानविशेषेऽस्यपरमात्मन अमृतंपादत्रयमित्यर्थः । त्रिपात्त्वंचाऽप्राकृतैर्भोग्यभोगस्थानभोगोपकरणविशेषैर्वा भूषणास्त्रादिरूपेण जगदन्तर्गतवस्त्वभिमानिभिर्नित्यैर्भगवदनुभवमात्रपरैर्नित्यसिद्धैश्चमुक्तैश्चात्मभिर्वा संभवति ॥

अथचतुर्थपादत्वेनोक्तस्योपास्यतयावक्ष्यमाणस्यहृदयस्यस्तुत्यर्थं तत्स्थाकाशस्य बाह्याकाशाभेदेन महत्त्वंवक्तुं बाह्याकाशस्य ब्रह्मतुल्यत्वंसामानाधिकरण्येनाह ॥

यद्वैतद्ब्रह्मेतीदं वाव तद्योयं बहिर्धा पुरुषादाकाशो योवैसबहिर्धा पुरुषादाकाशो यं वाव सयोयमंतःपुरुष आकाशः ॥

स्वकार्यव्याप्तत्वामूर्तत्वाचलत्वादिभिर्ब्रह्मतुल्यबाह्याकाशाभिन्नःपुरुषांतर्वर्त्याकाशइत्यर्थः । बाह्यान्तराकाशयोर्भेदसत्त्वेपि धर्मैक्याभिप्रायेणाभेदनिर्देशः ॥

योवै सोंतः पुरुष आकाशोऽयं वाव स योयमंतर्हृदयआकाशः ॥

एवंब्रह्मतुल्यबाह्याकाशाभिन्नपुरुषांतर्गताकाशाभेदं हृदयाकाशस्योक्त्वैतादृशमहिमशाली हृदयाकाशइतिस्तौति ॥

**योवै सोंतर्हृदय आकाशः ॥**

अन्तर्हृदये वर्त्तमानो य आकाशः अयं स एतादृशमहिमशालीत्यर्थः ॥ अनयाच हृदयाकाशस्तुत्या चतुर्थपादत्वेनोक्तंहृदयंस्तुतंभवति ॥

एवंचतुष्पदः षड्विधस्य ब्रह्मणः प्रपञ्चान्तर्भावेन परिच्छिन्नत्वास्थिरत्वशंकाव्यावृत्यर्थंपूर्णत्वाप्रवर्तित्वगुणकतयोपासनं मोक्षफलंविदधाति॥

**तदेतत्पूर्णमप्रवर्ति ॥**

पूर्णत्वमपरिच्छिन्नत्वमप्रवर्तित्वमचलत्वं स्थिरत्वम् ॥

**पूर्णामप्रवर्तिनींश्रियंलभतेयएवंवेद ॥**

अनन्तस्थिराश्रीर्मुक्तैश्वर्यमेव । तदुपासीनोमुक्तिं भजतीत्यर्थः ॥

एवंगायत्रीविद्याप्रकृतस्यद्युसंबन्धिनः सकलफलप्रदस्य ब्रह्मणः आभिरूप्यकीर्तिमत्त्वरूपफलविशेषार्थंकौक्षेयज्योतीरूपत्वेनोपासनविधानायाह ॥

**अथ यदतः परोदिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु ॥**

"तथाक्षरात्संभवतीहविश्वम्" इत्यत्रजगदन्तर्वर्तिव्यष्टिजातेविश्वशब्दप्रयोगाद्विश्वशब्दोव्यष्टिपरः, सर्वशब्दः परिशेषात्समष्टितत्त्वपरइति व्यासार्यैरुक्तम् । ततश्च दिवोऽप्राकृतस्थानविशेषस्योपरिष्टात्समष्टिव्यष्टिबहिर्भूतेषु स्वावधिकोत्तमरहितोत्तमस्थानविशेषेषु " तस्यभासासर्वमिदंविभाति " इत्यवभासकतयाज्योति-

इशब्दितः परमात्मायोदीप्यतइत्यर्थः। अत्र यच्छब्दस्य सर्वनामत्वेन प्रकृतपरामर्शितयाप्रकृतंत्रिपाद्ब्रह्म परामृश्यते ॥

**इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषेज्योतिः ॥**

तद्दिवः परस्ताद्दीप्यमानं त्रिपाद्ब्रह्म कौक्षेयज्योतिरेव। कौक्षेय ज्योतिश्शरीरकमेवेत्यर्थः। "अहंवैश्वानरोभूत्वा प्राणिनांदेहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नंचतुर्विधम्" इति स्मरणात्। ततश्च तदात्मकत्वानुसंधानं कर्तव्यमित्यर्थः ॥

**तस्यैषादृष्टिर्यत्रैतदस्मिञ्छरीरे संस्पर्शेनोष्णिमानं विजानाति ॥**

तस्य परमात्मशरीरभूतस्य जाठराग्नेरेषादृष्टिः। दर्शनमित्यर्थः। यत्र यदा अस्मिञ्छरीरे हस्तस्पर्शेनोष्णिमानं विजानातीति यत्तदौष्ण्योपलंभनमित्यर्थः। उपलभ्यमानोष्णस्पर्शस्य जाठराग्निसंबन्धित्वात्तत्स्पर्शसाक्षात्कार एव तत्साक्षात्कारइत्यर्थः ॥

**तस्यैषाश्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति ॥**

यत्र यदाकर्णावंगुलिभ्यांपिधाय निनदमिवरथघोषमिवनदथुरिवनदथुमिव ऋषभकूजितमिव बहिर्ज्वलतोग्नेः शब्दमिव शृणोतीति यत्तदेव जाठराग्निश्रवणम्। आन्तरस्य शब्दस्य जाठराग्निसंबन्धित्वात्। तच्छब्दश्रवणमेवतच्छ्रवणमित्यर्थः ॥

**तदेतद्दृष्टंच श्रुतंचेत्युपासीत ॥**

तदेतत्परमात्मशरीरभूतं कौक्षेयज्योतिरुक्तरीत्यादृष्टत्वश्रुतत्वाभ्यामुपासीतेत्यर्थः ॥

तस्य फलमाह।

**चक्षुष्यः श्रुतोभवति। यएवं वेद यएवंवेद ॥**

चक्षुष्यत्वमाभिरूप्यम् । चक्षुषेहितइत्यर्थे " शरीरावयवाद्यत् । ५ । १ । ६ ॥ " इतियत् । श्रुतत्वंकीर्तिमत्त्वमिति । द्विरुक्तिर्विद्यासमाप्त्यर्था ॥

इन्द्रप्राणाधिकरणम् ।

**प्राणस्तथानुगमात् ॥ १ । १ । २९ ॥**

कौषीतकिब्राह्मणे प्रतर्दनविद्यायाम् ॥

**प्रतर्दनोहवै दैवोदासिरिन्द्रस्य प्रियंधामोपजगाम युद्धेनचपौरुषेणच ॥**

दिवोदासस्यापत्यं दैवोदासिः, नाम्ना प्रतर्दनः, युद्धसाधनबलेन शौर्येणचयुतः इंद्रस्याप्रियंस्थानंस्वर्गमुपगतइत्यर्थः ॥

**तꣳहेन्द्रउवाच ॥ प्रतर्दन वरंवृणीष्वेति ॥**

स्पष्टोर्थः ॥

**सहोवाच प्रतर्दनः । त्वमेव मेवरंवृणीष्व । यंत्वं मनुष्यायहिततमंमन्यसे ॥**

सर्वज्ञस्त्वं यं वरं मनुष्याय मे हिततमं मन्यसे तमेव वृणीष्व । अहमज्ञः हिततमं वरं नवेद्मीति ॥

**तꣳहेन्द्र उवाच ॥ नवै परः परस्मै वृणीते । त्वमेव वृणीष्वेति ॥**

नह्यन्योऽन्यार्थंवरं वृणीते । अतस्त्वदभिलषितं वरं त्वमेव मत्तोवृणीष्वेत्यर्थः ॥

**अवरोवै तर्हि किल म इतिहोवाच प्रतर्दनः ॥**

यदि हि त्वयापि नव्रियते तर्हि मम हिततमस्यापरिज्ञानाद्वराभाव एव प्राप्त इति प्रतर्दन इन्द्रमुवाचेत्यर्थः ॥

**अथो खल्विन्द्रः सत्यादेव नेयाय ॥**

एवमुक्तस्ते वरं ददानीति सत्याद्वाक्यान्नापेतः । तत्रहेतुमाह ॥

सत्यंहीन्द्रइति ॥

इन्द्रस्य सत्यप्रधानत्वादित्यर्थः । ततश्च वरंददानीति मदुक्तं वाक्यमसत्यं माभूदित्यमन्यतेत्यर्थः ॥

सहोवाच । मामेवविजानीहि । एतदेवाहंमनुष्याय हिततमंमन्ये । यन्मांविजानीयात् ॥

यदि ते हिततममुपदेष्टव्यं तर्हि मदुपासनमेवाहिततमंमोक्षसाधनमिति मन्मतम् । अत इतरत्परित्यज्य मामुपास्स्वेत्यर्थः । अत्र प्रसिद्धजीवभावस्येन्द्रस्यहिततमत्वलक्षणमोक्षसाधनत्वाश्रयोपासनकर्मत्वासंभवान्मामितिशब्दः स्वात्मभूतं परमात्मानमभिदधाति । "यआत्मनि तिष्ठन्" । "अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा" इतिशास्त्रेणस्वस्याप्यात्मभूतः परमात्मा निर्दिश्यते । अहंबुद्धिशब्दाः परमात्मपर्यंताइतिजानतइन्द्रस्यस्वात्मभूते परमात्मनि मामिति शब्दप्रयोगे नानुपपत्तिः ।ननु स्वायत्तेशब्दप्रयोगेऽसंदिग्धंपरमात्मवाचकमेवपदं प्रयुज्यताम्, किन्यायलभ्यपरमात्मपर्यवसानेन मामितिशब्देनेतिचेत् ॥ स्यादेवम् ॥ यदिपरमात्मस्वरूपमात्रोपासनंविधित्सितंस्यात् । अपितु स्वशरीरकतया । अतोमामितिनिर्देश उपपद्यते । तत्क्रतुन्यायेन स्वोपासकस्य पापाश्लेषंवक्तुंस्वस्यपापाश्लेषं दर्शयति ॥

त्रिशीर्षाणंत्वाष्ट्रमहनम् ॥

त्रिशिरस्कंत्वाष्ट्रंविश्वरूपंहतवानस्मि ॥

अरुन्मुखान्यतीन् शालावृकेभ्यः प्रायच्छम् ॥

रौतीतिरुद्वेदः । रुत् मुखे न विद्यतेयेषांते अरुन्मुखाः । वेदांतविमुखान्यतीञ्छ्वविशेषेभ्यः खादनाय प्रायच्छम् ॥

बह्वीः संधा अतिक्रम्य दिवि प्राह्लादीयानतृणहमन्तरिक्षे पौलोमान्पृथिव्यां कालकञ्जान् ॥

नहनिष्यामीति कृताबह्वीःप्रतिज्ञा अतिक्रम्य दिविवर्तमानान्प्रह्लादपुत्रानतृणहम् अहनम् । तृहहिंसायामिति धातुः । अंतरिक्षे पौलोमान् पुलोमसुतान् पृथिव्यांकालकञ्जाख्यानसुरांश्चहिंसितवानास्मि॥

तस्यमे तत्र न लोम च मीयते ॥

एवंहिंसितवतो मे लोमापि न हिंस्यते ब्रह्मविद्याप्रभावादित्यर्थः॥

सयोमांविजानीयान्नास्यकेनच कर्मणा लोको मीयते न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया नास्य पापं चकृषोमुखंनीलंवेति ॥

यएतादृशं मदात्मकं परमात्मानमुपास्ते तस्यकेनापि कर्मणा मातृवधपितृवधस्तेयभ्रूणहत्यादिलक्षणेन परलोकप्राप्तिर्नविरुध्यते । एवंपापंकृतवतोपि मयेदृशं पापं कृतमिति निर्वेदजनितमुखवैवर्ण्यमपि नास्तीत्यर्थः। चकृष इति क्वस्वंतात्षष्ठी ॥ एवंचेतनविशेषरूपस्वविशिष्टपरमात्मोपासनमुक्त्वाऽचेतनविशेषरूपप्राणविशिष्टोपासनमाह ॥

सहोवाच ॥ प्राणोस्मि प्रज्ञात्मा । तंमामायुरमृतमित्युपास्स्व ॥

प्रज्ञारूप आत्मा प्रज्ञात्मा जीवः । जीवशरीरकइत्यर्थः । जीवशरीरकोहं प्राणोस्मि प्राणशरीरकोहमस्मि।तादृशं प्राणशरीरकं मामायुरमृतमित्युपास्स्व॥कथंप्राणशरीरकस्यायुष्ट्वाऽमृतत्वेइत्याशंक्याह ॥

आयुःप्राणःप्राणोवाआयुःप्राणउवाअमृतंयावद्ध्यस्मिञ्छरीरेप्राणो वसति तावदायुः । प्राणेनह्येवामुष्मिँल्लोकेऽमृतत्वमाप्नोति ॥

शरीरेप्राणस्थितेरुच्छ्वासादिलक्षणायुःसाधनत्वादायुःप्राणः । लोकांतरेचिरस्थायित्वरूपामृतत्वप्राप्तेःप्राणाधीनोपायानुष्ठानसाध्यत्वात्प्राणस्यामृतत्वम्।अतआयुष्ट्वामृतत्वेप्राणस्योपपद्येते।तद्द्वारापरमात्मनश्चोपपत्तेःआयुष्ट्वामृतत्वाभ्यां प्राणशरीरकब्रह्मणउपासनमुपपद्यते । यद्वा अत्र व्यासार्योक्तरीत्या तंमामायुरिति वाक्ये मामिति जीवविशिष्टतोच्यते । आयुरिति प्राणविशिष्टता । योवैप्राणइति ह्यनंतरमेवश्रवणात्।अमृतमिति स्वेनरूपेणावस्थितिः । एवंचास्मिन्नेव वाक्ये स्वेनरूपेण चिदचिद्विशिष्टतयाच त्रिविधोपासनंविधीयते । अतोनोपासनात्रयविधिकृतवाक्यभेद इति द्रष्टव्यम् ॥ प्रज्ञात्मकत्वविशिष्टोपासनस्य फलमाह ॥

प्रज्ञया सत्यसंकल्पमिति ॥

अपहतपाप्मत्वादिगुणाष्टकलक्षणं ब्राह्मंरूपमित्यर्थः ॥

योवै प्राणः सा प्रज्ञा यावै प्रज्ञा स प्राणः ॥

ननु प्रज्ञाशब्दितजीवस्य प्राणस्य च कथमभेद इत्यत्राह ॥

सहह्येतावस्मिञ्छरीरेवसतस्सहोत्क्रामतः ॥

सहोत्क्रमणप्रतिष्ठत्वादेककार्यकारित्वादभेदव्यपदेशोयुज्यतेइत्युक्त्वा " प्राण एव प्रज्ञात्मा इदंशरीरं परिगृह्योत्थापयति " इति प्रज्ञाशब्दितजीवसहायकस्य मुख्यप्राणस्यैव शरीरोत्थापकत्वमिति मुख्यप्राणस्यामुख्यप्राणापेक्षया वैलक्षण्यमुक्त्वा "यत्रैतत्पुरुषः सुप्तः स्वप्नंनकथंचनपश्यति । अथास्मिन्प्राण एवैकधा भवति " इति

सुषुप्तिदशायामपि प्राणविशिष्टपरमात्मनि जीवस्य लीनतया

सुषुप्तावपि जीवप्राणयोः साहचर्यंप्रदर्श्य प्राणस्य सर्वभूतोपजीव्यत्वमुक्त्वा “ अथ खलु यथा प्रज्ञायां सर्वाणि भूतान्येकं भवन्ति तद्व्याख्यास्यामः ” इति प्रज्ञाशब्दितजीवस्य सर्वभूताश्रयत्वप्रकारः कथ्यत इति प्रतिज्ञायाऽऽह ॥

वागेवास्या एकमंगमुदूढं तस्या नामपुरस्तात्प्रतिविहिता भूतमात्रा ॥

अस्याः प्रज्ञायाः प्रज्ञया । जीवेनेति यावत् । वागिंद्रियमेकमंगमुदूढंपरिगृहीतामित्यर्थः । उद्वाहकर्मभूतपत्नीवत्परिगृहीतामित्यर्थः। वस्तुतस्तु स्वांगाभावात्तस्या वाचः पुरस्ताद्ग्राह्यत्वेन प्रतिनियततयाविहिता भूतमात्रा नाम । एवमुत्तरत्रापिद्रष्टव्यम् ॥

घ्राणमेवास्या एकमंगमुदूढं तस्य गंधः पुरस्तात् प्रतिविहिता भूतमात्रा। चक्षुरेवास्या एकमंगमुदूढं तस्य रूपंपुरस्तात्प्रतिविहिता भूतमात्रा । श्रोत्रमेवास्या एकमंगमदूढं तस्यशब्दः पुरस्तात्प्रतिविहिता भूतमात्रा। जिह्वैवास्या एकमंगमुदूढं तस्या अन्नरसः पुरस्तात्प्रतिविहिता भूतमात्रा। हस्तावेवास्या एकमंगमुदूढं तयोः कर्माणिपुरस्तात्प्रतिविहिता भूतमात्रा । शरीरमेवास्या एकमंगमुदूढं तस्य सुखदुःखेपुरस्तात्प्रतिविहिता भूतमात्रा। उपस्थमे वा ( स्थ एवा) स्या एकमंगमुदूढं तस्यानन्दोरतिःप्रजातिः पुरस्तात्प्रतिविहिता भूतमात्रा ॥

प्रजातिः प्रजननमित्यर्थः ॥

पादावेवास्याएकमंगमुदूढं तयोरित्याः पुरस्तात्प्रतिविहिता भूतमात्रा ॥

इत्याः गमानि ॥

प्रज्ञैवास्या एकमंगमुदूढं तस्या धियो विज्ञातव्यंकामाः पुरस्तात्प्रतिविहिता भूतमात्रा ॥

अत्र प्रथमान्तः प्रज्ञाशब्दो मनःपरः । नतुप्रज्ञारूपजीवपरः ।उत्तरत्र नेत्यांविजिज्ञासीतएतारंविद्यादित्यनंतरंनमनोविजिज्ञासीतेतिमनश्शब्दप्रयोगात्स्थानप्रमाणेन प्रज्ञाशब्दस्य मनएवार्थः । धियो विज्ञातव्यं मनोजन्यज्ञानविषयइत्यर्थः । कामाःकाम्यमाना इत्यर्थः॥

एवंनामगन्धरूपशब्दरसकर्मसुखदुःखानन्दगतिज्ञातव्यानां दशानां भूतमात्राणां वाग्घ्राणादिविषयत्वमुक्त्वाप्रज्ञाशब्दितस्य जीवस्य नामादिदशविधभूतमात्राव्याप्तिप्रकारमाह ॥

प्रज्ञया वाचंसमारुह्य वाचा सर्वाणि नामान्याप्नोति॥

अत्र प्रज्ञाशब्द अव्यवहितप्रज्ञाशब्दनिर्दिष्टमनःपरः । ततश्च मनसा वागिंद्रियमधिष्ठाय तद्द्वारा सर्वाणि नामानि अभिलपनक्रियाद्वाराज्ञानेन व्याप्नोति ॥

प्रज्ञया घ्राणंसमारुह्य घ्राणेन सर्वान्गन्धानाप्नोति ॥

मनसा घ्राणेन्द्रियमधिष्ठाय तद्द्वारा सर्वान् गन्धान् ज्ञानेनाप्नोति। एवमुत्तरत्रापि द्रष्टव्यम् ॥

प्रज्ञया चक्षुस्समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति। प्रज्ञयाश्रोत्रं समारुह्य श्रोत्रेण सर्वाञ्छब्दानाप्नोति। प्रज्ञया जिह्वां समारुह्य जिह्वया सर्वान् अन्नर-

सानाप्नोति। प्रज्ञया हस्तौ समारुह्य हस्ताभ्यां सर्वाणि कर्माण्याप्नोति। प्रज्ञया शरीरं समारुह्य शरीरेण सुखदुःखे आप्नोति। प्रज्ञयोपस्थं समारुह्य उपस्थेनानन्दं-रतिं प्रजातिमाप्नोति। प्रज्ञया पादौसमारुह्य पादाभ्यां सर्वाइत्या आप्नोति। प्रज्ञयैवधियं समारुह्य धियोविज्ञातव्यं कामानाप्नोति ॥

ननु मनोद्वारा वागादिनियमनं किमर्थमित्याशंक्याह ॥

नहिप्रज्ञापेता वाङ्नामकिंचित्प्रज्ञापयेत् ॥

नहिमनोऽनधिष्ठितं वागिन्द्रियं नाम प्रज्ञापनसमर्थं भवतीत्यर्थः। अत्र लोकमेव साक्षित्वेनोदाहरति ॥

अन्यत्र मे मनोऽभूदित्याह नाहमेतन्नाम प्राज्ञासिषमिति ॥

लोकोहि अन्यत्र मे मनोभूदित्युक्त्वैतन्नाम नप्राज्ञासिषमित्याह। मनोव्यासङ्गवशाज्ज्ञानपूर्वकनामाभिलपनलक्षणवागिंद्रियव्यापारोनाभूदितिहिलोकः प्रत्येतीत्यर्थः। एवमुत्तरत्रापिद्रष्टव्यम् ॥

नहि प्रज्ञापेतोघ्राणो गन्धं कंच न प्रज्ञापयेत्। अन्यत्र मेमनोभूदित्याह नाहमेनं गंधं प्राज्ञासिषमिति। नहि प्रज्ञापेतं चक्षुः रूपं किंचन प्रज्ञापयेत्। अन्यत्र मे मनोऽभूदित्याह। नाहमेतद्रूपं प्राज्ञासिषमिति। नहि प्रज्ञापेतं श्रोत्रंःशब्दं कंचन प्रज्ञापयेत्। अन्यत्र मे मनोऽभूदित्याह। नाहमेतं शब्दं प्राज्ञासिषमिति। नहि प्रज्ञापेता जिह्वा अन्नरसं कंचन प्रज्ञा-

पयेत् । अन्यत्र मे मनोभूदित्याह । नाहमेतमन्नरसं प्राज्ञासिषमिति । न प्रज्ञापेतौ हस्तौकर्मकिंचन प्रज्ञापयेताम् । अन्यत्र मे मनोभूदित्याह।नाहमेतत्कर्मप्राज्ञासिषमिति । नहि प्रज्ञापेतंशरीरं सुखं दुःखं किंचन प्रज्ञापयेत् । अन्यत्र मे मनोभूदित्याह । नाहमेतत्सुखं दुःखं प्राज्ञासिषमिति । नहि प्रज्ञापेत उपस्थआनन्दं रतिंप्रजातिं कांचन प्रज्ञापयेत् । अन्यत्र मे मनोभूदित्याह । नाहमेतमानन्दंरतिं प्रजातिं प्राज्ञासिषमिति । नहिप्रज्ञापेतौ पादावित्यां कांचन प्रज्ञापयेताम् । अन्यत्र मे मनोभूदित्याह । नाहमेतामित्यां प्राज्ञासिषमिति । नहि प्रज्ञापेता धीः काचन सिद्ध्येत् ॥

एवं प्रज्ञाशब्दितस्य जीवस्य भूतमात्राव्याप्तिप्रकारकथनमुखेनाऽऽत्मानात्मविवेकंप्रदर्श्य "अन्यावाचोविमुंचथ" इत्युक्तरीत्या भूतमात्राशब्दितानात्मविज्ञानंपरिहर्तव्यमित्याह ॥

न प्रज्ञातव्यं प्रज्ञापयेत् ॥

ज्ञात्रात्मव्यतिरिक्तोऽनात्मभूतोविषयो न ज्ञातव्य इत्यर्थः । तदेवप्रपंचयति ॥

न वाचं विजिज्ञासीत वक्तारं विद्यात् ॥

अत्र वाक्छब्दः प्रकरणानुगुण्यान्नामपरः । वक्तारमुक्तरीत्यामनोधिष्ठितवागिन्द्रियजन्याभिलपनक्रियायानामवक्तारमात्मानमेव विद्यात् । वक्तृजीवशरीरकपरमात्मानं विद्यादितियावत् । एवमुत्तरत्रापि द्रष्टव्यम् ॥

न गन्धं विजिज्ञासीत घ्रातारंविद्यात्। न रूपं विजिज्ञासीतरूपं विद्वांसंविद्यात् ॥[1]

रूपंपश्यंतंविद्यादित्यर्थः ॥

न शब्दं विजिज्ञासीत । श्रोतारं विद्यात् । नान्नरसं विजिज्ञासीत । अन्नरसविज्ञातारं विद्यात् । नकर्मविजिज्ञासीत कर्तारं विद्यात् । न सुखदुःखे विजिज्ञासीत। सुखदुःखयोर्विज्ञातारं विद्यात् । नानन्दं न रतिं न प्रजातिं विजिज्ञासीत । आनन्दस्य रतेः प्रजातेर्विज्ञातारंविद्यात् । नेत्यां विजिज्ञासीत।एतारंविद्यात्।न मनो विजिज्ञासीत । मंतारं विद्यात् । तावाएताः दशैव भूतमात्रा अधिप्रज्ञम् । दशप्रज्ञामात्राअधिभूतम् । यदिभूतमात्रा न स्युः । न प्रज्ञामात्राःस्युः । यदिवाप्रज्ञामात्रा न स्युः नभूतमात्राःस्युः । नह्यन्यतरतो रूपं किंचन सिध्येत् । नोएवैतन्नाना ॥

नामगन्धरूपशब्दरसकर्मसुखदुःखानंदगतिज्ञातव्यलक्षणदश भूतमात्रा तद्ग्राहिवाग्घ्राणचक्षुःश्रोत्रजिह्वाहस्तशरीरोपस्थपादमनोलक्षणादश प्रज्ञामात्राश्चान्योन्याधाराः । वागादीन्द्रियाणामभावेनामादिसिद्धेरभावेन वागादिलक्षणप्रज्ञामात्राधीनसिद्धिकत्वान्नामादिभूतमात्राणाम् । तेषांचाभावे तद्व्यवहारफलकप्रज्ञामात्राशब्दितेन्द्रियाद्यनिष्पत्तेः अतोग्राह्यग्राहकोभयाधीनत्वात्सर्वलोकयात्रायाः ग्राह्येण विनाकृतं ग्राहकंग्राहकेण विनाकृतंग्राह्यं वा न कार्यक्षमंभवति ॥ नोएवैतन्नाना नानाशब्दो विनार्थकः । एतद्ग्राह्य-

१ रूपविदमित्यपिपाठांतरम् ।

ग्राहकजातं परस्पराविनाभूतमित्यर्थः। तस्मात्प्रज्ञामात्राशब्दितमपींद्रियजातं भूतमात्रांतर्गतमित्यर्थः ॥

तद्यथा रथस्यारेषु नेमिरर्पितानाभावरा अर्पिताएवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिताः ॥

यथा रथस्यनाभौ रथचक्रमध्यवर्तिसरंध्रकाष्ठविशेषे अरशब्दिताः काष्ठविशेषाः परितोर्पिताः । तत्रच नेमिशब्दितं वलयाकारं काष्ठं यथार्पितमेवं प्राणशब्दितपरमात्मनि प्रज्ञामात्राशब्दनिर्दिष्टाश्चेतनाः अर्पिताः । तेषुचभूतमात्राशब्दितग्राह्यग्राहकजातं सर्वसमर्पितामित्यर्थः ॥

नन्वत्र प्रज्ञामात्राशब्देन यदिभूतमात्रा न स्युः न प्रज्ञामात्रास्युः यदि प्रज्ञामात्रा न स्युः न भूतमात्रास्स्युरितिपूर्ववाक्ये प्रज्ञामात्राशब्दनिर्दिष्टानां वागादीनां ग्राहकाणां दशानामेव ग्रहणमुचितम् । नतुयोवैप्राणः साप्रज्ञेति व्यवहितकेवलप्रज्ञाशब्दनिर्दिष्टजीवपरत्वमितिचेन्न ॥ पूर्ववाक्येन्योन्याधाराधेयभावप्रतिपादनात्तत्र प्रज्ञामात्राशब्दस्यवागादिपरत्वेपीहप्रज्ञामात्राशब्दनिर्दिष्टस्य भूतमात्राश्रितत्त्वाप्रतिपादनात्प्राणशब्दितपरमात्माश्रितत्वस्यैव प्रतिपादनात्प्रज्ञामात्राशब्दोजीवपरएव ।पूर्ववाक्येबाधकबलात्प्रज्ञाशब्दस्य मुख्यार्थत्यागेपि इहतत्त्यागे कारणाभावात् । जडरूपस्य वागादेः प्रज्ञाशब्दमुख्यार्थकत्वासंभवात् । यथा अस्मिन्प्रकरणे "यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुः । अथास्मिन्प्राण एवैकधा भवति । एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठंते" इतित्रिष्वपिवाक्येषु मुख्यप्राणपरमात्मजीवपरत्वेन भिन्नार्थकत्वम् । एवंयथा प्रज्ञायांसर्वाणि भूतानि । नहिप्रज्ञापेता वाङ्नाम किंचित्प्रज्ञापयेत् ।

दशैव भूतमात्रा अधिप्रज्ञमितिवाक्येषु जीवमनोबाह्येन्द्रियरूपार्थत्रयविषये दृष्टप्रयोगस्य प्रज्ञाशब्दस्यार्थौचित्यानुसारेणैवार्थस्य वर्णनीयत्वात् ॥ नचैकवचनान्तप्रज्ञाशब्दनिर्दिष्टस्य जीवस्य बहुवचनान्तप्रज्ञामात्राशब्देन परामर्शो न युक्तइतिवाच्यम् ॥ सद्विद्यायां "स्वमपीतोभवति"इति एकवचनान्तशब्दनिर्दिष्टस्य जीवस्य "सतिसंपद्यनविदुः" इतिबहुवचनान्तशब्दनिर्देशवदुपपत्तेः । एतत्सर्वं श्रुतप्रकाशिकायामिन्द्रप्राणाधिकरणेस्पष्टम् ॥

सएष प्राण एष प्राज्ञात्मानन्दोऽजरोऽमृतः ॥

प्रज्ञएवप्राज्ञः निरुपाधिकसार्वज्ञ्याश्रयः । निरुपाधिकानन्दत्व विजरत्वविमृत्युत्वाश्रयः ॥

न साधुना कर्मणा भूयान्नो एवासाधुनाकर्मणा कनीयान् ॥

पुण्यपापकृतोत्कर्षापकर्षशून्य इत्यर्थः ॥

एषह्येवैनं साधु कर्म कारयति तं यमेभ्योलोकेभ्य उन्निनीषति ॥

यं पुरुषम् एभ्योण्डान्तर्वर्त्तिभ्यो लोकेभ्यः उर्ध्वं भगवल्लोकं नेतुमिच्छति तंपुरुषं भगवल्लोकप्राप्तये साधुकर्मकारयति । कर्मणां भगवल्लोकप्राप्त्युपयोगित्वं च तद्धेतुभूतविद्याविरोधिपापनिरसनद्वारा ॥

एषउ एवैनमसाधुकर्म कारयति तं यमधोनिनीषति ॥

यमेभ्योलोकेभ्योननुत्सुतेइतिपाठद्वयम् । यंपुरुषमेभ्योलोकेभ्योऽधः पातयितुमिच्छति तमसाधुकर्मकारयति । यथा साधु कर्मणां ब्रह्मोपासनानिष्पादनद्वारोन्नयनहेतुत्वमेवमसाधुकर्मणामप्यु-

पासनाप्रतिबन्धद्वाराऽधोनयनहेतुत्वम् । उक्तंचभगवताभाष्यकारेण "पापस्यज्ञानोदयविरोधित्वम् । एषह्येवासाधुकर्मकारयतितं यमधोनिनीषति इतिश्रुत्यावगम्यते" इति । विवृतंचव्यासार्यैः "कर्मणामुन्नयनहेतुत्वमुपासननिष्पादनरूपमिति तद्विपरीतमधोनयनमुपासनप्रतिबन्धरूपमिति स्फुटतरमवगम्यते " इति ॥

## एषलोकपाल एषलोकाधिपतिरेषसर्वेशः ॥

लोकपालो लोकरक्षकः । अत्र व्यासाचार्याः " लोकाधिपतिः लोकस्वामी सर्वेशः सर्वलोकनियंता । ननु पा रक्षणे इति धातोः पतिशब्दः, तत्कथमत्र शेषिवाचित्वम्।उच्यते॥न हि सर्वत्रावयवशक्तिरेवनरूढिशक्तिरित्यस्तिनियमः । अन्यथागमेर्डोइतिव्युत्पत्त्या-गोशब्दस्यसकलजङ्गमवाचित्वप्रसंगात् । स्थिताया गोरवाचकत्व प्रसङ्गाच्च । अतः शेषिणिपतिशब्दोरूढः । अन्यथा " वृद्धौचमातापितरौसाध्वीभार्यासुतः शिशुः । अप्यकार्यशतंकृत्वाभर्तव्यामनुरब्रवीत् " इतिन्यायेन पितुः संरक्षकेपुत्रेपतिशब्दव्यवहारप्रसंगाद् " इत्यूचुः ॥

## सम आत्मेतिविद्यात्समआत्मेति विद्यात् ॥

पूर्वोक्तगुणविशिष्टस्वांतर्यामीतिप्रतिपत्तव्यः । यद्वास्मिन्नेववाक्येपूर्वोक्तत्वाष्ट्रहननादिकृतपापलेपशून्यत्ववक्तृत्वघ्रातृत्वादिगुणकजीवविशिष्टतया आयुरिन्द्रियनिःश्रेयसहेतुत्वशरीरोत्थापकत्वादि गुणविशिष्टप्राणविशिष्टतया, आनन्दत्वामृतत्वादिस्वरूपेणच विशिष्टस्य स्वात्मत्वेनोपासनंविधीयते । एवं सत्यनेकोपासनाविधानकृतवाक्यभेदशंकाया नावकाशइतिद्रष्टव्यम् ॥

इति श्रीरंगरामानुजमुनिविरचितायां विषयवाक्यदीपिकायां ब्रह्मसूत्र प्रथमाध्यायप्रथमपादविषयवाक्यदीपिका समाप्ता ॥ १ ॥

---

## सर्वत्र प्रसिद्ध्यधिकरणम् १.

## सर्वत्र प्रसिद्धोपदेशात् । १ । २ । १ ॥

छांदोग्येतृतीयाध्यायेचतुर्दशखण्डोपक्रमेशांडिल्यविद्याप्रस्तूयते।

**सर्वंखल्विदंब्रह्म तज्जलानितिशान्तउपासीत ॥**

जायतेइतिजम् । लीयते इतिलम् ॥ जलशब्दौडप्रत्ययान्तौ । अनितीति अन् । अनिति जीवतीत्यर्थः । क्विबन्तोविजन्तोवायं-शब्दः । तस्यजलान् तज्जलान् इतिशब्दोहेत्वर्थः । सर्वशब्दः सर्वशरीरकपरः । इदमित्येतत् ब्रह्मणः सर्वस्य वाविशेषणम् । अतश्च तज्जत्वात्तल्लत्वात्तदनत्वात्सर्वात्मकंब्रह्मेतिशान्तः सन्नुपासीते-त्यर्थः । अत्र तज्जत्वतल्लत्वे स्थूलचिदचिच्छरीरकब्रह्मगते । उपा-दानोपादेयभावस्याभिन्ननिष्ठत्वात् । तदनत्वरूपंनियाम्यत्वं न ब्रह्म-गतम् । ब्रह्मणस्तदसंभवात् । अपितु चिदचिन्मात्रगतमितिद्रष्ट-व्यम् । भगवता भाष्यकृता "सर्वंखल्विदं ब्रह्म तज्जलानिति शान्त-उपासीतेति सर्वोत्पत्तिस्थितिप्रलयकारणत्वेन सर्वस्यात्मतयाऽनुप्र-वेशकृतजीवयितृत्वेनच सर्वात्मकंब्रह्मोपासीतेत्युपासनं विधाय"इति भाषितम् । व्यासार्यैश्च "ब्रह्मात्मकत्वं सर्वस्य शास्त्रादवगम्य-सर्व-भूतात्मके तातजगन्नाथेजगन्मये-परमात्मनिगोविन्दे मित्रामित्रकथा-कुतः इत्युक्तरीत्या रागद्वेषादिरहितः सन् वक्ष्यमाणगुणकं ब्रह्मो-पासीतेत्यर्थइति"उक्तम् । वक्ष्यमाणगुणकंब्रह्मेतिवदतांव्यासाचार्या-णामयमाशयः । सर्वंखल्विति वाक्योक्तं सार्वात्म्यंतुनोपास्यगुणत-याविवक्षितम् । उत्पत्ति[१]शिष्टसार्वात्म्यगुणावरुद्धेमनोमयत्वादिवक्ष्य-माणगुणविधानानुपपत्तिप्रसंगात् । नचोपासनोत्पत्तिवाक्यश्रुतस्य सार्वात्म्यस्याविवक्षाकथमभ्युपगन्तव्येतिवाच्यम् । सर्वं खल्विदं ब्रह्म

१ उत्पत्तिशिष्टगुणावरुद्धेउत्पन्नशिष्टगुणस्यान्वयोनभवति ।

तज्जलानित्यन्तस्य वाक्यस्य खलुशब्दकृतेन प्रसिद्धवन्निर्देशेन शांतउपासीतेत्यनेनैकवाक्यत्वस्यनिवारिततत्वात् । नह्युपासीत खल्वितिवचनव्यक्तिर्घटते । अतः सार्वात्म्यस्योपासनोत्पत्तिवाक्य-श्रुतत्वाभावेन शांत उपासीतेति वाक्ये उपास्याकांक्षायां पूर्ववाक्य-प्रतिपन्नस्य ब्रह्मरूपधर्मिमात्रस्यैवोपास्यतयान्वयः । नतु सार्वात्म्य-विशिष्टस्य । ततश्चोत्पत्तिशिष्टसार्वात्म्यानवरोधात् नवक्ष्यमाणमनो-मयत्वादिगुणानन्वयशंका । सर्वात्मकं ब्रह्मोपासीतेति तदर्थनिर्देशक-भाष्येपिसर्वात्मकत्वं नोपास्यतया निर्दिष्टम्, अपितूपास्यस्य ब्रह्मणः स्वरूपकथनमात्रपरमित्येतत्सर्वैतैः कण्ठत एववर्णितं च । ननुब्रह्मात्मकत्वं सर्वस्य शास्त्रादेवावगत्यरागद्वेषादिरहितः सन्वक्ष्यमाणगुणकं ब्रह्मोपासीतेति व्यासाचार्यैरेवोक्तत्वात्तदे-कवाक्यत्वसंभवे तज्जलानित्यस्यपृथग्वाक्यत्वकल्पनाऽयोगात्, सार्वात्म्यस्योत्पत्तिवाक्यविहितत्वेपिमनोमयत्वादीनामुत्पत्तिशिष्ट सार्वात्म्यगुणाविरोधिनामन्वयेदोषाभावाच्च, वाक्यभेदकल्पनंवा शांडिल्यविद्यायांसार्वात्म्यस्यानुपास्यत्वकल्पनंवाव्यर्थमितिचेन्न ॥ उपासीतेत्यनेन वाक्यैकवाक्यत्वाभ्युपगमेपिपदैकवाक्यत्वनिराक-रणेदोषाभावात् । शान्तिहेतुतयान्वितस्य सार्वात्म्यस्योपा-स्यगुणत्वे प्रमाणाभावादितिव्यासाचार्याभिप्रायात् ॥ ननुब्र-ह्मणः सर्वात्मकत्वाद्यत्रक्कचित् क्रियमाणस्यापि द्वेषादेरात्म-द्वेषपर्यवसन्नत्वेनायुक्तत्वाच्छांतः सन्नुपासीतेत्युक्तेब्रह्मोपासीतेति कथमवगम्यते, सर्वंखल्विदंब्रह्मेत्यस्यशमविध्यर्थवादभूतस्योपास्य-समर्पकत्वाभावादितिचेत्सत्यम् ॥ शमविध्यर्थतयानिर्दिष्टस्यापि ब्रह्मणः उपास्याकांक्षापूरकत्वस्यापि संभवात् । अन्यार्थतयापि स्ववाक्यनिर्दिष्टंब्रह्मविहायोपास्यांतरकल्पनस्यानुचितत्वात् । मू-

लतः शाखांपरिवास्योपवेषंकरोतीत्यत्रमूलतः इत्यस्यशाखापरिवासने अपादानतयान्वितस्याप्याकांक्षावशेनोपवेशंकरोतीत्यनेनाप्यन्वयाभ्युपगमादितिद्रष्टव्यम् ॥ विहितमुपासनंस्तौति ॥

**अथखलुक्रतुमयः पुरुषोयथाक्रतुरस्मिँल्लोके पुरुषोभवति तथेतः प्रेत्यभवति ॥**

तं यथायथोपासते तथैवभवतीतिश्रुत्यन्तरादिह लोके पुरुषोयथोपासनस्तथैवेतः प्रेत्यामुष्मिँल्लोके भवति । ततोयंपुरुषःक्रतुमयः क्रतुप्रधानः उपासनप्रधानइत्यर्थः । ततश्चोपासनस्यैव हिततमत्वात्तत्सर्वदानुष्ठेयमित्यर्थः ॥ एवंविहितं ब्रह्मोपासनं मनोमयत्वादिगुणान्तरविधानायानुवदति ॥

**सक्रतुंकुर्वीत ॥**

सपुरुषः क्रतुंब्रह्मोपासनंकुर्वीतेत्यर्थः ॥

**मनोमयः प्राणशरीरो भारूपः सत्यसंकल्पः आकाशात्मा ॥**

मनोमयः परिशुद्धमनोमात्रग्राह्यः विवेकादिसाधनसप्तकानुगृहीतपरमात्मोपासननिर्मलीकृतमनोमात्रग्राह्यइत्यर्थः ।प्राणशरीरः जगतिसर्वेषां प्राणानांधारकः प्राणो यस्यशरीरम् आधेयंविधेयंशेषभूतं-

---

१ साधनसप्तकंच "तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः संभवान्निर्वचनाच्च"इति-वाक्यकारेणोक्तम् । जात्याश्रयनिमित्ताऽदुष्टादन्नात्कायशुद्धिर्विवेकः । विमोकः कामनाभिष्वंगः। आरंवणसंशीलनं पुनः पुनरभ्यासः।पंचमहायज्ञानुष्ठानं शक्तितः क्रिया । सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि। देशकालवैगुण्याच्छोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसोवसादः । तद्विपर्ययोऽनवसादः । तद्विपर्ययजातुष्टिरुद्धर्षः । तद्विपर्ययोऽनुद्धर्षः-इतितल्लक्षणान्यपि वाक्यकारोक्तान्येव श्रीभाष्येलघुसिद्धांते विस्तरेणोक्तानि ॥

च सप्राणशरीरः ।आधेयत्वविधेयत्वशेषत्वानामेवशरीर[1]शब्दप्रवृत्तिनिमित्तत्वात्।भारूपः । भास्वररूपः । "आदित्यवर्णंतमसः परस्तात्" "पश्यतेरुक्मवर्णम्" इत्यादिवाक्यप्रतिपन्नाप्राकृतस्वासाधारणनिरतिशयकल्याणगुणगणनिरतिशयदीप्तियुक्तविग्रहशालीत्यर्थः । सत्यसंकल्पोऽप्रतिहतसंकल्पः । आकाशात्मा आकाशवत्सूक्ष्मरूपः । सकलेतरकारणभूतस्याव्याकृताकाशस्यात्मभूतइतिवाऽकाशात्मा । स्वयंचप्रकाशते अन्यान्प्रकाशयतीतिवा आकाशात्मा ॥

## सर्वकर्मा ॥

क्रियते इति कर्म । सर्वंजगद्यस्य कर्मासौ सर्वकर्मा । सर्वा वा क्रियायस्यासौसर्वकर्मा ॥

## सर्वकामः ॥

काम्यंतइतिकामाः भोग्यभोगोपकरणभोगस्थानादयः । तेपरिशुद्धास्तस्यसन्तीत्यर्थः ॥

## सर्वगन्धःसर्वरसः ॥

अशब्दमस्पर्शमित्यादिनाप्राकृतगंधादिनिषेधात् । अप्राकृताः स्वासाधारणाः निरवद्या निरतिशयाः कल्याणाः स्वभोग्यभूताः सर्वविधा गन्धरसास्तस्यसन्तीत्यर्थः ॥

---

१ अनेनैव न्यायेन चिदचिद्रूपजगच्छरीरकः परमात्मेति विशिष्टाद्वैतसिद्धांतः । " सर्वात्मनाधेयतया नियाम्यतया शेषतयाचापृथक्सिद्धं प्रकारभूतमित्याकारः शरीरमिति चोच्यते" इति शरीरलक्षणं वेदार्थसंग्रहे श्रीभाष्यकाराः । चेष्टाश्रयत्वादीनां त्वव्याप्तिरेव दोषः। तत्र तात्पर्यदीपिकायामपि "व्याप्यत्वेसति सर्वात्मना स्वार्थे धारयितुं शक्यं शरीरमिति शरीरलक्षणम् । "व्याप्तत्वेसति यावद्द्रव्यभावितया स्वार्थेधारयितुं शक्त आत्मेति शरीरिलक्षणम् । स्वार्थशक्यपदाभ्यामुत्पतनादिव्यापाराणां रुग्णदेहनियमनस्यचाभावादसंभवाऽव्याप्तिशंकापरिहारः । घटपटादिव्यावृत्त्यर्थं व्याप्यत्वेसतीत्युक्तम्।परकायप्रविष्टं प्रति परकायस्य देहत्वव्यावृत्त्यर्थं सर्वात्मनेतिपदम्।आत्मनोधर्मभूतज्ञानं रत्नदीपादेः प्रभाच्च शरीरंस्यादितितद्व्यावृत्त्यर्थं च व्याप्यत्वेसतीत्युक्तम् " इत्यादिनानिरूपितमिदम् । भाष्येपि नविलक्षणाधिकरणादौ स्फुटमिदम् । नवीनरीत्या परिष्कारादिकं तुश्रीमदनंतार्यवादावल्यां शरीरलक्षणवादे विस्तृतम् ॥

सर्वमिदमभ्यात्तः ॥

उक्तंसर्वमिदं कल्याणगुणजातमभ्यात्तः स्वीकृतवान् । भुक्ताब्राह्मणाइतिवत्कर्तरिक्तः । अर्शाद्यजंतोवा ॥

अवाकी ॥

वाक उक्तिः । सोस्य नास्तीत्यवाकी । कुतइत्यत्राह ॥

अनादरः ॥

अवाप्तसमस्तकामत्वेनादर्तव्याभावादादररहितः । अतएवअवाकीपरिपूर्णैश्वर्यत्वाद्ब्रह्मादिस्तंबपर्यंतंनिखिलंजगत्तृणीकृत्यजोषंमासीनइत्यर्थः ॥

एषम आत्मान्तर्हृदये अणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा ॥

मदीये हृदये व्रीह्याद्यपेक्षयाणुत्वेनात्मत्वेन परमात्मोपासनार्थमवस्थितइत्यर्थः । तथानुसन्धानंकर्तव्यमितिभावः ॥ अंतर्हृदयेवस्थितस्योपास्यमानस्यप्राप्याकारमनुसंधेयंनिर्दिशति ॥

एषमआत्मान्तर्हृदयेज्यायान्पृथिव्याज्यायानंतरिक्षाज्ज्यायान्दिवोज्यायानेभ्योलोकेभ्यःसर्वकर्मासर्वकामः सर्वगंधः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः ॥

उक्तोऽर्थः । एवंभूतंपरब्रह्म परमकारुण्येनास्मदुज्जिजीविषयास्मद्धृदयेसंनिहितमित्यनुसंधातव्यमित्याह ॥

एषमआत्मांतर्हृतयेएतद्ब्रह्म ॥

यथोपासनमीदृशंपरमात्मानम् "अस्माच्छरीरात्समुत्थायपरंज्यो-

---

१ तूष्णीमर्थेसुखेजोषम् इत्यमरः ॥

तिरुपसपद्यस्वेनरूपेणाभिनिष्पद्यते" इत्युक्तरीत्या देशविशेषविशिष्टं प्राप्तास्मीतिनिश्चयरूपमनुसंधानंकर्तव्यमित्याह ॥

एतमितः प्रेत्याभिसंभवितास्मीति ॥

अत्रेतीत्यस्यसक्रतुंकुर्वीतेत्यनेनान्वयः । मनोमयः प्राणशरीरइत्यारभ्यैतमितः प्रेत्याभिसंभवितास्मीत्येतत्पर्यंतोनुसंधानप्रकारः । अत्रचेतिशब्दनिर्दिष्टोमनोमयत्वादिगुणगतः क्रमविशेषएकएवविधीयते । मनोमयत्वाद्युपास्यगुणानांत्वाक्षेपतोविधानंपृष्ठगतसर्वताविधानादिवत्पृष्ठानाम्।ततश्चप्राप्तानुवादेन मनोमयत्वाद्यनेकगुणविधानेवाक्यभेद इतिशंका प्रत्युक्ता ।यद्वा विधेयानांबहुत्वेपिक्रमरूपविधेयतावच्छेदकैक्यान्नवाक्यभेदः । यदग्नये च प्रजापतये चेति वाक्ये देवतात्वरूपविधेयतावच्छेदकैक्येन वाक्यभेदस्यतांत्रिकैः परिहृतत्वात् । केचित्तुप्राप्तोपासनानुवादनाभ्युदयेष्टिवाक्यवत्प्रयोगविधित्वसभवान्नवाक्यभेद इतिवदन्ति ॥ एवंविधप्राप्यप्राप्तिनिश्चयोपेतस्योपासकस्य प्राप्तौ नसंशयोस्तीत्युपसंहरति ॥

यस्यस्यादद्धा न विचिकित्सास्ति ॥

अत्रेतिशब्दोध्याहर्तव्यः । अभिसंभवितास्मीति शब्दस्य क्रमवाचकस्यैव काकाक्षिगोलकन्यायेन वाऽन्वयः । उक्तप्रकारेण यस्योपासकस्य अद्धा निश्चयोस्ति तस्यप्राप्तौ विचिकित्सा संशयो नास्ति ॥ उक्तार्थस्यश्रद्धेयत्वसिद्धयेवक्तुराप्तिंदर्शयति ॥

इतिहस्माह शाण्डिल्यः शाण्डिल्यः ॥

अत्रधिकरणम् २.

अत्ता चराचरग्रहणात् । १ । २ । ९ ॥ प्रकरणाच्च १ । २ । १० ॥ गुहांप्रविष्टावात्मानौहितद्दर्शनात् । १ ।

---

१ सर्वपृष्ठोऽतिरात्रोभति ।

२ । ११ ॥ विशेषणाच्च । १ । २ । १२ ॥ शब्दादेवप्रमितः । १ । ३ । ३३ ॥ कंपनात् । १ । ३ । ४० ॥ ज्योतिर्दर्शनात् । १ । ३ । ४१ ॥ आनुमानिकमप्येकेषामितिचेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयतिच । १ । ४ । १ ॥ वदतीतिचेन्न प्राज्ञोहिप्रकरणात् । १ । ४ । ५ ॥ त्रयाणामेवचैवमुपन्यासः प्रश्नश्च ।१।४।६ ॥

इत्येवमादिसूत्रविषयवाक्यार्थप्रदर्शनाय कठवल्ली प्रायेण व्याख्यायते ॥

उशन्ह हवै वाजश्रवसः सर्ववेदसं ददौ ॥

उशन् कामयमानः । वशकांतावित्यस्माच्छतरि "ग्रहिज्या ६ । १ । १६ । इत्यादिना संप्रसारणम् । हवै इति वृत्तार्थस्मरणार्थौनिपातौ । फलमितिशेषः । वाजश्रवसः । वाजेनान्नेन दानादिकर्मभूतेन श्रवः कीर्तिर्यस्य स वाजश्रवाः । तस्यापत्यं वाजश्रवसः । रूढिर्वा वाजश्रवस इति । स किल ऋषिः विश्वजिता सर्वस्वदक्षिणेन यजमानः तस्मिन् क्रतौ सर्ववेदसं सर्वस्वं ददौ दत्तवानित्यर्थः । उशन्नित्यनेन कर्मणः काम्यत्वावगमाद्दक्षिणासाद्गुण्यमावश्यकमितिसूच्यते ॥

तस्यह नचिकेता नाम पुत्रआस ॥

आस बभूव "छन्दस्युभयथा ॥ ३ । ४ । ११७ । इति लिटः सार्वधातुकत्वात्स्वस्तयेताक्ष्र्यमितिवदस्तेर्भूभावाभावः ॥

तꣳह कुमारꣳसंतंदक्षिणासु नीयमानासु श्रद्धाविवेश ॥

कुमारं संतं बालमेवसंतमृत्विग्भ्योदक्षिणासु नीयमानासु श्रद्धा आस्तिक्यबुद्धिः पितृहितकामप्रयुक्ता आविवेश आविष्टवती ॥

श्रद्धाप्रकारमेवदर्शयति ॥

पीतोदका जग्धतृणा दुग्धदोहानिरिन्द्रियाः ॥

पीतमुदकंयाभिस्ताः पीतोदकाः। जग्धंभक्षितं तृणं याभिस्ता जग्धतृणाः। दुग्धोदोहोयाभिस्ता दुग्धदोहाः। निरिंद्रियाः अप्रजननसमर्थाः। जीर्णानिष्फला इतियावत् ॥

अनन्दा नाम ये लोकास्तान्स गच्छतिता ददत्।

याएवंभूतागावस्ताऋत्विग्भ्योदक्षिणाबुद्ध्यादददत् प्रयच्छन् अनन्दा असुखा येशास्त्रप्रसिद्धा लोकाः सन्तिनामखलु तान् स यजमानोगच्छति एवममन्यतेत्यर्थः ॥

सहोवाच पितरं तत कस्मै मां दास्यसीति द्वितीयं तृतीयम् ॥

दीयमानदक्षिणावैगुण्यं मन्यमानो नचिकेताः स्वात्मदानेनापि पितुः क्रतुसाद्गुण्यमिच्छन् आस्तिकाग्रेसरः पितरमुपगम्योवाच तात कस्मै ऋत्विजे दक्षिणार्थं मां दास्यसीति। एवमुक्तेनापि पित्रोपेक्ष्यमाणोपि प्रथमं द्वितीयं तृतीयमपि पर्यायं कस्मैमांदास्यसीत्युवाच ॥

तꣳहोवाच मृत्यवे त्वां ददामीति ॥

एवंनिर्बध्यमानः पिता कुपितस्तंपुत्रं मृत्यवे त्वां ददामी त्युक्तवान्। एवमुक्तोपि विगतसाध्वसशोकः पितरमुवाच ॥

बहूनामेमि प्रथमो बहूनामेमि मध्यमः ॥

सर्वेषांमृत्युसदनं गंतॄणां पुरतोमध्ये वा गच्छामि नतुमंथरः। पश्चान्मृत्युसदनगमने न कोपि ममविचार इति भावः ॥

किंतर्हितत्राह ॥

किꣳस्विद्यमस्यकर्तव्यंयन्मयाद्यकरिष्यति ॥

तत्तादृशं यमस्यकर्तव्यं, किंवा पूर्णकामस्यमृत्योः मादृशेन बालिशेन किंप्रयोजनं स्याद्येन ऋत्विग्भ्य इव तस्मै मदर्पणं सफलं स्यात्। अत एतदेवानुशोचामीतिभावः । साध्वसरोषावेशहीनमीदृशं पुत्रवाक्यंश्रुत्वा क्रोधावेशान्मयामृत्यवे ददामीत्युक्तं, नेदृशं पुत्रं मृत्यवेदातुमुत्सह इति पश्चात् तप्तहृदयं पितरमालोक्योवाच॥

अनुपश्य यथापूर्वे प्रतिपश्य यथापरे ॥

पूर्वे पितामहादयो यथामृषावादं विनैव स्थिता यथाच परे साधवोद्यापितिष्ठन्ति तान्वीक्ष्य तथा वर्तितव्यमिति भावः॥

सस्यमिव मर्त्यः पच्यतेसस्यमिवाजायते पुनः॥

मर्त्यः सस्यमिवाल्पेनापि कालेन जीर्यति । जीर्णः सन् मृत्वा सस्यमिव पुनराजायते । एवमनित्येजीवलोके किं मृषाकरणेन पालयसत्यं प्रेषयमां मृत्युव इति भावः। एवमुक्त्वा प्रेषितः प्रोषितस्य मृत्योर्द्वारि तिस्रोरात्रीरनश्नन्नुवास । ततः प्रोष्याऽऽगतं यमं द्वास्थां वृद्धा ऊचुः॥

वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणोगृहान्। तस्यैताᳮ शांतिंकुर्वन्ति। हर वैवस्वतोदकम्॥

साक्षादग्निरेवातिथिर्ब्राह्मणः सन् गृहान् प्रविशति। तस्याग्नेरेतां पाद्यासनादिलक्षणांशान्तिंकुर्वन्ति संतः,तदपचारेण दग्धामाभूमेति। अतो हेवैवस्वत नचिकेतसे पाद्यार्थमुदकं हर आहर ॥ अकरणे प्रत्यवायं च दर्शयन्तिस्म॥

आशाप्रतीक्षे संगतᳮ सूनृतांचेष्टापूर्ते पुत्रपशूᳮश्च सर्वान् । एतद्वृङ्क्तेपुरुषस्याल्पमेधसो यस्यानश्नन्वसति ब्राह्मणो गृहे ॥

यस्याल्पमेधसः अल्पप्रज्ञस्य पुरुषस्य गृहे अनश्नन्नभुंजानः

अतिथिर्वसति तस्याऽऽशाप्रतीक्षे अनुत्पन्नवस्तुविषयेच्छा आशा, उत्पन्नवस्तुप्राप्तीच्छाप्रतीक्षा । संगतं सत्संगमम् । सूनृतां सत्यप्रियवाचम् । इष्टापूर्ते इष्टं यागादि, आपूर्तं खातादि । पुत्रान्पशूंश्च एतत् अनशनरूपं पापं वृंक्ते वर्जयति नाशयतीत्यर्थः । "वृजीवर्जने" रुधादित्वाच्छ्नम् । "वृजिवर्जन" इत्यस्मादिदितोनुमदादित्वाद्वा शपोलुक्च । एवं वृद्धैरुक्तोमृत्युर्नचिकेतसमुवाच ॥

**तिस्रो रात्रीर्यदवात्सीर्गृहेमे अनश्नन् ब्रह्मन्नतिथिर्नमस्यः ॥**

मे गृहे यस्माद्धेतोर्हेब्रह्मन् नमस्काराहोंतिथिस्त्वं तिस्रोरात्रीरभुंजान एवावात्सीरित्यर्थः ॥

**नमस्तेस्तु ब्रह्मन्स्वस्तिमेस्तु ॥**

स्पष्टोर्थः ॥

**तस्मात्तान् प्रति त्रीन् वरान् वृणीष्व ॥**

तस्माद्धेतोर्मह्यं स्वस्ति यथास्यादित्येवमर्थं वरान् प्रत्युद्दिश्य-वृणीष्वप्रार्थयस्व । तव लिप्साभावे मदनुग्रहार्थमनश्नन्रात्रिसमसंख्याकान् त्रीन्वरान्वृणीष्वेतिभावः ॥

एवं प्रार्थितोनचिकेतास्त्वाह ॥

**शांतसङ्कल्पः सुमनायथास्याद्वीतमन्युर्गौतमोमाभिमृत्यो ॥**

हेमृत्यो मत्पुत्रो यमं प्राप्य किंकरिष्यतीति मद्विषयचिन्तारहितः प्रसन्नमना मामभि मांप्रति ममपिता गौतमोवीतरोषश्च यथास्यादित्यर्थः ॥ किंच—

१ एकाग्निकर्म हवनं त्रेतायां यच्च हूयते । अंतर्वेद्यां च यद्दानमिष्टं तदभिधीयते ॥ १ ॥ पुष्करिण्यः सभावापी देवतायतनानि च । आरामश्च विशेषेण पूर्तकर्म विनिर्दिशेत् ॥ २ ॥ इति मनुः ॥

त्वत्प्रसृष्टं माभिवदेत्प्रतीतः ॥

त्वया गृहाय प्रेषितं मामभि मांप्रति प्रतीतः यथापूर्वंप्रीतः सन् वदेत्। यद्वा अभिवदेत् आशिषं प्रायुङ्क्ताम्। अभिवदति नाभिवादयतइति स्मृतिषु अभिवदनस्याशीर्वादे प्रयोगात् ॥

एतत्त्रयाणां प्रथमं वरं वृणे ॥

स्पष्टोर्थः ॥ एवमुक्तोमृत्युः प्रत्युवाच ॥

यथापुरस्ताद्भविता प्रतीतः ॥

यथापूर्वंत्वयिहृष्टोभविता ॥

औद्दालकिरारुणिर्मत्प्रसृष्टः ॥

उद्दालक एवौद्दालकिः। अरुणस्यापत्यमारुणिः। व्यमुष्यायणो वा उद्दालकस्यापत्यम् अरुणस्यगोत्रापत्यमितिवार्थः। मत्प्रसृष्टः मदनुज्ञातः मदनुगृहीतः सन्। मदनुग्रहादित्यर्थः ॥

सुखंरात्रीः शयिता वीतमन्युः ॥

वीतक्रोधः सन् उत्तरा अपिरात्रीः सुखंशयिता। लुट्। सुखंनिद्रांप्राप्स्यतीति यावत् ॥

त्वांददृशिवान् मृत्युमुखात्प्रमुक्तम् ॥

ददृशिवान् दृष्टवान् सन्नित्यर्थः। क्वस्वन्तोयं शब्दः। दृशेश्चेतिवक्तव्यमिति क्वसोरिट्। छान्दसोद्विर्वचनाभावः। मत्प्रसृष्टमिति द्वितीयांतं वा। मत्प्रेषितंत्त्वामिति योजना ॥ नचिकेतावरंद्वितीयं प्रार्थयते स्वर्गेलोके इत्यादिना मंत्रद्वयेन ॥

स्वर्गे लोके नभयं किंचनास्ति ॥

अत्र स्वर्गशब्दोमोक्षस्थानपरः ॥

न तत्र त्वं न जरया बिभेति ॥

हेमृत्यो त्वं तत्र न प्रभवसि । जरया युक्तः सन् न विभेति । जरातोनविभेति तत्र । वर्तमानः पुरुषः इतिशेषः ॥

उभे तीर्त्वा अशनायापिपासे शोकातिगोमोदते स्वर्गलोके ॥

अशनाया बुभुक्षा । अत्रापि स्वर्गशब्दोमोक्षस्थानपरः, प्रसिद्धस्य स्वर्गस्य क्षयफलविरक्तनचिकेतःप्रार्थ्यमानत्वानुपपत्तेरिति-द्रष्टव्यम् । अत्र वक्तव्यमुपनिषद्भाष्येउक्तं तत्र द्रष्टव्यम् ॥

स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो ॥

पुराणादिप्रसिद्धसार्वज्ञस्त्वं स्वर्गप्रयोजनकमग्निंजानासि । "स्वर्गादिभ्योयद्वक्तव्यः" इति प्रयोजनमित्यर्थेयत् । स्थंडिलरूपाग्नेः स्वर्गप्रयोजनकत्वंचोपासनाद्वारेत्युत्तरत्रस्फुटम् ॥

प्रब्रूहितꣳश्रद्दधानाय मह्यम् ॥

श्रद्दधानायमोक्षश्रद्धावते ॥ स्वर्गलोकेन तवकिं सिध्यतीत्यत्राह॥

स्वर्गलोका अमृतत्वं भजन्ते एतद्द्वितीयेन वृणेवरेण ॥

स्वर्गोलोको येषां ते परमपदंप्राप्ताइत्यर्थः । परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इतिदेशविशेषविशिष्टब्रह्मप्राप्तिपूर्वकत्वात्स्वरूपाविर्भावलक्षणमोक्षशब्दितामृतत्वस्येतिभावः ॥ एवमुक्तोमृत्युराह ॥

प्रते ब्रवीमि तदु मे निबोध ॥

तेप्रब्रवीमि "व्यवहिताश्च १।४।८२॥" इति व्यवहितप्रयोगः । मे उपदेशाज्जानीहीत्यर्थः ॥ ज्ञानस्य फलंदर्शयति ॥

स्वर्ग्यमग्निंनचिकेतः प्रजानन्ननंतलोकाप्तिमथो प्रतिष्ठाम् ॥

अनंतस्य विष्णोर्लोकः तत्प्राप्तिं "तद्विष्णोः परमंपदम्" इत्युत्तरत्रवक्ष्यमाणत्वात् । अथोतत्प्राप्त्यनन्तरं प्रतिष्ठामपुनरावृत्तिं च लभत इति शेषः ॥ तज्ज्ञानस्य चेदृशसामर्थ्यं कथं संभवतीति मन्यमानं प्रत्याह ॥

विधित्वमेतंनिहितंगुहायाम् ॥

ब्रह्मोपासनांगतयैतज्ज्ञानस्य मोक्षहेतुत्वलक्षणमेतत्स्वरूपं गुहायां निहतमन्ये नजानंति।त्वंजानीहीतिभावः। यद्वा ज्ञानार्थकस्य विदेर्लाभार्थकत्वसंभवादग्निं प्रजानंस्त्वमनंतलोकाप्तिप्रतिष्ठांलभस्वेत्युक्तेहेतुहेतुमद्भावः सिद्धोभवति । प्रजानन् "लक्षणहेत्वोः" इति शतृप्रत्ययः । अनंतरंश्रुतिवाक्यम् ॥

लोकादिमग्निं तमुवाच तस्मै ॥

लोकस्यादिंहेतुम् । स्वर्ग्यमिति यावत् । तमग्निमुवाच ॥

याइष्टका यावतीर्वा यथावा ॥

यल्लक्षणा इष्टकाश्चेतव्या यत्संख्याका येन प्रकारेण चेतव्यास्तत्सर्वमुक्तवानित्यर्थः । यावतीरितिपूर्वसवर्णदीर्घश्छांदसः ॥

सचापितत्प्रत्यवदद्यथोक्तम् ॥

तच्छ्रुतं सर्वं तथैवानूदितवानित्यर्थः ॥

अथास्य मृत्युः पुनराह तुष्टः ॥

शिष्यस्य ग्रहणसामर्थ्यदर्शनेन संतुष्टः सन् पुनरप्युक्तवान् ॥

तमब्रवीत् प्रीयमाणोमहात्मा ॥

संतुष्टोमहामना नचिकेतसमब्रवीत् ॥

वरंतवेहाद्य ददानिभूयः ॥

पुनश्चतुर्थंवरंप्रयच्छानि । किंतत् । तत्राह ॥

तवैव नाम्ना भवितायमग्निः ॥

मयोच्यमानोग्निस्तवैव नाम्ना नाचिकेत इतिप्रसिद्धोभविता ॥ किंच-

सृङ्कांचेमामनेकरूपांगृहाण ॥

सृंकांशब्दवतीं रत्नमालां स्वीकुरु इत्यर्थः॥पुनरपि कर्मस्तौति॥

त्रिणाचिकेतस्त्रिभिरेत्यसंधिंत्रिकर्मकृत्तरतिजन्म मृत्यू ॥

त्रिणाचिकेतः "अयंवाव यः पर्वते" इत्यादि अनुवाकत्रयाध्यायी। त्रिकर्मकृद्यजनाध्ययनदानकृत् पाकयज्ञहविर्यज्ञसोमयज्ञकृद्वा, त्रिभिरग्निभिरनुष्ठितैरग्निभिः संधिं परमात्मोपासनेन संबंधमेत्यप्राप्यजन्ममृत्यूतरतीत्यर्थः। "करोति तद्येनपुनर्न जायते"इत्यनेनैकार्थ्यात्।एवमेवह्ययंमंत्रः"त्रयाणामेवचैवम्।१।४।६।"इतिसूत्रेव्यासाचार्यैर्विवृतः॥ त्रिभिरेत्यसंधिमितिनिर्दिष्टमंगिभूतं परमात्मोपासनमाह॥

ब्रह्मजज्ञं देवमीड्यं विदित्वा ॥

अयंमंत्रो " विशेषणाच्च।१।२।१२। " इतिसूत्रेभाष्येब्रह्मजज्ञोजीवः। ब्रह्मणोजातत्वाज्ज्ञत्वाच्चतंदेवमीड्यं विदित्वा जीवात्मानमुपासकं ब्रह्मात्मकत्वेनावगत्येत्यर्थः" इति विवृतः। देवशब्दस्य परमात्मवाचितया जीवपरयोश्चैक्यासंभवादत्रत्यदेवशब्दस्यपरमात्मकत्वपर्यंतोर्थइतिभाष्याभिप्रायः॥

निचाय्यमाꣳशांतिमत्यंतमेति ॥

निचाय्य ब्रह्मात्मकं स्वात्मानं साक्षात्कृत्य इमां त्रिकर्मकृत्तरतीति पूर्वमंत्रनिर्दिष्टां संसाररूपानर्थशांतिमेतीत्यर्थः ॥

त्रिणाचिकेतस्त्रयमेतद्विदित्वा ॥

त्रिणाचिकेत उक्तोर्थः। त्रयमेतद्विदित्वा "ब्रह्मजज्ञंदेवमीड्यम्"

इति मंत्रनिर्दिष्टं ब्रह्मस्वरूपं तदात्मकस्वात्मरूपंत्रिभिरेत्यसंधिमिति-निर्दिष्टाग्निस्वरूपं चविदित्वा गुरूपदेशेन शास्त्रतोवा ज्ञात्वा ॥

यएवंविद्वाँश्चिनुतेनाचिकेतम् ।

एतादृशार्थत्रयानुसंधानपूर्वकं नाचिकेतमग्निं यश्चिनुते ॥

समृत्युपाशान्पुरुतः प्रणोद्य ॥

मृत्युपाशान् रागद्वेषादिलक्षणान् पुरुतः शरीरपातात्पूर्वमेव प्रणोद्य तिरस्कृत्य जीवद्दशायामेव रागादिरहितः सन्नित्यर्थः ॥

शोकातिगो मोदते स्वर्गलोके ॥

पूर्वमेव व्याख्यातम् ॥

योवाप्येतां ब्रह्मजज्ञात्मभूतां चितिंविदित्वा चिनुते नाचिकेतम् । सएवभूत्वा ब्रह्मजज्ञात्मभूतः करोति तद्येन पुनर्न जायते ॥

एवं चितिं ब्रह्मजज्ञात्मभूतांविदित्वा ब्रह्मात्मकस्वरूपतयानुसंधायनाचिकेतमग्निंचिनुते सएव ब्रह्मात्मकस्वात्मानुसंधानशीलस्सन्नपुनर्भवहेतुभूतं यद्भगवदुपासनं तदनुतिष्ठति। ततश्चाग्नौ भगवदात्मकस्वात्मानुसंधानपूर्वकमेवचयनं"त्रिभिरेत्य संधित्रिकर्मकृत्तरतिजन्ममृत्यू"इतिपूर्वमंत्रे भगवदुपासनद्वारा मोक्षसाधनतया निर्दिष्टं नान्यदितिभावः ॥

एषतेग्निर्नाचिकेतः स्वर्ग्यः ॥

उपदिष्ट इतिशेषः ॥

यमवृणीथा द्वितीयेन वरेण ॥

स्पष्टोर्थः । किंच—

एतमग्निं तवैव प्रवक्ष्यंति जनासस्तृतीयं वरं नचिकेतो वृणीष्व ॥

१ अयं मंत्रोदशोपनिषत्पुस्तकात्स्खलितः ।

एतदग्निं तवैव नाम्ना प्रवक्ष्यंतीत्यर्थः।शिष्टंस्पष्टम्।नचिकेताआह॥

येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः ॥

अत्ताचराचर० १।२।८॥"इत्यधिकरणे इमं मंत्रं प्रस्तुत्य इत्थंहि भाष्यकृता "अत्र परमपुरुषार्थरूपब्रह्मप्राप्तिलक्षणमोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मतत्त्वजिज्ञासयाप्रश्नः क्रियते येयंप्रेतइति न शरीरवियोगमात्राभिप्रायम् । अपितु सर्वबंधविनिर्मोक्षाभिप्रायम् । यथा नप्रेत्यसंज्ञास्तीति ॥ अयमर्थः । मोक्षाधिकृते मनुष्ये प्रेते सर्वबंधविनिर्मुक्ते तत्स्वरूपविषयवादिविप्रतिपत्तिनिमित्ताअस्तिनास्त्यात्मिका एवं विचिकित्सा तदपनोदनाय तत्स्वरूपयाथात्म्यं त्वयानुशिष्टोहं विद्यां जानीयामिति ॥तथा हि ॥ बहुधाविप्रतिपद्यन्ते–केचिद्वित्तिमात्रस्यात्मनः स्वरूपोच्छित्तिलक्षणं मोक्षमाचक्षते ॥ अन्येतु वित्तिमात्रस्यैव सतोऽविद्यास्तमयम् ॥ अपरेपाषाणकल्पस्यात्मनो ज्ञानाद्यशेषविशेषगुणोच्छेदलक्षणं कैवल्यरूपम् ॥ अपरे अपहतपाप्मानं परमात्मानमभ्युपगच्छंतस्तस्यैवोपाधिसंसर्गनिमित्तजीवभावस्योपाध्यपगमे तद्भावलक्षणंमोक्षमातिष्ठन्ते ॥ त्रय्यंतनिष्णातास्तु निखिलजगदेककारणस्याशेषहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयासंख्येयकल्याणगुणाकरस्य सकलेतरविलक्षणस्य सर्वात्मभूतस्य परस्य ब्रह्मणः शरीरतया प्रकारभूतस्यानुकूलापरिच्छिन्नज्ञानस्वरूपस्य परमात्मानुभवैकरसस्य जीवस्यानादिकर्मरूपाविद्यातिरोहितस्याऽविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवं मोक्षमाचक्षते ॥ तत्र मोक्षस्वरूपं तत्साधनं च त्वत्प्रसादाद्विद्या-

मिति नचिकेतसा पृष्टोमृत्युः” इतिभाषितम्॥तथा “त्रयाणामेवचैवम् । १ । ४ ।६॥”इतिसूत्रे “तृतीयेनवरेण मोक्षस्वरूपप्रश्नद्वारेणोपेयस्वरूपमुपेतृस्वरूपमुपायभूतकर्मानुगृहीतोपासनस्वरूपं चपृष्टम्” इतिभाषितम् । श्रुतप्रकाशिकायां च “येयंप्रेतइत्यादिप्रश्नवाक्येमोक्षस्वरूपप्रश्नः कण्ठोक्तः । प्रतिवचनप्रकारेणोपासनादिप्रश्नश्चार्थसिद्धः । निर्विशेषताऽऽपत्तिर्मोक्षश्चेद्वाक्यार्थज्ञानस्योपायतानस्यात् । उभयलिंगप्राप्यंचेत्तथात्वेनोपासनमुपायःस्यात् । अतोमोक्षस्वरूपज्ञानं तदनुबंधिज्ञानापेक्षम्” इतिचवर्णितम् । अतो येयंप्रेत इत्यस्य मुक्तस्वरूपपरत्वमेव ।नदेहातिरिक्तपारलौकिककर्मानुष्ठानोपयोगिकर्तृभोक्त्रात्मकजीवस्वरूपमात्रपरत्वम् । अन्यथा तस्यार्थस्य दुरधिगमत्वप्रदर्शनविविधभोगवितरणप्रलोभनपरीक्षाया असंभवादितिद्रष्टव्यम् । नचिकेतसोह्ययमभिप्रायः । हितैषिवचनादात्मापरित्यक्तचरमदेहाविर्भूतापहतपाप्मत्वादिगुणाष्टकोभवतीत्युपश्रुत्य“स्वर्गेलोके नभयंकिंचनास्ति”इत्यादिना मंत्रद्वयेन मोक्षसाधनभूताग्निमप्राक्षम् । अधुनातु वादिविप्रतिपत्त्या तद्विषयसंदेहोजायते । अयं“स्वर्गे लोके न भयं किंचनास्ति”इत्यादिना मयोपन्यस्तापहतपाप्मत्वादिविशिष्टरूप आत्मा अस्तीत्येके ॥ नास्तीत्यपरे ॥ त्वयोपदिष्टएतज्जानीयामिति । अतएवप्रतिवचने “एतच्छ्रुत्वासंपरिगृह्य मर्त्यः । प्रवृह्यधर्म्यमण्डमेतमाप्य समोदतेमोदनीयँ हि लब्ध्वा” इति एतत्प्रश्नानुगुणमेव दृश्यते । अतो यथोक्त एवार्थः ॥ एवं मुक्तस्वरूपं पृष्टोमृत्युरुपदिश्यमानार्थस्यातिगहनतया पारं प्राप्तुंप्रभवते मध्ये पतयालवे नोपदेष्टव्यमिति मत्वाह ॥

देवैरत्रापि विचिकित्सितं पुरा ॥

बहुदर्शिभिरपि देवैरस्मिन् मुक्तात्मस्वरूपे विचिकित्सितं संशयितम् ॥

नहिसुज्ञेयमणुरेषधर्मः ॥

आत्मतत्त्वं न सुज्ञानमतिसूक्ष्मोधर्मः । सामान्यतोधर्म एव दुर्ज्ञानः । तत्राप्ययं दुर्ज्ञान इतिभावः ॥

अन्यं वरं नचिकेतोवृणीष्व ॥

स्पष्टोर्थः ॥

मामोपरोत्सीरतिमासृजैनम् ॥

मामा इतिनिषेधे । वीप्सायां द्विर्वचनम् । उपरोधं माकार्षीः । एनंमामतिसृज मुंच ॥ एवमुक्तोनचिकेताआह ॥

देवैरत्रापि विचिकित्सितंकिल ॥

स्पष्टोर्थः ॥

त्वंचमृत्योयंनसुज्ञेयमात्थ ॥

न सुज्ञेयमिति च यदात्मस्वरूपमुक्तवान् ॥

वक्ताचास्यत्वादृगन्योनलभ्यः ॥

त्वादृक् भवादृश इत्यर्थः ॥

नान्योवरस्तुल्य एतस्य कश्चित् ॥

एवंनचिकेतसोक्तोमृत्युर्विषयस्य दुरधिगमतया मध्ये नत्यक्ष्यतीति निश्चित्य सत्यपि ग्रहणसामर्थ्ये विषयांतरासक्तचेतसे एतादृशमुक्तात्मतत्त्वं नोपदेशार्हमिति मुमुक्षास्थैर्यानुवृत्त्युर्थं प्रलोभयन्नुवाच ॥

शतायुषः पुत्रपौत्रान् वृणीष्व । बहून् पशून् हस्तिहिरण्यमश्वान् ॥

स्पष्टोर्थः ।

भूमेर्महदायतनं वृणीष्व ॥

पृथिव्या विस्तीर्णमायतनं मण्डलं राज्यं वृणीष्व । अथवा भूमेः संबंधि महदायतनं विचित्रशालाप्रासादादियुक्तं गृहं वृणीष्व ॥

**स्वयंचजीवशरदोयावदिच्छसि ॥**

यावद्वर्षाणि जीवितुमिच्छसि तावज्जीवेत्यर्थः ॥

**एतत्तुल्यं यदिमन्यसे वरं वृणीष्व वित्तं चिरजीविकांच ॥**

उक्तेन वरेण सदृशमन्यमपि वरं मन्यसे चेत्तदपि वृणीष्व प्रभूतं हिरण्यरत्नादिकं चिरजीवनं चेत्यर्थः ॥

**महाभूमौ नचिकेतस्त्वमेधि ॥**

भव राजेतिशेषः । अस्तेर्लोण्मध्यमपुरुषैकवचनम् ।

**कामानांत्वा कामभाजं करोमि ॥**

कामानां काम्यमानानामप्सरःप्रभृतिविषयाणाम् । कामभाजं कामः कामना तांविषयतयाभजतीति कामभाक् तम् । काम्यमानाप्सरःप्रभृतीनामपि कामनाविषयं करोमीत्यर्थः ॥

**येये कामा दुर्लभा मर्त्यलोके सर्वान्कामान्छन्दतः प्रार्थयस्व ॥**

छन्दतो यथेष्टमित्यर्थः ॥

**इमा रामाः सरथाः सतूर्या नहीदृशा लंभनीया मनुष्यैः ॥**

रथवादित्रादिसहिता मया दीयमानाः स्त्रियो मनुष्याणां दुर्लभा इत्यर्थः ॥

**आभिर्मत्प्रत्ताभिः परिचारयस्व ॥**

मया दत्ताभिः परिचारिकाभिः पादसंवाहनादिशुश्रूषां कारयस्वेत्यर्थः ॥

नचिकेतोमरणं माऽनुप्राक्षीः ॥

मरणमनु मरणान्मुक्तेः पश्चात्।मुक्तात्मस्वरूपमितियावत्।मरण शब्दस्य देहवियोगसामान्यवाचिनोपि प्रकरणवशेन विशेषवाचित्वं नदोषायेति द्रष्टव्यम् ॥ एवं प्रलोभ्यमानोपि नचिकेता अक्षुभित हृदय आह ॥

श्वोऽभावा मर्त्यस्य यदंतकैतत्सर्वेंद्रियाणां जरयन्तितेजः ॥

हे अंतक त्वदुपन्यस्ता ये मर्त्यस्य कामास्तेश्वोऽभावाः श्व-अभावोयेषां ते तथोक्ताः । दिनद्वयस्थायिनो न भवंतीत्यर्थः । सर्वेन्द्रियाणांयदेतत्तेजः तत क्षपयन्ति । अप्सरः प्रभृतयोहि भोगाः सर्वेन्द्रियदौर्बल्यावहा इतिभावः ॥

अपि सर्वं जीवितमल्पमेव ॥

ब्रह्मणोपि जीवितं स्वल्पम् । किमुतास्मदादिजीवितम् । अतश्चिरजीवितापि न वरणार्हेति भावः ॥

तवैव वाहास्तवनृत्य(त्त) गीते ॥

वाहा रथादयः । तिष्ठंत्विति शेषः ॥

नहिवित्तेन तर्पणीयोमनुष्यः ॥

नहि वित्तेन लभ्ये (ब्धे) न कस्यचित्तृप्तिर्दृष्टचरी "न जातु कामः कामानामुपभोगेन शाम्यति" इति न्यायादितिभावः ॥ किंच—

लप्स्यामहे वित्तमद्राक्ष्मचेत्त्वाम् ॥

वयं दृष्टवंतश्चेत्त्वां वित्तं प्राप्स्यामहे । त्वद्दर्शनमस्ति चेद्वित्तलाभेकोभार इतिभावः ॥ तर्हि चिरजीविता प्रार्थनीयेत्यत्राह ॥

जीविष्यामोयावदीशिष्यसित्वम् ॥

---

१ हविषा कृष्णवर्त्मेव भूय एव विवर्धते इत्युत्तरार्धं श्रीभागवते ।

यावत्कालं याम्येपदेत्वमीश्वरतया वर्तसे । व्यत्ययेन परस्मैपदम् । तावत्पर्यन्तमस्माकमपिजीवनं सिद्धमेव । नहित्वदाज्ञालंघनेनास्मज्जीवितान्तकरः कश्चिदस्ति । वरलाभालाभयोरपि तावदेवजीवनमितिभावः ॥

वरस्तुमेवरणीयः सएव ॥

येयंप्रेत इति प्राक्प्रस्तुतोवरएव वरणीय इतिभावः ॥

अजीर्यताममृतानामुपेत्य ॥

जरामरणशून्यानां मुक्तानां स्वरूपं ज्ञात्वा ॥

जीर्यन्मर्त्यः क्वतदास्थः प्रजानन् ॥

विवेकीजरामरणोपप्लुतोयंजनः तदास्थः जरामरणाद्युपप्लुताप्सरःप्रभृतिविषयकास्थावान् क्व कथं भवेदित्यर्थः । क्वाधस्थइति पाठेअधोदेशभूतभूमिष्ठइत्यर्थः ॥

अभिध्यायन्वर्णरतिप्रमोदान् ॥

तत्रत्यान्वर्णाआदित्यवर्णत्वादिरूपविशेषाः,रतिप्रमोदाः संभोगादिजनिता आनंदविशेषाः, तान्सर्वानभिध्यायन् निपुणतयानिरूपयन् ॥

अनतिदीर्घेजीवितेकोरमेत ॥

अत्यल्पे ऐहिकेऽचिरजीविते कः प्रीतिमान्स्यादित्यर्थः ॥

यस्मिन्निदं विचिकित्सन्ति मृत्यो यत्सांपराये महति ब्रूहि नस्तत् ॥

महति पारलौकिके यस्मिन्मुक्तात्मस्वरूपे संशेरते तदेवमेब्रूहि ॥

योयं वरोगूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते ॥

गूढमात्मतत्त्वमनुप्रविष्टोयोयंवरः तस्मादन्यं न नचिकेता वृणीत इतिश्रुतेर्वचनम् ॥ इतिप्रथमावल्ली ॥ एवं शिष्यं परीक्ष्य तस्य मुमुक्षास्थैर्यंनिश्चित्य तस्योपदेशयोग्यतां मन्वानः मुमुक्षां स्तौति ॥

अन्यच्छ्रेयोन्यदुतैवप्रेयः ॥

अतिप्रशस्तं मोक्षवर्त्माप्यन्यत् । प्रियत्वास्पदं भोगवर्त्माप्यन्यत् ॥

ते उभे नानार्थे पुरुषꣳसिनीतः ॥

ते श्रेयःप्रेयसी विलक्षणप्रयोजने पुरुषं स्ववशमापादयत इत्यर्थः॥

तयोः श्रेयआददानस्य साधु ॥

तयोर्मध्येश्रेय आददानस्यमोक्षायप्रयतमानस्य साधुभद्रंभवति।

हीयतेर्थाद्यउप्रेयोवृणीते ॥

यस्तु प्रेयोवृणीते सपुरुषार्थाद्भ्रष्टोभवति । उइत्यवधारणे ॥

श्रेयश्चप्रेयश्चमनुष्यमेतः ॥

मनुष्यंप्राप्नुतः ॥

तौसंपरीत्यविविनक्तिधीरः ॥

तौ श्रेयःप्रेयःपदार्थौ सम्यगालोच्य नीरक्षीरे हंस इव पृथक्करोति॥

श्रेयोहि धीरोऽभिप्रेयसोवृणीते ॥

धियारमत इतिधीरः प्रज्ञाशाली।प्रेयोपेक्षयाभ्यर्हितं श्रेयएववृणीते

प्रेयो मंदो योगक्षेमाद्वृणीते ॥

मन्दमतिर्योगक्षेमाद्धेतोः प्रेयोवृणीते । शरीरस्योपचययोयोगः । क्षेमः परिपालनम् ॥

स त्वंप्रियान्प्रियरूपांश्चकामान् ॥

तादृशस्त्वंस्वतोरूपतश्चप्रियान्काम्यमानांस्त्र्यादीनित्यर्थः ॥

अभिध्यायन्नचिकेतोत्यस्राक्षीः ॥

दुःखोदर्कत्वदुःखमिश्रत्वादिदोषमिश्रतया निरूपयंस्त्यक्तवान-सीत्यर्थः ॥

नैताᳫँसृङ्कांवित्तमयीमवाप ॥

वित्तमयीं धनमयीं सृङ्कां कुत्सितगतिं विमूढजनसेवितां नाऽवा-प्तवानसि ॥

यस्यां मज्जंतिबहवोमनुष्याः ॥

स्पष्टोर्थः ॥

दूरमेतेविपरीते विषूची अविद्या या च विद्येति ज्ञाता ॥

या अविद्येतिज्ञाता कामकर्मात्मिका याच विद्येतिज्ञाता वैराग्य-तत्त्वज्ञानमयी एतेदूरमत्यंतंविषूची विषूच्यौभिन्नगती परस्पर विरुद्धेच ॥

विद्याभीप्सिनं नचिकेतसं मन्ये ॥

विद्याभीप्सिनं विद्यार्थिनम् । विद्याभीप्सितमितिपाठे आहिता ग्न्यादित्वान्निष्ठांतस्य परनिपातः, छांदसत्वाद्वा ॥

नत्वांकामाबहवोऽलोलुपन्त ॥

कामाबहवोपि त्वां नालोलुपन्त श्रेयोमार्गाद्विच्छेदंनकृतवंतः । लुपसदेतियङंत्ताल्लुङि छांदसो यलोपः । यङ्लुगंताद्वाछांदसमा-त्मनेपदम् अडभावश्च । "अविद्या या चविद्येति ज्ञाता" इत्युपात्त-मार्गद्वये अविद्यामार्गनिंदाति ॥

अविद्यायामंतरे वर्तमानाः ॥

काम्यकर्मादिलक्षणायामविद्यायां मध्ये घनीभूत इव तमसि व-र्तमानाः ॥

स्वयंधीराः पण्डितंमन्यमानाः ॥

स्वयमेव प्रज्ञाशालिनः शास्त्रकुशलाश्चेति मन्यमानाः ॥

जंघन्यमानाः परियन्तिस्ममूढाः ॥

जरारोगादिदुःखपीडिता अविवेकिनः परिभ्रमंति ॥

अन्धेनैवनीयमाना यथान्धाः न सांपरायः प्रति भाति बालम् ॥

परलोकसाधनव्यापारोऽविवेकिनं प्रति न प्रकाशते ॥

प्रमाद्यन्तं वित्तमोहेनमूढम् ॥

अनवहितमनस्कं विषयाशावशीकृतमनोरथम् ॥

अयंलोकोनास्ति परइतिमानी ॥

अयमेवलोकोस्ति परलोकोनास्तीति मन्यमानः ॥

पुनः पुनर्वशमापद्यतेमे ।

मत्कार्यमाणयातनाविषयो भवतीत्यर्थः । व्यासाचार्यैः "संयमनेत्वनुभूय । ३ । १ । १३ । इति" सूत्रे 'अयं लोकोनास्तिन-परउतमानीति पाठानुसारेण अयं च लोकः परश्च लोकोनास्तीत्ययमर्थोवर्णितः । तत्र पक्षे तस्येति शेषः । पूरणीयश्चशब्दश्चाध्याहार्यः । मानीत्यस्यदुर्मानीत्यर्थः । तस्यायंलोकः परश्च लोकोनास्तीत्यर्थः । शिष्टपरिग्रहाभावादयं च लोकोनास्तीत्यस्योपपत्तिर्द्रष्टव्या। स दुर्मानी पुनःपुनर्वशमापद्यतेमइत्युत्तरत्र संबध्यते ॥

श्रवणायापिबहुभिर्योनलभ्यः ॥

यः प्रसिद्धः परमात्मा सोऽनेकैः पुरुषैः श्रोतुमपिनलभ्य इत्यर्थः । श्रवणलाभोपि महासुकृतफलमितिभावः ॥

शृण्वंतोपि बहवो यं न विद्युः ॥

श्रवणेपि नसर्वेषां परमात्मप्रतिपत्तिः सुलभेतिभावः ॥

आश्चर्योस्य वक्ताकुशलोस्य लब्धा ॥

अस्यकुशलोवक्ता कुशलः प्राप्ता च दुर्लभइत्यर्थः ॥

आश्चर्योज्ञाता कुशलानुशिष्टः ॥

कुशलेनाचार्येणानुशिष्टोज्ञाताप्याश्चर्यः " मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ॥ यततामपि सिद्धानां कश्चिन्मांवेत्ति तत्त्वतः" इत्युक्तेरितिभावः ॥

न नरेणावरेण प्रोक्तएष सविज्ञेयोबहुधाचिंत्यमानः।

अवरेणाश्रेष्ठेन प्राकृतेन पाण्डित्यमात्रप्रयोजनवेदान्तश्रवणेन नरदेहात्माभिमानिना एषआत्मा विज्ञेयो न भवति बहुधाचिंत्यमानःवादिभिरितिशेषः ॥

अनन्यप्रोक्ते गतिरत्र नास्ति ॥

अनन्येनोच्यमानादात्मनोनन्येनतदेकांतिना ब्रह्मात्मसाक्षात्कारिणा प्रोक्ते आत्मनि यादृशी अवगतिः सा आत्मावगतिरत्रावरेण प्रोक्ते नास्तीत्यर्थः। यद्वा। अत्र संसारे गतिः चंक्रमणं नास्तीत्यर्थः। यद्वा। अनन्यप्रोक्ते स्वयमवगते गतिरात्मावगतिर्नास्तीत्यर्थः। अन्य प्रोक्त इतिपाठांतरेऽवरनरप्रोक्ते सति आत्मावगतिर्नास्तीत्यर्थः ॥ ननु येन केन चिदुपदिष्टेप्यूहापोहशालिनः स्यादेवेत्यत आह ॥

अणीयान्ह्यप्रतर्क्यमणुप्रमाणात् ॥

यतोऽणोरणीयानात्माऽतस्तत्स्वरूपं तर्कागोचरम् ॥ तदेवाह ॥

नैषातर्केण मतिरापनेया ॥

आत्मविषयिणी मतिस्तर्कप्रापणीया नेत्यर्थः ॥ अतस्तर्ककुशलेनापि स्वयंज्ञातुं नशक्येत्यर्थः ॥

प्रोक्तान्येनैव सुज्ञानायप्रेष्ठ ॥

हे प्रेष्ठ प्रियतमस्त्वस्मादन्येनैव गुरुणोपदिष्टैव मतिर्मोक्षसाधन-ज्ञानाय भवति ॥ का पुनः सा मतिरित्यत्राह ॥

यांत्वमापः सत्यधृतिर्बतासि ॥

यांमतिंत्वमापः प्राप्तवानसि सिसाधयिषिततया निश्चितवानसीत्यर्थः ॥ सत्यधृतिः सत्याऽप्रकंप्याधृतिर्यस्य तथोक्तः। बतेत्यनुकंपायाम् ॥

त्वादृङ्नोभूयान्नचिकेतः प्रष्टा ॥

त्वादृशः शिष्योस्माकं भूयादित्यर्थः। पुनरपि तुष्ट आह ॥

जानाम्यहꣳशेवधिरित्यनित्यम् ॥

शेवधिः कुबेराद्यैश्वर्यमेवंजातीयककर्मफललक्षणमनित्यमिति जानामि ॥

नह्यध्रुवैः प्राप्यते ध्रुवंतत् ॥

तद्दात्मतत्त्वम्। अध्रुवैरनित्यफलसाधनभूतैरनित्यद्रव्यसाध्यैर्वा कर्मभिरित्यर्थः ॥

ततो मया नाचिकेतश्चितोग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥

एवं ज्ञातवता मया ब्रह्मप्राप्तिसाधनज्ञानोद्देशेनानित्यैरिष्टकादिद्रव्यैर्नाचिकेतोग्निश्चितः। तस्माद्धेतोर्नित्यफलसाधनं प्राप्तवानस्मीत्यर्थः। अतो ब्रह्मप्राप्तेर्ज्ञानैकसाध्यत्वस्यनविरोधः॥ त्वादृङ्नोभूयान्नचिकेतः प्रष्टेति पूर्वमंत्रोक्तं नचिकेतसः श्रवणाधिकारंविवृणोति ॥

कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरानंत्यमभयस्य पारम्। स्तोमंमहदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्यानचिकेतोत्यस्राक्षीः ॥

क्रतोः कर्मणः प्रतिष्ठां फलभूतां जगतः कामस्याप्तिं चतुर्मुखस्थानपर्यंतसर्वलोकसंबंधिरूपादिविषयात्मककामप्राप्तिं च दृष्ट्वा मोक्षस्वरूपमाह ॥ आनंत्यमभयस्य पारमित्यादिना अविनाशित्वम्, अत्यंतनिर्भयत्वम्, अपहतपाप्मत्वम्, सत्यसंकल्पत्वादिमहागुणरूपस्तोमम्, उरुकीर्तिं स्थैर्यंच मोक्षगतं दृष्ट्वा लौकिकान् कामान् प्रज्ञया त्यक्तवानित्यर्थः । यद्वा । मोक्षस्वरूपपरमात्मस्वरूप एवसर्वकामावाप्तिं तत्रैव सकलजगदाधारत्वं क्रतोरनंतफलरूपतां चेत्येवं सर्वं परमात्मविषयतया योजनीयम् ॥ तृतीयं प्रश्नं प्रतिवक्ति ॥ तंदुर्दर्शमित्यादिना मंत्रद्वयेन ॥

तंदुर्दर्शं गूढमनुप्रविष्टम् ॥

"श्रवणायापि बहुभिर्योनलभ्यः" इत्युक्तरीत्या द्रष्टुमशक्यम्। गूढं तिरोधायि कर्मरूपाविद्यातिरोहितम् । सर्वभूतानुप्रविष्टम् ॥

गुहाहितम् ॥

हृदयगुहावर्तिनम् ॥

गह्वरेष्ठम् ॥

आत्मांतर्यामिणम् ॥

पुराणम् ॥

अनादिम् ॥

अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥

विषयेभ्यः प्रतिसंहृत्यचेतसः आत्मनि समाधानमध्यात्मयोगः । " यच्छेद्वाङ्मनसीप्राज्ञः यदापंचावतिष्ठंते ज्ञानानि मनसा सह" इत्यादिना योवक्ष्यमाणस्तेन योयमधिगमः जीवात्मज्ञानं तेन हेतुना देवं परमात्मानं मत्वाध्यात्वेत्यर्थः । जीवात्मज्ञानस्य परमा-

त्मज्ञानहेतुत्वादितिभावः । हर्षशोकौ विषयलाभालाभप्रयुक्तहर्ष शोकौ जहातीत्यर्थः ॥

**एतच्छ्रुत्वासंपरिगृह्यमर्त्यः ॥**

एतदात्मतत्त्वं श्रुत्वा संपरिगृह्य मननादिकंकृत्वेत्यर्थः ॥

**प्रवृह्यधर्म्यम् ॥**

कर्मसाध्यं शरीरादि प्रवृह्यपृथक्कृत्य परित्यज्येत्यर्थः ॥

**अणुमेतमाप्य ॥**

एतं स्वात्मभूतं सूक्ष्मतया चक्षुराद्यगोचरम् । अणीयान् ह्यप्रत र्क्यमिति निर्दिष्टं देशविशेषे प्राप्य ॥

**समोदतेमोदनीयꣳहिलब्ध्वा ॥**

सविद्वान्मोदनीयं प्रीतिविषयमपहतपाप्मत्वादिगुणाष्टकविशि- ष्टस्वरूपं लब्ध्वा मोदते आनंदीभवतीत्यर्थः । "एष संप्रसादोऽ- स्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यते । स तत्रपर्य्येति जक्षत् क्रीडन् रममाणः" इतिश्रुत्यंतरार्थोऽत्रानुसं- धेयः । एवं प्रश्नस्योत्तरमुक्त्वा नचिकेतसं मोक्षार्हत्वेनस्तौति ॥

**विवृतꣳसद्मनचिकेतसंमन्ये ॥**

नचिकेतसं प्रति ब्रह्मरूपं सद्म धाम विवृतद्वारं प्रवेशार्हं मन्येइत्य- र्थः । "तस्यैष आत्मा विशति ब्रह्मधाम" इतिश्रुतेः ॥ ननु ब्रह्मजज्ञं देवमीड्यं विदित्वेति श्रुत्यैकार्थ्यायाध्यात्मयोगाधिगमेनदेवं मत्वे- त्यत्रापि परमात्मात्मकजीवः प्रतिपाद्यताम् । ततश्च तंदुर्दर्शमिति पूर्वमंत्रखंडोपि जीवविषय एवास्तु।ततश्च श्रवणायापिबहुभिर्योनल- भ्यइतिपूर्वसंदर्भोऽपिपरिशुद्धजीवस्वरूपपरएवास्त । ततश्च "आश्चर्य- वत्पश्यति कश्चिदेनमाश्चर्यवद्वदतितथैवचान्यः । आश्चर्यवच्चैनम- न्यः शृणोतिश्रुत्वाप्येनंवेदनचैवकश्चित्" इति परिशुद्धात्मविषय-

गीतावचनैकार्थ्यमुपपद्यतइतिचेन्न ॥ ब्रह्मजज्ञमितिमंत्रेब्रह्मजज्ञत्वरूपप्रक्रमश्रुतजीवलिंगबलेनचरमश्रुतदेवशब्दस्यदेवात्मकस्वरूपाश्रयणेपितंदुर्दर्शमितिमंत्रेतादृशजीवलिंगाभावेनदेवमित्यस्यदेवात्मकमित्यर्थाश्रयणायोगात् । एतदेवाभिप्रेत्यभगवताभाष्यकृता "गुहांप्रविष्टावात्मानौ । १ ।२।११॥" इति सूत्रेपरमात्मनस्तावत्तंदुर्दर्शं गूढमनुप्रविष्टमितिगुहाप्रवेशोदृश्यतइत्युक्तम् । तथैवायंमंत्रः परमात्मपरतयाव्यासाचार्यैर्विवृतः । गह्वरेष्ठमितिपदेनपरमात्मनः गह्वरशब्दितदुर्ज्ञेयपरिशुद्धात्मस्वरूपशरीरकत्वमप्युक्तम् ॥ इयांस्तुविशेषः ॥ ब्रह्मजज्ञमितिमंत्रेपरमात्मात्मकपरिशुद्धजीवस्वरूपंप्रतिपाद्यते । तंदुर्दर्शमितिमंत्रेतुजीवशरीरकपरमात्मस्वरूपंप्रतिपाद्यत इति नतयोरैकार्थ्यहानिः । "नह्यध्रुवैःप्राप्यतेहिध्रुवंतत् । एतच्छ्रुत्वासंपरिगृह्यमर्त्यः । प्रवृह्यधर्म्यमणुमेतमाप्य । समोदतेमोदनीयंहिलब्ध्वा । अध्यात्मयोगाधिगमेन देवं मत्वा हर्षशोकौ जहाति"इति प्रदेशेषुधर्मफलविलक्षणतया ज्ञानसाध्यतया प्राप्यतयाचनिर्दिष्टस्यप्राप्यस्य स्वरूपंचोक्तप्रदेशेषु धर्मविलक्षणतया मत्त्वेतिप्रतिपन्नस्योपायस्य स्वरूपं च धीरोहर्षशोकौ जहातीत्यत्र धीर इतिप्रतिपन्नस्य प्राप्तुश्चस्वरूपं शोधयितुं पृच्छति ॥

अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ।
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि ( ति ) तद्वद ॥

ननुभाष्ये देवं मत्वेत्युपासनविषयतया निर्दिष्टस्य प्राप्यभूतस्य देवस्याध्यात्मयोगाधिगमेनेति वेद्यतया निर्दिष्टस्य प्राप्तुः प्रत्यगात्मनश्च मत्त्वा धीरोहर्षशोकौजहातीतिनिर्दिष्टस्य ब्रह्मोपासनस्य स्वरूपशोधनाय पुनः पप्रच्छ ॥ अन्यत्रधर्मादित्युक्तेः कथंतद्विरुद्धतया धीर इतिनिर्दिष्टस्य प्राप्तुरित्युच्यतइतिचेत् मैवंवोचः ॥

अध्यात्मयोगाधिगमेनेति वेदितव्यतया निर्दिष्टमात्मशब्दवाच्यं प्रजापतिविद्याप्रतिपन्नमुपास्यं प्राप्यभूतं परिशुद्धस्वरूपमेव । अतस्तस्यापि प्राप्यनिर्देशकत्वमेव । वस्तुगत्या तस्य प्राप्तुरभिन्नत्वात्प्राप्तुः प्रत्यगात्मनश्चेति भाष्यंनविरोत्स्यते । अतएव प्रथमं तावत्प्राप्तुः प्रत्यगात्मनः स्वरूपमाह—नजायतेम्रियतेवाविपश्चिदितीत्युत्तरभाष्यमपिनविरोत्स्यते । नहि नजायतेम्रियते वा विपश्चिदिति मंत्रप्रतिपाद्यस्य विपश्चिच्छब्दितपरिशुद्धस्वरूपस्य प्राप्तृरूपतोपपत्तिः "आत्मेंद्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः । विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्"इतिमंत्रप्रतिपाद्यस्यैव प्राप्तृरूपत्वात् । तथैव "विशेषणाच्च १।२।१२।" इतिसूत्रभाष्ये प्रतिपादितत्वात् । अतएव प्राप्तृप्राप्यैकाधिकरणे निर्देशपरे गुहामंत्रे छायातपावित्यज्ञत्ववाचिनःछाया शब्देन निर्देशोदृष्टः । नतुविपश्चिच्छब्देन । अतोयथोक्त एवार्थः । अयं मंत्रोव्यासार्यैः "त्रयाणामेवचैव०।१।४।६।" इतिसूत्रे विवृतः ॥ धर्म उपायः धर्मादन्यत्र प्रसिद्धोपायविलक्षण इत्यर्थः । अधर्मोधर्मेतरः उपेयः अधर्मादन्यत्र प्रसिद्धसाध्यविलक्षण इत्यर्थः । अस्मादिति बुद्धिस्थस्तत्साधकोविवक्षितः । स एवोपेता सहिप्रसिद्धोपेतृविलक्षणः । साधकावस्थायामितरफलविरक्तत्वादेवं फलदशायामाविर्भूतगुणाष्टकविशिष्टस्वरूपत्वाच्च । कृताकृतादितिधर्मादीनां विशेषणम् । कृताकृताच्च धर्मादेर्विलक्षणं यद्भूताच्च भव्याच्च धर्मादेर्विलक्षणं यदित्यर्थः ॥ यद्वा धर्माधर्मादन्यत्रेत्युपासनप्रश्नः । पुण्यपापरूपसाधनविलक्षणत्वात् । कृताकृताद्भूताद्भव्याच्चान्यत्रेति कालापरिच्छिन्नमुपेयं पृष्टम् । उपेतुरपि चेतनस्य नित्यत्वात् प्राप्यांतर्भावाच्च । अतएव तस्यापि तंत्रेण प्रश्नः । तदन्तर्गतंच प्राप्तुः स्वरूपमितिहि वक्ष्यते । अत्र यत्तच्छब्दौ तृतीयपराविति भाव इतिनाचिकेतसा पृष्ट आह ॥

## सर्वे वेदा यत्पदमामनंति ॥

पद्यतइति पदं "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इत्युत्तरत्र वक्ष्यमाणं ब्रह्मस्वरूपं सर्वेवेदाः साक्षात्परंपरयावा प्रतिपादयंतीत्यर्थः ॥

## तपांसिसर्वाणिचयद्वदंति ॥

तपांसि तपःप्रधानाः उपरितनभागा इतिव्यासार्यैर्व्याख्यातम् ॥

## यदिच्छंतो ब्रह्मचर्यं चरंति ॥

ब्रह्मचर्यं गुरुकुलवासस्त्रीसंगराहित्यादिलक्षणं यदिच्छंतोनुतिष्ठंति ॥

## तत्तेपदं संग्रहेणब्रवीमि ॥

तत्तेपदं संग्राहकेण शब्देन वक्ष्यामीत्यर्थः। प्राप्यवक्तव्यत्वप्रतिज्ञापरेस्मिन्मंत्रेर्थात्प्रणवप्रशंसाया अपिलाभात्प्रणवंप्रशस्येति भाष्यस्य सर्वे वेदा इत्यादि पादत्रयोक्तब्रह्मप्रतिपादकतयाप्रशस्येत्यर्थ इतिश्रुतिप्रकाशिकावचनस्यचनानुपपत्तिरितिद्रष्टव्यम् । संक्षेपेण तत्प्रतिपादकं किमित्यतआह ॥

## ओमित्येतत् ।

"ॐ तत्सदितिनिर्देशो ब्रह्मणस्त्रिविधः स्मृतः"इतिप्रणवस्यब्रह्मवाचकत्वात्[1]प्रणवावयवयोरकारमकारयोः परजीववाचितयोपेयोपेत्रोरप्युपदिष्टत्वमस्तीति द्रष्टव्यम् ॥ अतएवोपायस्वरूपमप्यत्रार्थमितिमन्तव्यम् ॥ एवं वाचकं प्रणवं द्वाभ्यांमंत्राभ्यांस्तौति ॥

## एतदेवाक्षरंब्रह्म ॥

ॐ मित्यनेनैवाक्षरेण परमपुरुषमभिध्यायीतेतिब्रह्मप्राप्तिसाधनध्यानालंबनत्वादिदमेवाक्षरं ब्रह्मप्राप्तिसाधनत्वाद्ब्रह्म ॥

---

१ अयमर्थः श्रीपद्मपुराणेउत्तरखण्डेषड्विंशत्यधिकद्विशततमाध्यायादौस्पष्टः श्रीवैष्णवसम्प्रदायगम्यश्चभवति ॥

एतद्ध्येवाक्षरंपरम् ॥

जाप्येषुध्येयेषुच श्रेष्ठमित्यर्थः ॥

एतद्ध्येवाक्षरंज्ञात्वा योयदिच्छति तस्यतत् ॥

एतदक्षरमुपास्यानेनोपासनेनेदंफलंमेभूयादिति यत्कामयते तत्तस्य भवतीत्यर्थः ॥

एतदालंबनᳬश्रेष्ठम् ॥

एतदोंकाररूपमालंबनंश्रेष्ठम् । ध्यानादेरितिशेषः ॥ अतएव–

एतदालंबनंपरम् ॥

एतदालंबनंध्यानादि सर्वोत्कृष्टमित्यर्थः ॥

एतदालंबनंज्ञात्वा ब्रह्मलोकेमहीयते ॥

स्पष्टोर्थः ॥ प्रथमंतावत्प्रत्यगात्मस्वरूपमाह ॥ नजायतेम्रियते इत्यादिना मंत्रद्वयेन । इदंचप्रस्तुत्य व्यासार्यैरित्थंह्युक्तम् "इदं मंत्रद्वयं तावदेकविषयम् । नहन्यतेहन्यमानेशरीर इत्येतद्विवरणरूपत्वाद्वितीयमंत्रस्य हंताचेदितिमंत्रश्च जीवविषयएव । लोकस्यपरमात्मनि हंतृहंतव्यभावप्रतीत्यभावात् । परमात्माहि प्रत्यक्षागोचरः। कथंतस्मिन्वध्यतादिप्रतिपत्तिः । अहमेनं हन्मि अयं मांहंतुमिच्छतीति वध्यघातकभावाभिमानोहि देहिनां जीवविषय एव । ननुनास्यजरयैतज्जीर्य्यतीतिवत् परमात्मनोपि हननप्रतिषेधउपपद्यते ॥ सत्यम् ॥ तत्र दहराकाशस्य देहांतःस्थित्या शङ्कित विकारनिषेध उपपद्यते । इहतुलोकप्रसिद्धा भ्रांतिरनूद्य निरस्यते । नहिपरमात्मनि वध्यघातकभ्रान्तिः कस्याप्यस्ति । अतोनुवादनिषेधावनुपपन्नौ । नजायत इतिमंत्रश्चेतनैकार्थः । अतोमंत्रद्वयमपि जीवविषयकमेवेति । अक्षरार्थस्तु–

नजायते म्रियतेवा विपश्चित् ॥

विपश्चित्त्वार्होऽयमिदानीमपि जननमरणशून्य इत्यर्थः ॥

नायंकुतश्चित् ॥

उत्पादकशून्यः ॥

नबभूवकश्चित् ॥

पूर्वमपि मनुष्यादिरूपेण जननशून्यः॥नजायते इत्यत्र हेतुमाह॥

"अजः" ॥ इति ॥

नम्रियते इत्यत्रहेतुमाह ॥

"नित्यः" ॥ इति ॥

नकुतश्चिदित्यत्र हेतुमाह ॥

"शाश्वतोयम्" ॥ इति ॥

नबभूवेत्यत्र हेतुमाह ॥

"पुराणः" ॥ इति ॥

ननुकथमस्य नित्यत्वं शरीरान्तर्वर्तिनः शरीरविनाशानुविनाशित्वावश्यंभावादित्यतआह ॥

नहन्यतेहन्यमानेशरीरे ॥

स्पष्टोर्थः ॥ तदेवोपपादयति ॥

हन्ताचेन्मन्यतेहंतुम् ॥

अहमेनं हनिष्यामीति देहात्मदृष्ट्या मन्यतेचेदित्यर्थः ॥

हतश्चेन्मन्यतेहतम् ॥

छिन्नदेहावयवो देहात्मदृष्ट्यात्मानं हतोहमितिमन्यतेचेदित्यर्थः॥

उभौतौनविजानि (नी) तः ॥

आत्मस्वरूपमितिशेषः ॥

## नायंहन्ति ॥

आत्मानमितिशेषः ॥

## नहन्यते ॥

आत्मस्वरूपमितिशेषः । नचवेदान्तवेद्यपरिशुद्धात्मस्वरूपे कथंहननादिप्रसक्तितत्पूर्वकनिषेधाावितिवाच्यम् । तस्यैव क्षेत्रज्ञतया तत्प्रयुक्तस्य तत्संभवादितिद्रष्टव्यम् ॥ एवं मंत्रद्वयेन प्रत्यगात्मस्वरूपंविशोध्य तदात्मभूतपरमात्मस्वरूपमाह ॥

## अणोरणीयान् ॥

अणोः सर्वाचेतनापेक्षया सूक्ष्माच्चेतनादणुतरः । ततोपिसूक्ष्मस्तदन्तःप्रवेशयोग्यः ॥

## महतोमहीयान् ॥

आकाशादेरपि महीयान्महत्तरः । स्वाव्याप्तवस्तुरहितइत्यर्थः ॥

## आत्मास्यजन्तोर्निहितोगुहायाम् ॥

अस्यजन्तोर्नजायते म्रियत इति मंत्रद्वयप्रतिपाद्यस्य चेतनस्यात्मा अंतः प्रविश्य नियन्ता ॥ नचास्यजंतोरित्यस्य हृदयकुहरवाचिगुहाशब्देनैवान्वयोनात्मशब्देनेतिशङ्क्यम् ॥ मूलतः शाखां परिवास्योपवेशंकरोतीत्यत्र मूलतः शाखांपरिवास्य मूलतः उपवेशंकरोतीत्यन्वयवत् साकांक्षाभ्यामात्मगुहाशब्दाभ्यामन्वयसंभवात् । अतश्च जंतुशब्दितपूर्वमंत्रद्वयनिर्दिष्टजीवस्वरूपापेक्षया एतन्मंत्रप्रतिपाद्यस्य भेदप्रतीतेः पूर्वमंत्रद्वयप्रतिपाद्य एवाणोरणीयानितिमंत्रप्रतिपाद्योस्त्वितिशंकानिरस्ता ॥ ननुनजायत इत्युपन्यस्तस्यात्मनोजायमानवाचिजंतुशब्देन परामर्शस्यानुपपन्नतयाऽस्यजंतोरित्यस्य प्रत्यक्षादिसंनिधापितेतरदेहपरताया एव वक्तव्य-

---

१ कालनिष्ठात्यंताभावाप्रतियोगीत्यर्थः ॥

त्वेन तद्गुहानिहितआत्माप्राग्उपन्यस्तोजीवएवास्तु ॥ नचकर्तृत्व-भोक्तृत्वविशिष्टतया सदाहमिति भासमानेजीवे " कस्तंमदामदं देवं मदन्योज्ञातुमर्हति । कइत्थावेदयत्रसः " इत्युत्तरसंदर्भे प्रति-पाद्यमानदुर्विज्ञानत्वं कथमन्वेतीतिवाच्यम् । जीवस्यकर्तृत्वा-दिविशिष्टतया सर्वलोकविदितत्वेपि मुक्तप्राप्यब्रह्मरूपविशिष्टतया दुर्ज्ञानत्वसंभवादितिचेन्न। "प्राणीतु चेतनोजन्मी जंतुजन्युशरीरिणः" इतिजंतुशब्दस्य चेतनपर्यायतया पाठात् प्रकृतजीववाचित्वसंभवा दस्येतिशब्दस्यपूर्वमंत्रनिर्दिष्टजीवविषयत्वसंभवेप्रत्यक्षोपस्थापित देहपरत्वाश्रयणायोगात् । "एषमआत्मान्तर्हृदयेणीयानेषमेआत्मा न्तर्हृदयेज्यायान्" इत्यत्यंताणुत्वमहत्वयोः परमात्मधर्मत्वेन प्रसिद्ध तया अणोरणीयानितिमंत्रस्य तद्विषयत्वस्यैव युक्तत्वेन पूर्वमंत्र-निर्दिष्टशुद्धात्मपरत्वासंभवादणोरणीयानिति मंत्रः परमात्मस्वरू-पपरएव ॥

तमक्रतुः पश्यतिवीतशोको धातुः प्रसादान्महिमा-नमात्मनः ॥

तं तादृशं परमात्मानम् । अक्रतुः काम्यकर्मादिरहितः सन् धातुर्धारकस्यपरमात्मनः प्रसादादात्मनोमहिमानं महत्वसंपादकं स्वसार्वज्ञादिगुणाविर्भावहेतुभूतं परमात्मानं यदापश्यति तदा वीत-शोकोभवतीत्यर्थः। "द्युभ्वाद्यायतनं" १।३।१। "इत्यधिकरणेजुष्टं यदा पश्यत्यन्यमीशम्" इतिमंत्रं प्रस्तुत्य यदास्वस्मादन्यं स्वस्येशं प्री-यमाणस्येश्वरस्यमहिमानंच निखिलजगन्नियमनरूपं यदा पश्यति तदावीतशोकोभवतीति भगवता भाष्यकृता व्याख्यातत्वात्तदनु सारेणहापि यःपश्यति सवीतशोकोभवतीत्यर्थः । धातुः प्रसादाद्वी तशोको भवतीतिवान्वयः। "प्रसीदत्यच्युतस्तस्मिन्प्रसन्नेक्लेशसंक्षयः" इतिस्मृतेरितिद्रष्टव्यम्। धातोःप्रसादादितिपाठेपिसएवार्थः । तमक्र

तुमितिपाठे अक्रतुं कर्मकृतोत्कर्षापकर्षशून्यमिति परमात्मविशेषणम् । धातुः प्रसादशून्यस्य परमात्मतत्त्वं दुरधिगममितिदर्शयति॥

आसीनोदूरंव्रजति शयानोयातिसर्वतः ॥

परमात्मनः सर्वात्मकत्वादितरत्रविरुद्धतया भासमाना अपि आसीनत्वदूरगन्तृत्वादिधर्मा जीवद्वारा तत्रसंतीतिभावः ॥

कस्तं मदामदं देवं मदन्योज्ञातुमर्हति ॥

हर्षाहर्षरूपविरुद्धधर्माश्रयं तं परमात्मप्रसादानुग्रहीतमादृशजनव्यातिरिक्तः कोवा ज्ञातुमर्हतीत्यर्थः ॥

अशरीरꣳशरीरेष्वनवस्थेष्ववस्थितम् ॥

अशरीरं कर्मकृतशरीररहितम् । अनवस्थेषु अस्थिरेषु शरीरेषु नित्यत्वेन तत्रास्थिरम् ॥

महांतंविभुम् ॥

महावैभवशालिनम् ॥

"आत्मानंमत्वाधीरोनशोचयति" । इति ॥

स्पष्टोर्थः ॥ ईदृशात्मप्राप्त्युपायमाह ॥

नायमात्मा प्रवचनेनलभ्यो नमेधया नबहुना श्रुतेन ॥

अत्र प्रवचनशब्देन प्रवचनसाधनंमननंलक्ष्यते । उत्तरत्र नमेधया नबहुना श्रुतेनेति श्रवणनिदिध्यासनयोर्वक्ष्यमाणत्वात्तत्समभिव्याहाराद्ध्ययनरूपप्रवचनस्य हेतुत्वाप्रसक्तेः । तथैवव्यासार्थैरपिविवृतत्वाच्च ॥

यमेवैष वृणुते तेन लभ्यः ॥

एष परमात्मा यंसाधकं प्रार्थयते तेन लभ्यः । प्रार्थनीयपुंसा

लभ्य इत्यर्थः । तत्प्रार्थनीयत्वंच तत्प्रियतमस्य पुंसः । तत्प्रियतम-त्वंच तत्प्रीतिमतएव। ततश्च भगवद्विषयिणी उपासकस्यप्रीतिर्भग-वत उपासकेप्रीतिमुत्पाद्य तत्प्राप्तिहेतुर्भवतीत्यर्थः ॥

तस्यैष आत्मा विवृणुते तनुं स्वाम् ॥

तस्योपासकस्यैष आत्मा परमात्मा स्वरूपंप्रकाशयति स्वात्मा-नुभवं प्रयच्छतीत्यर्थः । वृणुत इतिपाठे सएवार्थः ॥ परमात्मोपास-नांगतया कांश्चिद्धर्मानुपदिशति ॥

नाविरतो दुश्चरितात् ॥

अकृत्यकरणाद्योऽनिवृत्तः ॥

नाशान्तो नासमाहितः ॥

अशान्तबाह्येन्द्रियः नानाविधव्यापारविक्षिप्तचित्ततयाऽनवहि-तमनाः ॥

नाशान्तमानसोवापि ॥

अनिगृहीतमानसश्च ॥

प्रज्ञानेनैनमाप्नुयात् ॥

अत्र पुरुषार्थस्यापि दुश्चरितविरत्यादेरुपासनाङ्गतया विधानं पुरुषार्थानृतवदननिषेधस्य दर्शपौर्णमासप्रकरणे नानृतंवदेदिति क्रत्वङ्गतया विधानवदुपपद्यते । यस्तु पुरुषार्थमपि दुश्चरितनिषेध-मतिलंघ्य परमात्मोपासनमविगुणंचिकीर्षति तस्य दुश्चरितविरति-रूपाङ्गवैगुण्याढुपासनसाद्गुण्यं नसिध्यतीतिभावः ॥

यस्यब्रह्मचक्षत्रंचउभेभवतओदनः । मृत्युर्यस्यो-पसेचनंकइत्थावेदयत्रसः ॥

---

१ प्रियतमएवहि वरणीयोभवति । यस्यायंनिरतिशयप्रियः सएवास्य प्रियतमोभवति । यथा यंप्रियतमम् आत्मानं प्राप्नोति तथास्वयमेव भगवान् प्रयतते इत्यादिश्रीभाष्य मप्यत्रानुसन्धेयम् ॥

ब्रह्मक्षत्राख्यवर्णद्वयोपलक्षितकृत्स्नचराचरात्मकमिदं जगद्यस्यौदनोभवति विनाश्यंभवतीत्यर्थः । यस्यमृत्युः स्वयमद्यमानत्वेसति-अन्यस्यादनहेतुर्भवति "सः" निखिलचराचरसंहर्तापरमात्मा यस्मिन्प्रकारे स्थितः यत्प्रकारविशिष्टः तत्प्रकारमित्थमितिकोवेदेत्यर्थः॥ ननु ब्रह्मक्षत्रशब्देन चराचरग्रहणे किंबीजमितिचेत् ॥ उच्यते ॥ ब्रह्म च क्षत्रं च ओदन इत्युक्ते ब्राह्मणक्षत्रियवर्णयोःकिं(कं)चित्प्रत्योदनशब्दस्यमुख्यार्थत्वाभावादोदनशब्देन भोज्य(ग्य)त्वंविनाश्यत्वंवा लक्षणीयम् । नहि ब्रह्मक्षत्रमात्रभोक्तातन्मात्रसंहर्तावाकश्चिज्जीवः परमात्मावास्ति ॥नचान्तरादित्यविद्यायां येचामुष्मात्पराञ्चोलोकाः तेषांचेष्टइति सर्वलोकेश्वरे परमात्मन्युपासनार्थं लोकविशेषेईशितृत्वश्रवणात्सर्वसंहर्तर्यपि परमात्मनि ब्रह्मक्षत्रसंहरणमुपासनार्थमुपदिश्यतामितिवाच्यम्॥तद्वदस्योपासनाप्रकरणत्वाभावात्।अतोब्रह्मक्षत्रग्रहणस्य चराचरमात्रोपलक्षणं युक्तम्।उक्तंचसूत्रकृता।"अत्ताचराचरग्रहणात्।१।२।९।"इति॥नन्वेवमप्योदनशब्देन किमिति विनाश्यत्वं लक्षणीयम्।गौणत्वमपि शब्दस्य साधारणगुणमपहायासाधारणगुणेनैव निर्वाह्यम्।नह्यग्निर्माणवक इत्यत्राग्निशब्देन पैंगल्यादेरिव द्रव्यत्वादेरुपस्थितिरस्ति अतएवोद्गातृशब्देन सर्वर्त्विक्साधारणगुणं विहायोद्गातृगुणमात्रलक्षणा पूर्वतन्त्रेनिर्णीता।तद्वदिहापिब्रह्मक्षत्रयोरोदनशब्दमुख्यार्थत्वाऽसंभवेपि भोज्यत्वभोग्यत्वरूपान्तरङ्गाकारलक्षकत्वमेव युक्तम् । नत्वत्यंतबहिरङ्गविनास्यत्वाकारस्य येननिखिलचराचरसंहर्ता परमात्मात्रवाक्ये प्रतीयत इतिचेत् । उच्यते । यद्यपि विनाशित्वं साधारणाकारः तथापि मृत्युर्यस्योपसेचनमिति वाक्यशेषानुरोधात् साधारणोपि गौरयावृत्त्या लक्षयितुमुचितः । ननु उपसेचनशब्दापेक्षया ओदनशब्दस्य मुख्यत्वादोदनशब्दस्वारस्यानुरोधेनासाधारणाकाररूपभोग्यत्वे लक्षिते जघन्यमुपसेचनपदमबाध-

कत्वाभिप्रायेणकथंचिन्नीयताम्। अतश्च योत्र ब्रह्मक्षत्रभोक्ता यस्यच मृत्युरबाधकः सोस्मिन्मंत्रे प्रतिपाद्यः। भोक्तृत्वंचजीवस्येति सएवास्मिन्मंत्रे प्रतिपाद्यतामितिचेत् उच्यते। उपसेचनत्वेन रूपितस्यमृत्योरोदनत्वरूपितेन ब्रह्मक्षत्रशब्दितेनदध्यन्नवत्प्रतीतस्य संबंधस्य सर्वात्मनाबाधप्रसंगात्। नहि यस्य ब्रह्मक्षत्रंभोग्यंयस्यच मृत्युरबाधकइत्युक्ते मृत्योर्ब्रह्मक्षत्रस्यच संबंधः प्रतीयते। अतः उपसेचनशब्दस्योदनशब्दापेक्षया जघन्यत्वेप्यबाधकत्वरूपसाधारणगुणं विहाय स्वयमद्यमानत्वेसत्यन्यादनहेतुत्वरूपासाधारणाकारएवग्राह्यः। ततश्चैकवाक्यान्तर्गतयाचरमश्रुतोपसेचनपदानुसारेणौदनशब्देनापिविनास्यत्वमेवलक्षणीयम्। स्वबुद्ध्युपस्थापनीयविशेषाकाररूपगुणग्रहणादप्येकवाक्यतापन्नपदांतरोपस्थापित गुणग्रहणस्यैव बुद्धिलाघवेनैकवाक्यतासामर्थ्यानुरोधेनचन्याय्यत्वादित्यस्यार्थस्यात्ताचराचरग्रहणादित्यधिकरणेनिर्णीतत्वात्। परमात्मनश्च सूयासत्वंद्वाभ्यांमंत्राभ्यांदर्शयति॥

ऋतंपिबंतौसुकृतस्य लोके गुहांप्रविष्टौ परमे परार्धे। छायातपौ ब्रह्मविदोवदंति पंचाग्नयो येचतृणाचिकेताः॥

सत्यवदवश्यं भाविकर्मफलमनुभवंतौ सुकृतसाध्यलोकवर्तिनौ गुहांप्रविष्टौ हृदयगुहावर्तिनौ परार्धे उत्कृष्टे परमाकाशे वर्तमानौ अज्ञसर्वज्ञरूपतया छायातपशब्दनिर्दिष्टौ पंचाग्निपरिशुश्रूषापरिशुद्धांतःकरणात्त्रिणाचिकेताब्रह्मविदश्च वदंतीत्यर्थः। अज्ञवाचिछायाशब्देनजीवंनिर्दिशतोयमभिप्रायः। उपास्योपासकयोरेकगुहावर्तित्वेतयोरेवप्राप्तप्राप्यतया प्राप्यस्य चतत्प्राप्तिसाधनरथत्वेनानिरूपितेश-

रीरेवस्थानमयुक्तम् । नहिरथेन प्राप्तव्यो रथस्थोभवतीति शंका न कार्या । प्राप्यस्य परमात्मनः तत्रावस्थितत्वेपि जीवस्य "पराभिध्यानात्तुतिरोहितम्।३।२।५॥"इत्युक्तरीत्या परमात्मसंकल्पमूलकर्मरूपाविद्यातिरोहिततया तदनुभवलक्षणतत्प्राप्तेरभावेन प्राप्तप्राप्ययोः रथत्वरूपितशरीरांतर्वर्त्यैकगुहावर्तित्वकथनेनानुपपत्तिः ॥

यः सेतुरीजानानाम्,

यज्वनामाधारभूतः । कर्मफलप्रद इत्यर्थः । ईजानानामितिकानजंतः शब्दः ॥

अक्षरंब्रह्मयत्परम् ॥

निर्विकारं परं ब्रह्म ॥

अभयंतितीर्षतांपारम् ॥

संसारसागरंतितीर्षतांनिर्भयं दृढतरं तीरम् ॥

नाचिकेतꣳशकेमासि ॥

नाचिकेताग्निप्राप्यमुपासितुं शक्ताः स्मे त्यर्थः । शकेर्व्यत्ययेनशापि "इदंतोमासि । ७ । १ ।४६॥" नाचिकेतंशकेमसीत्यस्य मंत्र खंडस्य तथैव भाष्यकृता व्याख्यातत्वात् । अतोदुरुपास्यत्वबुद्ध्या नभेतव्यमितिभावः ॥ आत्मानंरथिनंविद्धीत्यादिना सोध्वनः पारमाप्नोतीत्यंतेन संसाराध्वपारभूतवैष्णवपरमपदप्राप्तौ परिकरमुपदिशन् प्राप्तरूपमुपदिशति ॥

आत्मानंरथिनंविद्धि,

शरीराधिष्ठातारम् ॥

शरीरंरथमेवच ॥

स्पष्टोर्थः ॥

बुद्धिंतुसारथिंविद्धि,

बुद्धिलक्षणव्यवसायाधीनत्वाद्देहप्रवृत्तेस्तस्याः सारथित्वमिति-भावः ॥

मनः प्रग्रहमेवच ॥

प्रग्रहोरशना ॥

इंद्रियाणिहयानाहुः,

स्पष्टोर्थः ॥

विषयांस्तेषु गोचरान् ॥

तेषुइन्द्रियेषु हयत्वेन रूपितेषु । गोचरान्मार्गान् । शब्दादिविषयान्विद्धीत्यर्थः । रथसारथिहयप्रग्रहत्वेन रूपितानां शरीरेन्द्रियमनोबुद्धीनामभावे रथित्वेन रूपितस्योदासीनस्यात्मनो गमनरूपलौकिकवैदिकक्रियाकर्तृत्वमेवनास्तीत्येतत्सुप्रसिद्धत्वेनदर्शयति ॥

आत्मेंद्रियमनोयुक्तंभोक्तेत्याहुर्मनीषिणः ॥

आत्मशब्दोदेहपरः । मनश्शब्दस्तत्कार्यबुद्धेरप्युपलक्षकः । पूर्वमंत्रे बुद्धेरपिसारथित्वेन निर्दिष्टत्वात् । भोक्ता कर्तृत्वभोक्तृत्वादिमानित्यर्थः । नहिकेवलस्यात्मनः कर्तृत्वंभोक्तृत्वंवास्तीतिभावः ॥ शरीरादेरथत्वादित्यरूपणस्य प्रयोजनमाह ॥

यस्त्वविज्ञानवान्भवतिअयुक्तेन मनसा सह । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इवसारथेः ॥ यस्तुविज्ञानवान्भवतियुक्तेनमनसासह । तस्येंद्रियाणिवश्यानि सदश्वाइवसारथेः ॥

लोकेहि समीचीनसारथिप्रग्रहवतः अश्वा वशीकृता भवंति ।एवंसारथिप्रग्रहत्वेन रूपितयोर्विज्ञानमनसोः सामीचीन्ये अश्वत्वेन

रूपितानींद्रियाणि वश्यानिभवन्तिनान्यथेत्यर्थः ॥ हयत्वेन रूपितानामिन्द्रियाणां वशीकरणतदभावयोः प्रयोजनंदर्शयति मंत्रद्वयेन ॥

यस्त्वविज्ञानवान्भवतिअमनस्कः सदाऽशुचिः । नतुतत्पदमाप्नोतिसंसारंचाधिगच्छति ॥ यस्तुविज्ञानवान्भवतिसमनस्कःसदा शुचिः । सतुतत्पदमाप्नोतियस्माद्भूयोनजायते ॥

अमनस्कः अनिगृहीतमनाः।अतएवाशुचिःसर्वदाविपरीतचिंताप्रवणत्वादित्यर्थः । नकेवलंजिगिमिषितप्राप्त्यभावमात्रं प्रत्युत गहनं संसारकांतारमेवप्रापयतीत्यर्थः ॥ किंतत्पदमित्याकांक्षायांतत्पदं दर्शयन्नुपसंहरति ॥

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोध्वनः पारमाप्नोति तद्विष्णोः परमं[1] पदम् ॥

समीचीनविज्ञानमनःशाली संसाराध्वपारभूतं परमात्मस्वरूपं प्राप्नोतीत्यर्थः । वशीकार्यत्वायरथत्वादिनारूपितेषु शरीरादिषु यानि येभ्योवशीकार्यतायां प्रधानानि तान्युच्यंते ॥

इन्द्रियेभ्यः पराह्यर्थाअर्थेभ्यश्चपरंमनः । मनसस्तुपराबुद्धिर्बुद्धेरात्मामहान्परः॥महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्नपरंकिंचित्साकाष्ठासापरागतिः॥

---

१ अत्रास्य परमपदस्य मायिकत्वेन मिथ्यात्वं परममुक्ताप्राप्यत्वंच केचिद्वदंति ॥ तत्परिहाराः श्रुतियुक्तिभिर्वेदार्थसंग्रहे श्रीभाष्यकारैर्निरूपिताः। अन्येषामपि तर्काणां परिहारोधिकरणसारावल्यां चतुर्थाध्याये "संघाते नित्यता न क्वचिदपि न पृथिव्यादिबाधस्तथात्वे पर्यंकाद्यैर्न साध्यं किमपि भगवतः पूर्णनिस्सीमशक्तेः ॥ व्याप्तप्राप्त्यर्थमूर्ध्वं गतिरपिविफलेत्यादिकान् हैतुकानां क्षोदिष्ठक्षीबजल्पाङ्कुतिरुपशमयेदद्भुतार्थस्वतंत्रा" इत्यादिना कृतः । तत्राधिकरणचिंतामणिरपि । यः संघातः सविनाशीति दृष्टानुसारेण व्याप्तिः दिव्यविभूतिनित्यत्वप्रतिपादकप्रमाणबाध्या । यथानरशिरःपवित्रत्वेन प्राण्यंगत्वस्य व्याप्तिः कपालापवित्रत्वप्रतिपादकप्रमाणबलाद्बाध्यतेइत्यादिः ॥

अस्य मंत्रद्वयस्यार्थोभगवता भाष्यकृता "आनुमानिकमप्येकेषाम्० ।१।४।१।" इत्यधिकरणेउक्तः । इत्थंहि तत्र भाष्यकृता तेषु रथादिरूपीतशरीरादिषु यानि येभ्योवशीकार्यतायां प्रधानानि तान्युच्यंते । इंद्रियेभ्यः पराइत्यादिना तत्र हयत्वेन रूपितेन्द्रियेभ्यो गोचरत्वेन रूपितविषया वशीकार्यत्वे पराः । वश्येंद्रियस्यापि विषयसन्निधाविन्द्रियाणां दुर्निग्रहत्वात् ।तेभ्योपि परंप्रग्रहरूपितंमनः।मनसिविषयप्रवणे विषयासन्निधानस्याप्यकिंचित्करत्वात् । तस्मादपि सारथित्वरूपिताबुद्धिः परा । अध्यासादौ मनसोप्यकिंचित्करत्वात्। तस्याअपि रथित्वेन रूपित आत्मा कर्तृत्वेन प्राधान्यात्परः । सर्वस्यात्मेच्छायत्तत्वात्।आत्मैव महानितिच विशिष्यते । तस्मादपि-रथरूपितंशरीरं परम् । तदायत्तत्वाज्जीवस्य सकलपुरुषार्थसाधनप्रवृत्तीनाम् । तस्मादपिपरः सर्वान्तरात्मभूतोंतर्याम्यध्वनः पारभूतः परमपुरुषः । यथोक्तस्यात्मपर्यंतस्य तत्संकल्पायत्तप्रवृत्तित्वात् । सखल्वन्तर्यामितयोपासनस्यापि निर्वर्तकः । "परात्तुतच्छ्रुतेः ।२।३।४०।" इतिहिजीवात्मनः कर्तृत्वं परमपुरुषायत्तमितिवक्ष्यते । वशीकार्योपासननिर्वृत्त्युपायकाष्ठाभूतः परमप्राप्यश्च सएव । तदिदमुच्यते।।"पुरुषान्नपरंकिंचित्साकाष्ठासापरागतिः" इति । तथाचान्तर्यामिब्राह्मणे"यआत्मनितिष्ठन्"इत्यादिभिः सर्वसाक्षात्कुर्वन्सर्वंनियमयतीत्युक्त्वा नान्योतोस्ति द्रष्टेतिनियंत्रंतरंनिषिध्यते।। भगवद्गीतासुच—"अधिष्ठानंतथाकर्त्ताकरणंचपृथग्विधम् । विविधाचपृथक्चेष्टादैवंचैवात्रपंचमम्" इति।।दैवमत्रपुरुषोत्तमएव । "सर्वस्यचाहंहृदिसन्निविष्टोमत्तः स्मृतिर्ज्ञानमपोहनंच" इतिवचनात् । तस्य च वशीकरणंतच्छरणागतिरेव ।। यथाह । "ईश्वरः सर्वभूतानांहृद्देशेर्जुनतिष्ठति । भ्रामयन्सर्वभूतानियन्त्रारूढानिमायया ।तमेवशरणंगच्छ"इति। तदेवमात्मानंरथिनंविद्धीत्यादिना रथ्यादिरूपकविन्यस्ताइन्द्रिया-

दयः इन्द्रियेभ्यः पराह्यर्था इत्यत्रस्वस्वशब्देरेवप्रत्यभिज्ञायन्ते। तेन रथरूपितं शरीरमितिपरिशेषात्तदव्यक्तशब्देनोच्यतइतिभाषितम्॥

एषसर्वेषुभूतेषुगूढोत्मानप्रकाशते ॥

सर्वेषु भूतेष्वात्मतया वर्तमानोसौ गुणत्रयमायातिरोहितत्वेना-जितबाह्याभ्यंतःकरणानां नयथावत्प्रकाशते ॥

दृश्यतेत्वग्र्ययाबुद्ध्यासूक्ष्मयासूक्ष्मदर्शिभिः ।

अग्र्यया ऐकाग्र्ययुक्तया बाह्याभ्यंतरव्यापाररहितया सूक्ष्मार्थ-विवेचनशक्तया सूक्ष्मदर्शनशीलैर्दृश्यतेइत्यर्थः॥ बाह्याभ्यंतरकरण-व्यापारराहित्यप्रकारमध्यात्मयोगाधिगमेनेतिनिर्दिष्टजीवस्वरूपज्ञा नप्रकारंचदर्शयति ॥

"यच्छेद्वाङ्मनसीप्राज्ञः" ॥ इत्यादिना ॥

इमंमंत्रं प्रस्तुत्येत्थंहि भाष्यकृता "हयादिरूपितानामिन्द्रि-यादीनां वशीकरणप्रकारोयमुच्यते । यच्छेद्वाङ्मनसी वाचंमनसि-नियच्छेत् । वाक्पूर्वकानि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणिच मनसि नियच्छेदित्यर्थः । वाक्शब्दे द्वितीयायाः सुपांसुलुगित्यादिना लुक् । मनसीति सप्तम्याश्छांदसोदीर्घः ।

तद्यच्छेज्ज्ञानआत्मनि ॥

तन्मनोबुद्धौनियच्छेत् । ज्ञानशब्देनात्र पूर्वोक्ताबुद्धिरभिधीयते। ज्ञानआत्मनीतिव्यधिकरणे सप्तम्यौ । आत्मनिवर्तमाने ज्ञाने निय-च्छेदित्यर्थः ॥

ज्ञानमात्मनि महति नियच्छेत्। (बुद्धिंकर्तारि मह-ति आत्मनि नियच्छेत्।) तद्यच्छेच्छांत आत्मनि॥

तंकर्तारं परस्मिन् ब्रह्मणि सर्वान्तर्यामिणि नियच्छेत् । व्यत्य-

१ "भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् । गूढोत्मावर्णविकृतेर्वर्णनाशात्पृषोदरम्" इति पृषोदरादौपाठात्साधुत्वंगूढोत्मनः इत्यस्य ॥

येन तदिति नपुंसकलिंगता। एवं भूतेन रथिना वैष्णवं पदंगन्तव्यमित्यर्थः” इति भाषितम्। विवृतंच श्रुतप्रकाशिकायाम्। वाचोमनसि नियमनं मनोननुगुणप्रवृत्तिवैमुख्यापादनम्। मनसोबुद्धौ नियमनं व्यवसायानुगुणप्रवृत्त्यापादनम्। बुद्धिश्चार्थेषु हेयताध्यवसायरूपा। तस्या बुद्धेरात्मनि नियमनं सएवोपायतया साक्षात्कार्यइत्येतदर्थविषयत्वापादनम्। शांते–स्वतऊर्मिषट्कप्रतिभटे। शांत-आत्मनि महत आत्मनोजीवस्य नियमनंनाम तच्छेषतया प्रतिपत्तिः। आत्मशब्दस्य पुल्लिंगत्वात् पुल्लिंगतच्छब्देननिर्देष्टव्ये छांदसत्वाल्लिंगव्यत्ययः॥ ननु भाष्ये ज्ञानआत्मनीति व्यधिकरणे सप्तम्यौ, आत्मनि वर्तमाने ज्ञाने नियच्छेदित्यर्थइत्युक्तिरयुक्ता। अव्यावर्तकत्वादात्मनीति विशेषणस्य। आत्मन्यवर्तमानज्ञानस्यैवाभावात्॥ नचतद्यच्छेज्ज्ञानइत्येतावत्युक्ते आत्मस्वरूपज्ञानभ्रांतिःस्यादतोज्ञाने आत्मनीत्युक्तमितिवक्तुंशक्यम्। तथा सति तस्याएवभ्रांतेः सामानाधिकरण्ययोजनया दृढीकरणप्रसंगात्। नह्यात्मनीत्यनेनात्मभ्रांतिर्व्युदस्यते। नचात्मनि वर्तमान इति भाष्यस्यात्मनि विषयविषयिभावलक्षणसंबंधेन वर्तमानइत्यर्थः। आत्मविषयकज्ञान इतियावत्। अतोनाव्यावर्तकत्वेन वैयर्थ्यदोष इतिवाच्यम्। तथासति ज्ञानमात्मनि महति नियच्छेदित्यस्य वैयर्थ्यापातात्। तदर्थस्यानेनैव सिद्धेरितिचेत्। उच्यते। अयमभिप्रायोभाष्यकारस्य। तद्यच्छेज्ज्ञानआत्मनीत्यत्राऽऽत्मनीति विषयसप्तमी। तच्चात्मविषयंज्ञानम्।आत्मोपादेयः।तदतिरिक्ताअर्थाहेयाइत्येवंरूपम्॥ तच्चार्थेषु हेयताध्यवसायरूपाबुद्धिरितिश्रुतप्रकाशिकायां व्यक्तम्। तस्यचात्मानात्मविषयकाहेयताहेयताध्यवसायरूपस्य

१ “इच्छयायदुपादेयं परातिशयसिद्धये॥ उभयानुभयैकैकजुषातौशेषशेषिणौ” इति शेषलक्षणम्॥ तत्रोभयजुषेच्छया पत्येशेते, अनुभयजुषेच्छया कुंडलाय हिरण्यम्, एकैकजुषेच्छया पुरुषायवस्त्रं, प्राणदायपुरुषः इतिक्रमादुदाहरणानि॥

ज्ञानस्य महत्यात्मनि नियमनंनाम सएवोपायतयासाक्षात्कार्य इत्येतदर्थविषयत्वापादनमिति तत्रैवश्रुतप्रकाशिकायामुक्तात्वाद्वाक्यद्वयस्यापि सप्रयोजनतयात्वदुक्तवैयर्थ्यशंकानवकाशइति ॥ एवं वशीकरणप्रकारमुपदिश्याधिकारिपुरुषानभिमुखीकरोति ॥

उत्तिष्ठतजाग्रत,

आत्मज्ञानाभिमुखाभवत । अज्ञाननिद्राक्षयंकुरुत ॥

प्राप्यवरान्निबोधत ॥

वराञ्छ्रेष्ठानाचार्यानुपगम्यात्मतत्त्वंनिबोधत । यद्वा उपासिताद्भगतोब्रह्मविद्योवा । देवतापारमार्थ्यंचयथावद्वेत्स्यते भवानित्येवंरूपान् वरान् प्राप्य ज्ञेयमात्मतत्त्वंनिबोधत । नोदासितव्यमितिभावः ॥

क्षुरस्यधारानिशितादुरत्यया दुर्गं पथस्तत्कवयोवदन्ति ॥

ज्ञानिनस्तदात्मतत्त्वंदुर्गमंपंथानं वर्णयन्ति । तत्कस्य हेतोःयत आत्मतत्त्वंक्षुरस्यायुधविशेषस्य धाराअग्रंनिशिता तीक्ष्णादुरत्यया नातिक्रमणीया । तीक्ष्णे क्षुराग्रे संचरतः पुंसोयथाकियत्यप्यनवधाने आत्मनाशोभवति एवमात्मस्वरूपावगतिदशायांस्वल्पेप्यनवधानेऽपराधेआत्मनाशोभवतीतिभावः ॥ उपसंहरति ॥

अशब्दमस्पर्शमरूपमव्ययं तथारसंनित्यमगंधवच्चयत् ॥

अत्र नित्यमित्येतदशब्दमित्यादौ प्रत्येकमभिसंबंध्यते । अशब्दत्वादिवशादेव कालवदव्ययम् अवयवापचयशून्यमित्यर्थः ॥

अनाद्यनन्तं महतः परंध्रुवंनिचाय्यतंमृत्युमुखात्प्रमुच्यते ॥

महतइत्यनेनात्मनि महतिनियच्छेदितिपूर्वमंत्रनिर्दिष्टो जीवो गृह्यते । ध्रुवंस्थिरंनिचाय्य दृष्ट्वा दर्शनसमानाकारोपासनेनवशीकृत्ये त्यर्थः । मृत्युमुखादतिभीषणात्संसारादित्यर्थः ॥ उपसंहरति ॥

**परांचि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्य तिनान्तरात्मन् ॥**

परानंचंतीति परांचि, खानींद्रियाणि, परप्रकाशकान्येव नात्मप्रकाशकानि कुतइत्यत्राह ॥ व्यतृणत्स्वयंभूः–परमात्मा इमानींन्द्रियाणि हिंसितवान् । "उतृदिर्हिंसायाम्" इति हिधातुः । तस्मात्पराङ्पश्यति तस्मादेव हेतोः प्रत्यंचं द्रष्टुमसमर्थानि संति पराङ्पराचःपदार्थान्पश्यंतीत्यर्थः॥ईदृशेपिलोकस्वभावे नद्याः प्रति-स्रोतःप्रवृत्तइव कश्चित्पुरुषधौरेयः प्रत्यगात्मप्रवणोप्यस्तीत्याह ॥

**कश्चिद्धीरःप्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमि-च्छन् ॥**

चक्षुरशब्दः इंद्रियमात्रपरः ।स्वस्वविषयव्यावृत्तेन्द्रियः कश्चिन्मु-मुक्षुः धीशाली प्रत्यगात्मानंपरिशुद्धेन मनसासाक्षात्करोतीत्यर्थः ॥

**पराचःकामाननुयन्ति बालास्तेमृत्योर्यंति वितत-स्य पाशम् ॥**

अज्ञास्त्वात्मव्यतिरिक्तशब्दादिविषयानवगच्छंतः संसारपाशं-विस्तृतंप्रतिपद्यन्तइत्यर्थः ॥

**याप्राणेन संभवत्यदितिर्देवतामयी । गुहांप्रविश्य-तिष्ठन्तीयाभूतेभिर्व्यजायत ॥**

---

१ तैलधारावदविच्छिन्नस्मृतिसंतानरूपा ध्रुवास्मृतिर्ध्यानशब्दवाच्याभवति,सैवभावना प्रकर्षवशात् "वृक्षेवृक्षेचपश्यामिचीरकृष्णाजिनांबरम्" इतिवद्दर्शनसमानाकाराचभवतीति चस्पष्टं श्रीभाष्यश्रुतप्रकाशिकयोर्लघुसिद्धांतशेषे ॥

कर्मफलान्यत्तीत्यदितिर्जीवउच्यते।प्राणेन संभवति प्राणेन सहवर्तते । देवतामयीइंद्रियाधीनभोगा गुहां प्रविश्यतिष्ठंती हृदयपुण्डरीककुहरवर्तिनी भूतेभिःपृथिव्यादिभूतैः सह व्यजायत देवादिरूपेण विविधासत्यजायतेत्यर्थः ॥

## एतद्वैतत् ॥

एतन्मंत्रप्रतिपाद्यजीवस्वरूपं तत् ।तदात्मकंब्रह्मात्मकमित्यर्थः । अत्रैव प्रकरणे ब्रह्मजज्ञंदेवमीजंविदित्वेत्यत्र देवमित्यस्यदेवात्मकंपरमात्मकमितिव्याख्यातत्वात् । क्षेत्रज्ञंचापि मांविद्धीत्येतदुपबृंहणेगीतावचनेपि मांमदात्मकमितिभाषितत्वाच्चैवमेवार्थः ॥ ननु सर्वेषांब्रह्मात्मकत्वंनसंभवति । अहमित्यहंताश्रयतयानुसन्धीयमानोह्यात्मा सचाहमिहैवास्मीतिदेशांतरव्यावृत्ततयानुसन्धीयते ॥ अतो ब्रह्मणः कथंसर्वदेशकालवर्तिपदार्थात्मभूतत्वमित्याशंक्याह ॥

## यदेवेह तदमुत्रयदमुत्र तदन्विह ॥

यदेव परमात्मतत्त्वमत्र लोकेऽनुसन्धीयमानतयात्मभूतं तदेवलोकान्तरवर्तिनामप्यात्मभूतमित्यर्थः । ततश्चात्मभेदोनास्तीत्यर्थः । अयमभिप्रायः । किंपरमात्मतत्त्वविदामहमिहैवेतिप्रतीतिःसर्वदेशवर्तिपदार्थात्मत्वबाधकतयोपन्यस्यते उततद्रहितानाम् । नाद्यः। तेषामहमिहेत्यादिप्रतीतेरेवाभावात् । प्रत्युताहंमनुरभवंसूर्यश्चेत्येव प्रतीतेःसत्त्वात्।नाद्वितीयः । अतद्विदामहं प्रतीतेर्जीवमात्रविषयत्वेनतत्र परिच्छिन्नत्वप्रतीतेःपरमात्मविभुत्वबाधकत्वाभावादिति ॥

## मृत्योः समृत्युमाप्नोति यइह नानेवपश्यति ॥

यइह परमात्मनि भेदमिवपश्यति संसारात्संसारांतरंप्राप्नोतीत्यर्थः ॥ नन्वस्माकं परमात्मतत्त्वंकुतोनोपलभ्यत इत्यत्राह ॥

---

१ "अतोभिसऐस्" "बहुलंछन्दसि" । ७ । १ । ९–१० । इत्यैसभावोबोध्यः ॥

मनसैवेदमाप्तव्यं,

इदंपरमात्मस्वरूपम् । परिशुद्धमनोग्राह्यमित्यर्थः ॥ उक्तमेवार्थ-दृढीकरणायपुनरभ्यस्यति ॥

नेहनानास्ति किंचन॥ मृत्योः समृत्युमाप्नोति यइ-हनानेवपश्यति ॥

उक्तोर्थः ॥

अंगुष्ठमात्रः पुरुषोमध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्यनततो विजुगुप्सते ॥

कालत्रयवर्तिनिखिलचेतनाचेतनेश्वरः पुरुष उपासकशरीरम-ध्येअंगुष्ठपरिमाणः सन्नास्ते । ततस्तस्मादेव निखिलेश्वरत्वहेतोरेव वात्सल्यातिशयात् कष्टभूतदेहांतरावस्थानान्नहिविजुगुप्सते । वात्स-ल्यवशेन भोग्यमेवपश्यतीत्यर्थः ॥

एतद्वैतत् ॥

एतन्मंत्रप्रतिपाद्यमपिपूर्वोक्तपरमात्मस्वरूपमेवेत्यर्थः ॥

अंगुष्ठमात्रः पुरुषोज्योतिरिवाधूमकः ॥

शुष्केन्धनानलवत्प्रकाशमानइत्यर्थः ॥

ईशानोभूतभव्यस्यसएवाद्य सउश्वः ॥

अद्यतनपदार्थजातं श्वस्तनपदार्थजातं कालत्रयपदार्थजातं सएवेत्यर्थः ॥

यथोदकं दुर्गेवृष्टं पर्वतेषु विधावति ॥

यथापर्वतमूर्द्धनि वृष्टं प्रत्यन्तपर्वतेषु नानाभूततयापतित्वापति-त्वा धावति ॥

एवं धर्मान्पृथक्‌ पश्यन्तानेवानुविधावति ॥

एवं परमात्मगतदेवमनुष्यान्तर्यामित्वादिधर्मान्पृथगधिकरणनिष्ठान्पश्यन्पर्वतनिर्झरपातमनुकृत्य संसारकुहरेपततीत्यर्थः ॥ अथ सर्वत्रैकात्म्यज्ञानस्य फलमाह ॥

**यथोदकंशुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्माभवति गौतम ॥**

यथा शुद्धे शुभ्रं जलं प्रक्षिप्तं तत्सदृशमेव भवति, नतुकिंचिदपि वैसादृश्यमेवं मननिदिध्यासनशीलस्यात्मापि परमात्मसदृशएवेत्यर्थः । गौतमेतिसहर्षसंबोधनम् ॥

**यएषु सुप्तेषु जागर्ति कामंकामंपुरुषोनिर्मिमाणः ॥**

सर्वेषु जीवेषु निद्रां गतेषु । कामंकाममितिणमुलन्तम् । संकल्प्यसंकल्प्येत्यर्थः । स्वच्छन्दानुरोधेन पुरुषोनिर्मातायोस्ति ॥

**तदेवशुक्रंतद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वेतदुनात्येतिकश्चन ॥**

शुक्रं प्रकाशकम् । तदेवनिरूपाधिकममृतमित्यर्थः । नित्यमुक्तानाममृतान्तराणांसत्त्वेपि निरूपाधिकामृतत्वाभावात्तदेवेत्यवधारणस्यनानुपपत्तिरितिध्येयम् । एतेनामृतान्तरनिषेधान्मुक्तपरमात्मनोरभेदइतिशंकाप्रत्युक्ता ॥

**एकोवशी सर्वभूतान्तरात्मा एकं बीजं बहुधा यः करोति । तमात्मस्थं येनुपश्यंति धीरास्तेषां सुखं शाश्वतंनेतरेषाम् ॥**

तमःपरे देवे एकीभवतीतिस्वात्मन्यविभक्ततमस्त्वावस्थामापन्नमव्यक्ताख्यं बीजमित्यर्थः । आत्मस्थम् आत्मन्यंतर्यामितयास्थितमित्यर्थः । शिष्टंस्पष्टम् ॥

नित्योनित्यानां चेतनश्चेतनानामेकोबहूनांयोवि-
दधातिकामान् ॥

एकोनित्यश्चेतनः सन् बहूनांनित्यानां चेतनानां कामान्विदधाती त्यर्थः। नित्यानांमध्येनित्यः चेतनानांमध्येचेतन इतिराजराजादि-शब्दवदत्यंतनित्यत्वचेतनत्वप्रतिपादनेपि नानुपपत्तिः। "तमात्म-स्थम्" इत्यादिस्पष्टम् ॥

न तत्रसूर्योभाति नचंद्रतारकं नेमाविद्युतोभांतिकु-
तोयमग्निः ॥

सर्वतेजसांछादकमित्यर्थः ॥

तमेवभांतमनुभातिसर्वं,

अनुभानंपश्चाद्भानम्। तेनकार्यकारणभावः सिद्धः। पौर्वापर्य-नियमोहि कार्यकारणभावः। सर्वतेजसांकारणमित्युक्तंभवति ॥

तस्य भासा सर्वमिदंविभाति ॥

चाक्षुषरश्म्यनुग्राहकचंद्रातपादित्यवदुत्पन्नस्यापि तेजसः स्व-संबन्धेनस्वकार्यकारणसामर्थ्यापादकत्वलक्षणानुग्राहकत्वशालीत्य-र्थः। अत्रचवक्तव्यंकठवल्लीप्रकाशिकायामुक्तं ततोवगन्तव्यम् ॥

यदिदंकिंचजगत्सर्वंप्राणएजतिनिस्सृतम्। महद्भयं-
वज्रमुद्यतंयएनंवि (तद्वि) दुरमृतास्तेभवन्ति ॥

अस्मिन्नंगुष्ठमात्रे पुरुषे प्राणशब्दनिर्दिष्टेस्थितानां सर्वेषांततो-निस्सृतानां तस्मात्संजातमहाभयनिमित्तमेजनंकंपनंश्रूयते। तच्छा-सनातिवृत्तौकिंभविष्यतीतिमहतोभयाद्वज्रादिवोद्यतात्कृत्स्नं जग-त्कंपतइत्यर्थः। भयादस्याग्निस्तपतीत्यादिनैकार्थ्यान्महद्भयंवज्रमु-द्यतमितिपंचम्यर्थेप्रथमेतिभाषितम्। तच्चव्यासार्यैर्विवृतम्। प्राण इतिसप्तम्यंतपदसामर्थ्यात् स्थितानामित्यध्याहारः। कुतोनिस्सृता-

नामित्यपेक्षायां प्रकृतस्यैवोपादानत्वमाह। ततइति । एजनंकंपनम्। "एजृकंपने" इतिहिधातुः । प्रत्यवायभयात्स्वस्वकार्यप्रवृत्तिः कंपनम् । उद्यतवज्रादिवपरमपुरुषात्संजातेनभयेनकृत्स्नंजगत्कंपतइत्यर्थः । अत्रमहद्भयं वज्रमुद्यतमितिचत्वारिपदानिपंचम्यर्थेप्रथमांतानि । तत्राद्यंपंचम्यर्थप्रथमांतपदद्वयंभयवाचि, उत्तरंतुपदद्वयमुद्यद्वज्रसदृशब्रह्मपरमितिद्रष्टव्यम् ॥ वशीकार्यपरंपराविश्रांतिभूमितयाप्राङ्निर्दिष्टमेव परमात्मानंस्मारयति ॥

इन्द्रियेभ्यः परंमनोमनसः सत्त्वमुत्तमम् ॥

इंद्रियेभ्योमनः परमित्यर्थः॥ इंद्रियेभ्यः पराह्यर्था अर्थेभ्यश्चपरंमनइत्यनेनैकार्थ्यात् । सत्त्वशब्दश्चतत्कार्यबुद्धिलक्षकः । मनसस्तुपराबुद्धिरित्यनेनैकार्थ्यात् ॥

सत्त्वादधिमहानात्मामहतोव्यक्तमुत्तमम् । अव्यक्तान्तुपरः पुरुषोव्यापकोलिंगएवच ॥

अलिङ्गः लिङ्गागम्यः। पुरषोवशीकार्येषु परः। तस्यच वशीकरणंतच्छरणागतिरेवेत्ययमर्थः पूर्वमुक्तएवानेनस्मारितोभवति ॥

नसंदृशे तिष्ठतिरूपमस्य नचक्षुषा पश्यति कश्चनैनम् ॥

अस्य स्वरूपंविग्रहोवा व्यापकत्वादेवसंदर्शनविषये मूर्तत्वेनाभिमुखतयानतिष्ठतीत्यर्थः । अतएवचक्षुषा कोपिद्रष्टुंनेष्टे ॥

हृदा मनीषा मनसाभिक्लृप्तः ॥

अयंमंत्र खण्डः व्यासार्यैः "सर्वत्रप्रसिद्धोपदेशात् ।१।२।३॥" इत्यधिकरणेहृदेतिभक्तिरुच्यते ।मनीषेतिधृतिः।नसंदृशेतिष्ठतिरूपमस्य न चक्षुषा पश्यतिकश्चनैनमिति पूर्वार्द्धमेकरूपंपठित्वा भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं परिपश्यतीहेति महाभा-

रतोक्तेः। अभिक्तृतःग्राह्यइत्यर्थः" इति विवृतः। धृत्यासमाहितात्मा-भक्त्यापुरुषोत्तमंपश्यतिसाक्षात्करोति—प्राप्नोतीत्यर्थः । भक्त्या-त्वनन्ययाशक्यइत्यनेनैकार्थ्यादितिवेदार्थसंग्रहेप्रतिपादितम् ॥

यएनंविदुरमृतास्तेभवंति ॥

स्पष्टोर्थः ॥

यदापंचावतिष्ठन्तेज्ञानानिमनसासह ॥

ज्ञायतेनेनेतिव्युत्पत्त्याज्ञानानीन्द्रियाणीत्यर्थः । "सप्तगतेर्विशे-षितत्वाच्च। २। ४। ५।" इत्यधिकरणेव्यासार्यैर्विवृतम् ॥

बुद्धिश्चनविचेष्टेत,

अध्यवसायोपेतं मन एवबुद्धिशब्देनोच्यते। अतएव तत्रभाष्यम्। "अध्यवसायाभिमानचिन्तावृत्तिभेदान्मनएव बुद्ध्यहंकारचित्तशब्दै-र्व्यपदिश्यते" इति ॥

तामाहुः परमांगतिम्॥

शरीरांतःसंचरणं विहाय मोक्षार्थगमनंपरमागतिरितितत्रैव स्पष्टम् ॥

तांयोग इतिमन्यंते स्थिरामिंद्रियधारणाम् ॥

पूर्वमंत्रनिर्दिष्टां बाह्यांतःकरणधारणां परमां गतिं परमव्योम गतिं मन्यन्ते। उक्तंच व्यासार्यैः परमा गतिर्योगइति ॥

यदासर्वे प्रमुच्यंते कामायेस्य हृदिस्थिताः। अथ मर्त्योऽमृतोभवत्यत्र ब्रह्मसमश्नुते ॥

कामाः शब्दादिविषयमनोरथाः हृदि गता यदाशाम्यंते तदुत्त-रक्षण एवायमुपासकः पुमानविश्लिष्टाश्लिष्टपूर्वोत्तरदुरितोभवति। अत्रोपासनवेलायामेव ब्रह्माश्नुते। ब्रह्म अविक्षिप्तेन मनसानुभवती-त्यर्थः। "इदंच समानाचासृत्युपक्रमात्०। ४। २। ७।" इतिभाष्ये

स्पष्टम् ॥ उक्तमेवार्थमादरेणाभ्यसन्नुपदेष्टव्यांश एतावानेवेत्युप संहरति ॥

यदा सर्वेप्रमुच्यंतेहृदयस्यैव ( स्येह ) ग्रंथयः । अथमर्त्योमृतोभवत्येतावदनुशासनम् ॥

ग्रंथय इव दुर्मोचा रागद्वेषादयो यदैव प्रमुच्यन्त इत्यर्थः । एतावदनुशासनमनुशासनीयम् । उपासकस्य कर्तव्यत्वेनसमुपदेष्टव्यमेतावदेवेत्यर्थः ॥ विमुक्तश्च विमुच्यत इति पूर्वमुक्तांद्वितीयां परममुक्तिमाह ॥

शतंचैकाच हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिस्सृतैका ॥

हृदयस्य प्रधाननाड्यः शतंचैकाच सन्ति । तासां मध्ये एका सुषुम्नाख्या ब्रह्मनाडी मूर्धानमभिनिस्सृता ॥

तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवंति ॥

तयोर्ध्वनाड्योर्ध्वंब्रह्मलोकं गच्छन्देशविशेषविशिष्टब्रह्मप्राप्तिपूर्वक स्वरूपाविर्भावलक्षणं मुक्तिं प्राप्नोति । अन्यास्तु नाड्योविष्वगुत्क्रमणे नानाविधसंसारमार्गोत्क्रमणायोपयुज्यंते । विष्वग् विततानाड्यः अन्योत्क्रमण उपयुज्यंत इति व्यासार्यैर्व्याख्यातम् ॥

अंगुष्ठमात्रः पुरुषोंतरात्मा सदा जनानां हृदये सन्निविष्टः ॥

स्पष्टोर्थः ॥

तंस्वाच्छरीरात्प्रवृहेन्मुंजादिवेषीकां धैर्येण ॥

सकलचेतनाचेतनांतर्यामितया संतमात्मानं तच्छरीरिणं चेतनाचेतनलक्षणाच्छरीरा ( तच्छरीरभूताज्जनशब्दिताच्चेतना ) त्प्रवृहे-

त्पृथक्कुर्यात्पृथगात्मानमित्युक्तरीत्याधारकत्वनियंतृत्वशेषित्वधर्मैर्वि लक्षणं धैर्येण प्रज्ञाकौशलेनजानीयात् ॥

तं विद्याच्छुक्रममृतं,

शुक्रं तेजिष्ठं स्वप्रकाशज्ञानरूपं ब्रह्म जानीयादित्यर्थः। देवदत्तः स्वाच्छरीराद्विलक्षण इत्यत्र स्वशब्दस्यदेवदत्तसंबंधिपरत्ववादिहापिस्वाच्छरीरादितिस्वशब्दः परमात्मसंबंधिशरीरपरामर्शी। न वेदितृजनसंबंधिपरामर्शी। एतेन देहात्पृथक्करणस्य देहैक्यभ्रमविषये जीवएव संभवात्तस्यैव तं विद्याच्छुक्रममृतमिति ब्रह्मत्वोपदेशादिदंप्रकरणं जीवब्रह्माभेदपरमितिशंकायाअनवकाशः ॥

अंतरउपपत्तेः १। २। १३।

छांदोग्ये चतुर्थाध्यायेदशमखण्डोपक्रमे ॥

उपकोसलोह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास ॥

कमलसुत उपकोश ( स ) लनामा पूर्वोक्तजाबाले सत्यकामे विद्यार्थं ब्रह्मचर्यमवात्सीत् ॥

तस्यह द्वादशवर्षाण्यग्नीन्परिचचार ॥

तदग्निशुश्रूषां द्वादशवर्षाणि कृतवान् ॥

सहस्माऽन्यानंतेवासिनः समावर्तयंस्तं ह स्मैव नसमावर्तयति ॥

स्वाध्यायार्थिन इतरान्ब्रह्मचारिणः स्वाध्यायंग्राहयित्वा समावर्तयन्। तं ब्रह्मविद्यार्थिनं ज्ञात्वाचिरसेवामंतरेण ब्रह्मविद्यानोपदेष्टव्येतिमत्वा तमेव न समावर्तयतिस्म ॥

तंजायोवाच तप्तोब्रह्मचारी कुशलमग्नीन्पर्यचारीन्मात्वाग्नयःपरिप्रावोचन् प्रब्रूह्यस्मा इति ॥

तपसा तप्तः ब्रह्मचारी सम्यगग्निशुश्रूषां कृतवान् एतस्यविद्या-नुपदेशेतत्परिचरणप्रीता अग्नय एव तदनुग्रहं कुर्युरिति तस्मा उपकोशलाय विद्यामुपदिशेति तस्य भार्योक्तवतीत्यर्थः ॥

तस्मैहाप्रोच्यैवप्रवासांचक्रे ॥

तस्य विद्यामनुपदिश्यैव देशांतरंप्रोषितः ॥

सहव्याधिना अनशितुंदध्रे ॥

स मानसेन दुःखेन पीडितः सन् अनशनाय मतिंचक्रे। धृङ् अव-स्थाने इतिधातुः ॥

तमाचार्यजायोवाच ब्रह्मचारिन्नशानकिंनुनाश्ना-सीति ॥

स्पष्टोर्थः ॥

सहोवाच बहव इमेऽस्मिन्पुरुषेकामाः नानात्ययाव्या धिभिः परिपूर्णोऽस्मिनाशिष्यामीति ॥

अस्मिन् जीवे ब्रह्मप्राप्तिव्यतिरिक्ताः काम्यमाना विषया नानाविध गर्भजन्मजरामरणादिलक्षणफलजनकाः मनसि परिवर्तमानाःसन्ति। अतस्तद्विषयभयरूपव्याधिभिः पूर्णोस्मि अतोनभुंजेइति ॥

अथहाग्नयःसमुदिरे ॥

एतद्वाक्यंश्रुत्वा परिचरणप्रीता गार्हपत्यादयोग्नयोदयमानमा-नसाः संभूयोक्तवंतः ॥

तप्तोब्रह्मचारी कुशलं नः पर्यचारीद्धंतास्मै प्रब्रवा-मेति ॥

स्पष्टोर्थः ॥

तस्मैहोचुः ॥

तस्मै उपकोशलाय अग्नयोवक्ष्यमाणमूचुरित्यर्थः ॥

प्राणोब्रह्म कंब्रह्म खंब्रह्मेति ।सहोवाच विजानाम्यहं यत्प्राणोब्रह्म कंच खंच तुनविजानामीति ॥

अस्यायमभिप्रायः॥नतावत्प्राणादिप्रतीकोपासनमग्निभिरभिधीयते । जन्मजरामरणादि भवभयभीतस्य मुमुक्षोर्ममोक्षोपदेशाय प्रवृत्तत्वात् । अतोब्रह्मैवोपास्यमुपदिष्टम् । तत्र प्राणादिभिः समानाधिकरणं ब्रह्म निर्दिष्टं तत्र सकलजगत्प्राणपितृत्वयोगेन प्राणशब्दितत्वस्य ब्रह्मण्युपपन्नत्वात्प्राणो ब्रह्मेत्युक्तम् । तज्जानामि कं ब्रह्म खंब्रह्मेत्युक्तंच नविजानामि । यद्यपि कंशब्दस्य सुखमर्थः खमित्यस्यचाकाशोर्थःततश्च वैषयिकसुखशरीरकमाकाशशरीरकंच ब्रह्मेत्यभिप्रायः । उत कमित्यनेन सुखमभिधीयते खमित्यनेनाकाशवाचिनाऽपरिच्छिन्नत्वमभिधीयते । तयोरन्योन्यविशेष्यविशेषणभावेनापरिच्छिन्नसुखं ब्रह्मेत्यर्थोलभ्यते । ततश्चानयोर्मध्येकार्थे तात्पर्यमिति नजाने इत्यर्थः ॥

तेहोचुः यद्वावकं तदेवखं यदेवखं तदेवकमिति ॥

ते तदभिप्रायज्ञा आग्नयो कंखमित्यनयोरन्योन्यविशेषणविशेष्यभाव एवाभिमत इत्यूचुः इत्यर्थः । ननु पुनरुक्तिर्व्यर्थेतिचेत् । एतद्दार्ढ्यार्थंवाऽपरिच्छिन्नसुखत्वेन सुखरूपापरिच्छिन्नत्वेनचोपासनासिद्ध्यर्थंवा परस्परविशेषणविशेष्यभावोपदेशसार्थक्या ॥

तत्प्राणंचहास्मै तदाकाशंचोचुः ॥

अतोजगत्प्राणपितृत्वेन प्राणत्वविशिष्टं यद्ब्रह्म तदेवापरिच्छिन्नसुखरूपंचेत्यग्नय उक्तवंत इत्यर्थः ॥

अथहैनंगार्हपत्योनुशशास ॥

जगत्प्राणपितृत्वेनापरिच्छिन्नसुखरूपंच ब्रह्मेत्युपदिश्यैवमुपदिष्ट ब्रह्मविद्यमेनमुपकोशलं गार्हपत्योग्निः स्वविद्यांवक्ष्यमाणामुपदिदेशेत्यर्थः । अथ शब्दश्च प्रकृतविषयत्वद्योतनार्थः । अत्रचाथहैनमितिशब्दाभ्यां वक्ष्यमाणाग्निविद्यायाःप्रकृतब्रह्मविद्यांगत्वमुपदिश्यते। अनुशासनप्रकारमेवाह ॥

पृथिव्यग्निरन्नमादित्यइति ॥

गार्हपत्याग्नेर्मेएताश्चतस्रस्तनवइत्यर्थः ॥

यएषआदित्ये पुरुषोदृश्यते सोहमस्मि सएवाहमस्मीति ॥

पृथिव्यग्न्यन्नादित्यलक्षणानां चतुर्णां रूपाणां मध्येऽग्न्यादित्यरूपयोर्वक्तृत्वप्रकाशकत्वरूपधर्मसंबन्धादैक्यमग्नेरादित्येन यादृशमैक्यं नतादृशं पृथिव्यन्नाभ्याम्। तस्मादादित्य एवाहमस्मीत्यग्निरुवाचेत्यर्थः ॥

यएतमेवंविद्वानुपास्ते अपहते पापकृत्याम् ॥

ब्रह्मप्राप्तिविरोधिपापंकर्मापहंति ॥

लोकीभवति ॥

तद्विरोधिनि पापेनिरस्ते ब्रह्मलोकंप्राप्नोतीत्यर्थः । यद्यपि ब्रह्मप्राप्तिविरोधिपापनिवृत्तेर्ब्रह्मप्राप्तेश्च प्रधानभूतब्रह्मविद्याफलत्वमेव तथाप्यंगिफलेनांगस्तूयते इतिद्रष्टव्यम् । यद्वा पापशब्दोब्रह्मविद्योत्पत्तिप्रतिबंधकपापपरः । लोकशब्दश्च ब्रह्मलोकप्राप्तिमार्गभूताग्निलोकपरोद्रष्टव्यः॥

सर्वमायुरेति ॥

ब्रह्मोपासनप्राप्त्यैयावदायुरपेक्षितं तत्सर्वमेति ॥

ज्योग्जीवति ॥

व्याध्यादिभिरनुपहतोयावद्ब्रह्मप्राप्तिरुज्ज्वलोजीवति ॥

नास्यावराः पुरुषाःक्षीयंते ॥

अस्य शिष्यप्रशिष्यादयः पुत्रपौत्रादयोपि ब्रह्मविदएवभवंति। सन्ततौब्रह्मविद्यानुवर्तते नास्याब्रह्मवित्कुलेभवतीतिश्रुत्यंतरे ब्रह्मविद्याफलत्वेन श्रवणात् ॥

उपवयंतंभुंजामोस्मिꣳश्चलोकेऽमुष्मिꣳश्च ॥

यएतमेवंविद्वानुपास्तेऽस्मिंश्चलोकेऽमुष्मिंश्चवयमग्नय उपभुंजामोयावद्ब्रह्मप्राप्तिविघ्नेभ्यः परिपालयामः एवमुत्तरत्रापिद्रष्टव्यम् ॥

अथहैनमन्वाहार्यपचनोनुशशास ॥

अन्वाहार्यपचनो दक्षिणाग्निः ॥

आपोदिशो नक्षत्राणि चन्द्रमा इति य एषचन्द्रमसि पुरुषोदृश्यते। सोहमस्मि सएवाहमस्मीति। सय एतमेवं विद्वानुपास्ते। अपहते पापकृत्यांलोकीभवति सर्वमायुरेति ज्योग्जीवति नास्यावरः पुरुषाः क्षीयंते उपवयंतंभुंजामोऽस्मिंश्चलोकोमुष्मिंश्चयएतमेवंविद्वानुपास्ते ॥

चंद्रमसश्चाग्नेश्चप्रकाशकत्वसाम्यादितिभावः ॥

अथहैनमाहवनीयोनुशशास प्राण आकाशोद्यौर्विद्युदिति यएतद्विद्युति पुरुषोदृश्यते सोहमस्मि सएवाहमस्मीति स य एतमेवं विद्वानुपास्तेऽपहतः पापकृत्यां लोकीभवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्ते उपवयंतं भुंजामोऽस्मिंश्च लोकेमुष्मिंश्च यएवंविद्वानुपास्ते ॥

विद्युत्पुरुषस्यापि प्रकाशकत्वादाहवनीयैक्यं द्रष्टव्यम् ॥

**तेहोचुः उपकोशलैषा सोम्यास्मद्विद्या आत्मविद्या च इति ॥**

प्रत्येकमनुशासनानंतरं संमिलित्वा तेब्रुवन्नस्मद्विद्याग्निविद्या आत्मविद्या परमात्मविद्येत्यर्थः । चशब्दोंगांगिविद्ययोरुपदेशक्रियायां समुच्चयद्योतनार्थः । नतु समसमुच्चयार्थः । अग्निविद्याचात्मविद्याचोपदिष्टेत्यर्थः ॥

**आचार्यस्तु ते गतिं वक्तेति ॥**

एवं वदतामग्नीनामयमभिप्रायः । हेउपकोशल ब्रह्मविद्यामनुपदिश्य प्रोषिते गुरौ तदलाभादनाश्वासं त्वामुपजीवयितुं ब्रह्मस्वरूपमात्रं तदंगभूतामग्निविद्यांचोपादिक्षाम आचार्यादेवविद्याया विदितायाः साधिष्ठत्वादाचार्य्य एव संयद्वामत्वादिगुणकं ब्रह्माक्षिरूपं च तदुपासनस्थानमर्चिरादिकां गतिमुपदिशत्विति । ततश्च गतिं वक्तेत्यस्यावशिष्टंवक्तेत्यर्थः । नतु गतिमात्रमिति द्रष्टव्यम् ॥

**आजगामहास्याचार्य्यः तमाचार्योभ्युवाचोपकोशल इति भगव इति हप्रतिशुश्राव ब्रह्मविद इव सोम्यते मुखंभाति कोनुत्वानुशशासेति ॥**

स्पष्टोर्थः । एवमुक्तआह ॥

**कोनु मानुशिष्याद्भो इति ॥**

हेभगवन् त्वयि प्रोषित इहमां कोनुशिष्यादिति ॥

**अपेवनिह्नुते ॥**

अपनिह्नुतइवेत्यर्थः । नापह्नुते नच यथावदग्निभिरुक्तमित्यप्यब्रवीदित्यभिप्रायः । कंचित्कालमपह्नुत्याग्नीनिमे एवनूनमुपदिष्टवंतइत्युक्तवानित्याह ॥

**इमे नूनमीदृशा अन्यादृशा इति हाग्नीनभ्यूचे ॥**

इदानीमीदृशा ज्वलनाकारतया परिदृश्यमाना एवाग्नयः पूर्वमन्याकाराः संतो ममोपदिष्टवंत इत्युक्तवानित्यर्थः । आचार्यआह ॥

**किंनु सोम्य किल तेवोचन्निति ॥**

इतरआह ॥

**इदमितिहप्रतिजज्ञे ॥**

एतातावदुपदिष्टमिति प्रतिज्ञातवान् । इतरआह ॥

**लोकान्वावकिलसोम्यते वोचन् अहंतुतेतद्वक्ष्यामि यथा पुष्करपलाशे आपोन श्लिष्यंते एवमेवंविदि पापं कर्मनश्लिष्यते इति ॥**

हेसोम्यते अग्नयः पृथिव्यादीन् लोकानेव तवोक्तवन्तः नतुज्ञातव्यंब्रह्मकार्त्स्न्येन । अहंतु ते पद्मपत्रजलाश्लेषतुल्यसर्वपापाश्लेषापादकविद्याविषयभूतंब्रह्म वक्ष्यामि यदि शुश्रूषसे इत्यर्थः । पापाश्लेषोनाम पापहेतुभूतकर्माचरणेपि पापोत्पत्तिप्रतिबंधकशक्तिमत्त्वम् । इदंच प्रामादिकपापविषयम् । पापशब्दश्च सुकृतदुष्कृतसाधारणः । एतच्च [1]तत्र तत्रोक्तं तत्रैवानुसन्धेयम् । इतरआह ॥

**ब्रवीतु मेभगवानिति तस्मै होवाच तस्मै एवमुपपन्नायोपकोशलायाचार्योवक्ष्यमाणमुवाचेत्यर्थः । यएषोक्षिणिपुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति ॥**

योगिभिर्योक्ष्यंतर्वर्तिपुरुषोदृश्यते अयमेवात्मा नियंतेत्यर्थः ।

---

१ अस्मिन्नेव ग्रंथे अंतरधिकरणे श्रीभाष्यश्रुतप्रकाशिकयोरपि तत्रैव जिज्ञासाधिकरणेच्च वेदार्थसंग्रहतात्पर्यदीपिकयोश्चेति बोध्यम् । श्रीशंकरभाष्येपि चतुर्थे स्फुटमिदम् ।

अमृतत्वंनिरतिशयभोग्यत्वमभयत्वं दुःखासंभिन्नत्वं ब्रह्मत्वं निरतिशयबृहत्त्वम् ॥

**तद्यद्यप्यस्मिन्सर्पिर्वोदकंवा सिंचति वर्त्मएवगच्छति ॥**

तस्मान्निर्लेपस्थानप्रभावादक्षिणि यद्यपि सर्पिर्वोदकंवा कश्चित्सिंचेत् तत्पार्श्वद्वयंगच्छति न तत्रलिप्यते ॥

**एतंसंयद्वामइत्याचक्षते एतं हि सर्वाणि वामान्यभिसंयन्ति यएवं वेद ॥**

संयंति संगतानि वामानि वरणीयानि प्रार्थनीयानि यस्मिन्स संयद्वामः सर्वकल्याणगुणाश्रयत्वं सत्यसंकल्पत्वं वासंयद्वामत्वं तदुपासकस्यापि तत्क्रतुन्यायात्तद्भवतीत्यर्थः ॥

**एष उ एव वामनीरेषहिसर्वाणि वामानि नयति यएवंवेद ॥**

वामनीत्वं स्वाश्रितेषु शोभनप्रापकत्वं तत्क्रतुन्यायेन तद्गुणोपासकस्यापि तद्भवतीत्यर्थः ॥

**एष उ एव भामनीरेषहि सर्वेषु लोकेषु भातियएवंवेद ॥**

भामनीत्वं सर्वलोकव्याप्तदीप्तिमद्विग्रहयुक्तत्वम् । उपासकस्यापि तद्भवत्यपेक्षायां सत्यामित्यर्थः । अत्र संयद्वामत्ववामनीत्वभामनीत्वेषु फलत्वकथनं फलरूपतात्पर्यलिंगोपन्यासेन तेषु गुणेषु तात्पर्यप्रदर्शनार्थम् । नतु सर्पिर्वोदकंवासिंचतीत्यत्रैवार्थवादमात्रतयास्तुतिरूपत्वमितिप्रदर्शनार्थम् । सर्पिर्वेतिवाक्यस्य स्तुतिपरत्वं व्यासार्यैरुक्तम् ॥

अथ यदु चैवास्मिन् शव्यं कुर्वंति यदु च नार्चिषमेवाभिसंभवंति ॥

अथ शब्दः प्रकृतविषयत्वद्योतनार्थः । अस्मिन् ब्रह्मविदि सामान्याभिप्रायत्वात्तदेकवचनस्योत्तरत्राभिसंभवंतीति बहुवचनेन न विरोधः ।यद्यदि शव्यं शवदहनादिकर्म पुत्रादयः कुर्वन्ति यदिवा न तेऽर्चिषमभिसंभवंति । अर्चिरादिशब्दाश्च "आतिवाहिकास्तल्लिंगात् । ४ । ३ । ४ ॥" इतिन्यायेन तदभिमानिदेवतापराइत्यन्यत्र[1]स्थितम् । अत्रकेचित् । उपकोशलविद्यांगभूताग्निविद्यावैभवेन शवदहनादिवैगुण्येप्युपकोशलविद्यानिष्ठस्य न क्षतिः । विद्यान्तरनिष्ठस्य दहनादिवैगुण्ये किंचिद्वैगुण्यमस्तीतिवदन्ति । तन्न । नकर्मणा लिप्यते नोकनीयानित्यादिश्रुतिसिद्धार्थानुवादित्वादस्यवाक्यस्य तादृशार्थप्रत्यायकत्वाभावात् । अतोऽथयदुचैवास्मिन्नित्येतत्सर्वंब्रह्मवित्साधारणमेव ॥

अर्चिषोहरन्ह आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चंद्रमसं चंद्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्मगमयति । एषुदेवयथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमंमानवमावर्तं नावर्तन्ते॥

यान् षण्मासान् उदङ्ङादित्यएति तान्मासानित्यर्थः । देवपथः देवैरातिवाहकैर्नीयमानः पंथा देवपथः ब्रह्मप्रापकः पंथाः ब्रह्मपथः एतेन मार्गेण प्रतिपद्यमाना इमंघोरं घटीयंत्रवज्जननमरणाद्यावर्तकं मनुष्यादिशरीरोपलक्षितं संसारं पुनर्न प्रतिपद्यंते ॥

१ तत्रैवसूत्रेश्रीभाष्यादावित्यर्थः ।

अन्तर्याम्यधिदैवाधिलोकादिषुतद्धर्मव्यपदेशा-
त् । १ । २ । १९ ॥

बृहदारण्यके पंचमाध्याये सप्तमब्राह्मणे ॥

अथ हैनमुद्दालकः आरुणिः पप्रच्छ ॥

नाम्नोद्दालकः । अरुणस्यापत्यमारुणिः ॥

याज्ञवल्क्येति होवाच मद्रेष्ववसाम पतंजलस्य काप्यस्य गृहेषु यज्ञमधीयानाः ॥

मद्रेषु देशेषु गोत्रतः काप्यस्य नाम्ना पतंजलस्य गृहेषु "गृहाः पुंसिचभूम्न्येव" इत्येकस्मिन्बहुवचनम् । कल्पसूत्रमधी यानाउषितवंतः ॥

तस्यासीद्भार्या गन्धर्वगृहीता तमपृच्छाम कोसीति सोब्रवीत्कबन्ध आथर्वण इति ॥

नाम्ना कबन्धः अथर्वपुत्रश्च इतरत्स्पष्टम् ॥

सोब्रवीत्पतंजलं काप्यं याज्ञिकांश्च ॥

सगन्धर्वः याज्ञिकान् यज्ञाध्येतॄन् अस्मांश्चाध्यापकं काप्यंचा-ब्रवीदित्यर्थः । तदेवाह ॥

वेत्थनु त्वं काप्य तत्सूत्रं येनायं च लोकः परश्च लोकः सर्वाणि भूतानि संदब्धानिभवन्तीति ॥

सूत्रेण पुष्पाणीव ग्रंथनेन विष्टब्धानीत्यर्थः । एतादृशं सूत्रं त्वंवेत्थ किमितिप्रश्नः ॥

सोब्रवीत्पतंजलः काप्यः नाहं तत्सूत्रं भगवन् वेदेति ॥

एवं सूत्रंपृष्ट्वा अन्तर्यामिणं पप्रच्छेत्याह ॥

सोब्रवीत्पतंजलं याज्ञिकांश्च वेत्थनुत्वंकाप्य तमंतर्यामिणं यइमं च लोकं परंचलोकं सर्वाणिच भूतानि योन्तरोयमयतीति।सोब्रवीत्पतंजलः काप्यः नाहं भगवन् वेदेति । सोब्रवीत्पतंजलं काप्यं याज्ञिकांश्च योवै तत्काप्य सूत्रं विद्यात्तंचांतर्यामिणमिति ॥

इतिशब्दः प्रकारवचनः । हेकाप्य तत्सूत्रं तम् ॥

चांतर्यामिणमस्मदवगतप्रकारेण योविद्यादित्यर्थः॥

शिष्टंस्पष्टम् ॥

सब्रह्मवित्सलोकवित्सदेववित्सवेदवित्स भूतवित्स-आत्मवित्ससर्वविदितितेभ्योब्रवीत्॥

सपरब्रह्मवित्तन्नियाम्यलोकदेवभूतवित्सपरमात्मवित्ससर्वविदिति एवंतेभ्यः काप्ययाज्ञिकेभ्यः गंधर्वोब्रवीदित्यर्थः ॥

तदहंवेद ॥

तत्सर्वमहंजानेइत्यर्थः ॥

तच्चेवंयाज्ञवल्क्य सूत्रमविद्वान् तंचांतर्यामिणं ब्रह्मगवीरुदजसे मूर्द्धातेविपतिष्यतीति ॥

ब्रह्मगवीब्रह्मविद्यापणबंधभूतागाः । गोरतद्धितलुकि । ५।४।९२। इति टचि समासांते टिड्ढाणञ् । ४ । १ । १५ । इत्यादिना ङीप् उदजसे चेत्कलयसेचेत् तेमूर्धा व्यपतिष्यतीति शशापतम् ॥

वेदवा अहंगौतमतत्सूत्रंतंचांतर्यामिणमिति ॥

याज्ञवल्क्यस्यप्रतिवचनम् । हेगौतम तत्सूत्रं तंचांतर्यामिणमहं वेदवेदैवेत्यर्थः । एवमुक्तउद्दालक उवाच ॥

योवाइदंकश्चिदब्रूयाद्वेदवेदेति ॥

यःकश्चिद्वै सर्वज्ञडंभः इदं वेद इदं वेदेति वाचा ब्रूयादित्यर्थः ।

यथावेत्थ तथा ब्रूहीति ॥

यथा येन प्रकारेण वेत्थ तेन प्रकारेण ब्रूहि किं वचनेनेत्यर्थः ॥

सहोवाच वायुर्वैगौतम तत्सूत्रं वायुना वैगोतम सूत्रेण अयंच लोकः परश्च लोकः सर्वाणि भूतानि संदृब्धानि भवंति तस्माद्वै गौतम पुरुषंप्रेतमाहुः व्यसुंव्यस्त्रंसिषतास्यांगानीति वायुनाहि गौतम सूत्रेण संदृब्धानि भवंतीति ॥

यस्मात्सर्वाणि वायुना ग्रथितानि तस्मादेव हेतोरुत्क्रांतप्राणस्य पुरुषस्यांगानि उत्सूत्रमाल्यानीव विस्रस्तानि भवन्ति । अतोवायुना संदृब्धानि । व्यस्त्रंसिषत लुङ् अंगीकरोति ॥

एवमेवैतद्याज्ञवल्क्येति ॥

भवत्वेतदेवमितरद्‌ब्रूहीत्याह ॥

अंतर्यामिणं ब्रूहीति यः पृथिव्यांतिष्ठन्पृथिव्या अंतरोयंपृथिवी न वेद यस्य पृथिवी शरीरं यःपृथिवीमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥

पृथिव्यां स्थितस्तदंतर्गतस्तदवेद्यः । तच्छरीरकः सन् योंतःप्रविश्य प्रवृत्तिनिवृत्तिलक्षणनियमनंकरोति । एषोन्तर्यामीतेऽमृतः आत्मा निरुपाधिकामृतत्वशाल्यात्मेत्यर्थः । तेऽमृतात्मेतिव्यतिरेकनिर्देशादंतर्यामिणोजीवव्यतिरेकः सिद्धः । अमृतत्वविशेषणाच्च सिध्यति । तद्विशेषणं जीवव्यावृत्त्यर्थम् । अंतर्यामीते आत्मेत्युक्ते आत्मशब्दस्य स्वरूपवचनत्वशंकया जीवव्यावृत्तिर्नप्राप्नोतीति

१ अत्रोभयोःपुस्तकयोरस्यैवपाठस्यसत्वेपि पोतः पाकोऽर्भकोडिम्भइत्यमरकोशात् डिंभोपि बालिशेबालेइतिमेदिनीकोशात् चांडिभइत्येवोचितः पाठः ।

ह्यमृतइत्युक्तम् । निरुपाधिकामृतत्वशाल्यात्मा परमात्मैवात्र प्रश्नानुसारेणेमंच लोकंपरंच लोकं सर्वाणि भूतानियोन्तरोयमयति एषत आत्मांतर्याम्यमृत इत्येकेनैव निर्देशेन सर्वांतर्यामिणः उद्दालकंप्रति त आत्मेति । आत्मप्रतिपादनसंभवात् । यः पृथिव्यां तिष्ठन् योप्सुतिष्ठन्नित्यादिपर्यायोपदेशबाहुल्यं किमर्थमितिचेन्न । पृथिव्याद्यैकैकवस्तषु परिपूर्णत्वेन नियंतृतया स्थितिज्ञापनार्थत्वेन सार्थक्यात् । परिपूर्णत्वं चाणुमात्रेपिस्थितस्य निरवधिकषाड्गुण्यविशिष्टतयास्वप्रतिपत्तियोग्यत्वमितिव्यासार्यैर्वाक्यान्वयाधिकरणे । १ । ४ । १९ । वर्णितम् । ननु सर्वाणि भूतानि योंतरोयमयति तंमेब्रूहीति सर्वभूतस्याप्यंतर्याम्येकोस्ति सवक्तव्य इतिपृष्टवंतं प्रति पृथिव्यंतर्याम्येव तेंतर्यामीजलांतर्याम्येव । तेंतर्यामीति पृथिवीजलाद्यंतर्यामिणश्चोद्दालकांतर्यामिणश्चाभेदबोधनमसंगतम् । अंतर्याम्यैक्यस्य प्रागेवनिश्चितत्वात् । अतस्तआत्मेत्यत्रात्मशब्दोनांतर्यामिवचनोपि तु स्वरूपवचन इत्येव युक्तमितिचेत् । न । आत्मशब्दस्य शेषित्वाधारत्वाद्यर्थकतयाप्युपपत्तेः । पतिं विश्वस्येत्यादिवाक्यैर्विश्वशेषिणः कस्यचिदवगतत्वात्तेनवाक्येन प्रतिपन्नस्त आत्मातेशेषीपृथिव्यादीनामंतर्यामीति प्रघट्टकार्थः । एवम् ॥

योप्सु तिष्ठन् योग्नौ तिष्ठन् योन्तरिक्षे तिष्ठन् योवायौ तिष्ठन् य आदित्ये तिष्ठन् योदिक्षु तिष्ठन् यश्चंद्रतारके तिष्ठन् य आकाशे तिष्ठन् यस्तमसि तिष्ठन् एषत आत्मांतर्याम्यमृत इत्यधिदैवतम् ॥

उपदिष्टमंतर्यामिस्वरूपमितिशेषः ॥

अथाधिभूतम् ॥

अन्तर्यामिस्वरूपमुपदिश्यत इति शेषः ॥

यः सर्वेषु भूतेषु तिष्ठन्नित्यधिभूतमथाध्यात्मम्।

उच्यत इति पूर्ववच्छेषः॥

यः प्राणे तिष्ठन्। योवाचि तिष्ठन् यश्चक्षुषि तिष्ठन् यः श्रोत्रे तिष्ठन् योमनसि तिष्ठन् यस्त्वचि तिष्ठन् योविज्ञाने तिष्ठन् योरेतसि तिष्ठन्नेषत आत्मांतर्याम्यमृतः॥

अत्र विज्ञानशब्द आत्मपरः समानप्रकरणे माध्यंदिनिशाखायां विज्ञानशब्दस्थाने आत्मन्नित्यात्मशब्देन निर्देशदर्शनात्॥

अदृष्टोद्रष्टा अश्रुतः श्रोता अमतोमंता अविज्ञातो विज्ञाता॥

अत्र द्रष्टृत्वंरूपसाक्षात्कारवत्वं नतु चक्षुर्जन्यज्ञानवत्वम्। तस्य परमात्मन्यसंभवात्। श्रोतृत्वं शब्दसाक्षात्कारवत्वं मंतृत्वं मंतव्यविषयसाक्षात्कर्तृत्वं विज्ञातृत्वं विज्ञानशब्दितनिदिध्यासनविषयसाक्षात्कर्तृत्वम्। द्रष्टृत्वादिकं जीवस्याप्यस्तीति अद्रष्टृत्वादिना द्रष्टृत्वादिकं विशेषितं तादृशंच नजीवस्यास्तीतिभावः। अत्रैव द्रष्टृत्वादावुपाध्यनुक्तेर्निरुपाधिकद्रष्टृत्वमर्थसिद्धम्॥

नान्योतोस्ति द्रष्टा नान्योतोस्ति श्रोता नान्योतोस्ति मंता नान्योतोस्ति विज्ञाता एषत आत्मांतर्याम्यमृतः। अतोन्यदार्तं ततोहोद्दालकआरुणिरुपरराम॥

अन्यशब्दादेः सर्वनाम्नः पूर्वनिर्दिष्टसमानान्यपरत्वस्य "समानेषु पूर्वत्वादि" इतिसाप्तमिकाधिकरणे व्यवस्थितत्वात्। अत्राप्यन्यशब्देन पूर्वनिर्दिष्टाद्रष्टृत्वादिविशेषितनिपरुपाधिकरूपादिसाक्षात्कारादिमतोनिषेधउपपद्यतेजीवस्यकरणायत्तज्ञानत्वात्। अन्यस्तत्सदृशोऽ

दृष्टोद्रष्टानास्तीत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । शिष्टंस्पष्टम् । सप्तमंब्राह्मणम् ॥

अदृश्यत्वादिगुणकोधर्मोक्तेः ॥ १ । २ । २२ ॥

मुंडकोपनिषदिप्रथमखण्डे ॥

शौनकोहवै महाशालोंगिरिसंविधिवदुपसन्नः प्रपच्छकस्मिन्नुभगवोविज्ञातेसर्वमिदं विज्ञातंभवतीति ॥

सर्वोपादानंकिमितिप्रश्नार्थः । विस्तरस्तु मुंडकोपनिषत्प्रकाशिकायां द्रष्टव्यः ॥

तस्मैसहोवाच ॥

स्पष्टोर्थः ॥

द्वेविद्येवेदितव्येइतिहस्मयद्ब्रह्मविदोवदंति ॥

अत्र प्राप्तमित्यध्याहारः । यद्वस्तु प्राप्तं द्वेज्ञाने उपादेये इतिह तदभिज्ञाः पराशरादयः । " तत्प्राप्तिहेतुर्ज्ञानंच कर्मचोक्तं महामुने । आगमोत्थंविवेकाच्च द्विधाज्ञानंतथोच्यते । शब्दब्रह्मागममयं परंब्रह्मविवेकजम् ।" इति यद्वदंति तज्ज्ञाने सर्वविज्ञातं भवतीत्यर्थः। एतत्सर्वमभिप्रेत्य भगवता भाष्यकृता द्वेविद्ये वेदितव्ये इति हस्म यद्ब्रह्मविदोवदन्ति पराचैवापराचेति । ब्रह्मप्रेप्सुना द्वेविद्ये वेदितव्ये ब्रह्मविषये परोक्षापरोक्षरूपे द्वे ज्ञाने उपादेये इत्यर्थः इतिभाषितम्। एतेन परविद्याया ब्रह्मप्रेप्सूपादेयत्वेप्यपरविद्यायास्तथात्वाप्रतीतेः। प्रत्युताथ परा यया तदक्षरमधिगम्यतइति वाक्यपर्यालोचनायामपर विद्याया ब्रह्मप्रेप्सूपादेयत्वाभावस्यैव प्रतीतेर्ब्रह्मप्रेप्सूनां द्वेविद्ये उपादेये इतिभाष्यं कथमिति शंकापिनिरस्ता ॥

प्राप्तमितिपदाध्याहारेणास्यार्थस्य प्रतीतेरितरथा यत्पदवैयर्थ्यात् । किंच कस्मिन् भगव इति सर्वोपादाने पृष्टे विद्याद्वयकथन

माम्रान्पृष्टः कोविदारानाचष्टे इति न्यायमनुसरेदतोयथोक्तएवार्थः। ओदनपाकं पचतीतिवत् द्वेविद्ये वेदितव्ये इतिनिर्देशः । केते विद्ये-इत्यत्राह ॥

## पराचैवापराचेति ॥

परमपरमिति ज्ञानं द्विविधमित्यर्थः। तत्र सूचीकटाहन्यायेना परज्ञानस्वरूपमाह ॥

## तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दोज्योतिषमितिहासपुराणन्यायमीमांसाधर्मशास्त्राणीति ॥

षडंगोपेतसशिरस्कसोपबृंहणवेदश्रवणजन्यपरोक्षज्ञानमित्यर्थः । अपरविद्यामुक्त्वापरविद्यामाह ॥

## अथ परा यया तदक्षरमधिगम्यते ॥

अत्रतच्छन्दः इति ह स्म यद्ब्रह्मविद इति यच्छब्दप्रतिनिर्देशकः।येन ज्ञानेन इति हस्म यद्ब्रह्मविद इतिवाक्ये प्राप्यतयानिर्दिष्टम्। तदक्षरमधिगम्यतेआधिक्येन गम्यते।अपरोक्षीक्रियतइत्यर्थः । विवेकादिसाधनसप्तकजन्यं श्रवणजन्यज्ञानानंतभाविदर्शनसमानाकारंपरज्ञानमित्यर्थः।एतेनाधिगम्यतइत्यस्य ज्ञायत इतिवाप्राप्यत इतिवा अर्थस्याश्रयणीयतया परविद्याया एव ब्रह्मविषयत्वब्रह्मप्राप्तिहेतुत्वयोः सिध्यापरविद्याया ब्रह्मविषयत्वब्रह्मप्राप्तिहेतुत्वयोरभावेनावरविद्याया अपि ब्रह्मप्राप्तिहेतुत्वप्रतिपादकभाष्यासंगतिः।किंच परविद्याया अपरोक्षज्ञानरूपत्वे प्रमाणानुपलंभादपरोक्षत्वप्रतिपादकभाष्यस्याप्यसंगतिरितिदूषणंपरास्तम् । अधिगम्यत इत्यस्यापरोक्षीक्रियत इत्यर्थकत्वात् ॥ नन्वेतदुपबृंहणे श्रीविष्णुपुराणे "द्वेविद्ये

वेदितव्येवै" इतिचाथर्वणीश्रुतिः । परयात्वक्षरप्राप्तिर्ऋग्वेदादिमया[1]ऽपरेति। अधिगम्यतइत्यस्यप्राप्त्यर्थंतपोपबृंहितत्वात् कथमिदमुच्यतइतिचेन्न। यद्युपबृंहणानुसारेणप्राप्त्यर्थकतयाव्याख्यातव्यमितिनिर्बंधः। तर्हींतिहस्मतद्ब्रह्मविदोवदंतीतिपूर्ववाक्येपरापरविद्ययोर्द्वयोरपिब्रह्मप्राप्तिहेतुत्वस्य कथितत्वेन यया तदक्षरमधिगम्यते । ते इत्यस्यापरविद्याव्यावर्तकत्वाभावप्रसंगेन तद्व्यावर्तकत्वार्थंसाक्षादितिपदमध्याहृत्य ययासाक्षादक्षरमधिगम्यते प्राप्यते सापराविद्येत्यस्तु । अपरोक्षत्वंतु अर्थाल्लभ्यते । श्रुत्यंतरे निचाय्य तन्मृत्युमुखात्प्रमुच्यते "तस्मिन्दृष्टे परावरे" इत्यादिदर्शनादिति द्रष्टव्यम् । ननु "स्वाध्यायस्यतथात्वेहि । ३ । ३ । ३ । इतिसूत्रे तेषामेवैतां ब्रह्मविद्यां वदेतेत्युपसंहारगतब्रह्मविद्याशब्दस्यब्रह्मविद्यांवेदविद्यामित्युपनिषत्परतयाभाष्यकृताख्यातत्वात् येनाक्षरंपुरुषं वेद सत्यं प्रोवाचतां तत्वतोब्रह्मविद्यामिति द्वितीयखण्डगतब्रह्मविद्याशब्दस्यापि तत्परत्वौचित्यादुपक्रमेच ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वायज्येष्ठपुत्राय प्राहेत्युक्तिकर्मतया श्रूयमाणाया ब्रह्मविद्याया उपनिषद्ग्रंथरूपत्वस्यैवौचित्यात् । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदः इत्यत्रऋग्वेदादिशब्दानां तज्जन्यज्ञानलक्षणाया अयुक्तत्वेन विद्याशब्दस्यैव ग्रंथपरत्वाश्रयणस्य युक्तत्वात्परविद्याशब्देनापि साक्षाद्ब्रह्मप्रापकोपनिषद्भागएवाभिध्यातुमुचितः। ततश्च परोक्षापरोक्षरूपज्ञानपरत्वेन युक्तिपश्यामइति चेत् । अत्रोच्यते। यदि परविद्याशब्देनोपनिषद्ग्रंथसंदर्भविशेषः प्रतिपाद्यः ऋग्वेदादिशब्दैर्मुख्यया वृत्त्या ऋग्वेदादय एव प्रतिपाद्यास्तर्हि ब्रह्मप्रतिपादकोपानिषदां ऋग्वेदादिबहिर्भावप्रसंगेन "[2]यावेदबाह्याः स्मृतयः" इत्युक्तरीत्या

---

१ ऋग्योगादिमयीपरा। २ यावेदबाह्याः स्मृतयो याश्चकाश्चकुदृष्टयः। सर्वास्तानिष्फलाः प्रेत्यतमोनिष्ठाहिताः स्मृताः इति मनुः। १२। ९५॥

सदर्थत्वमेव स्यात् । ऋग्वेदादिशब्दानां मुख्यार्थत्वमाश्रितवद्भिरपि परैरुपनिषदां वेदबाह्यत्वप्रसंगात्परविद्याशब्दोज्ञानवाचीतिव्याख्यातम् । इयांस्तु विशेषः । परमते द्वे विद्ये वेदितव्ये इत्यत्र सकृत्प्रयुक्त एव विद्याशब्दो सत्यपि साधारणे प्रवृत्तिनिमित्ते ऋग्वेदादिग्रंथसंदर्भलक्षणमपराविद्यांब्रह्मज्ञानलक्षणां परविद्यांचव्यनक्तीतिदोषोस्ति । अस्मन्मते सनास्ति । किंचपरव्याख्याने ऋग्वेदादि वेद्यविलक्षणत्वाद्ब्रह्मणो वेदैश्चसर्वैरहमेववेद्य इति स्मृतिः पीड्येत । अत ऋग्वेदादिजन्यज्ञानं ब्रह्मविषयकमेवेत्येवयुक्तम् । अतः परापरज्ञानशब्दितपरोक्षापरोक्षज्ञानविषयत्वं ब्रह्मण एवेति भाष्यकारीया रीतिरेवसाधीयसी ॥

**यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिंपरिपश्यंति धीराः ॥**

अद्रेश्यम् अदृश्यम् । ज्ञानेंद्रियाविषयम् । अग्राह्यंपाण्यादिकार्य्यहानोपादानाद्यविषयम् । अगोत्रंकुलरहितम् । अवर्णमपेतब्रह्मक्षत्रादिकम् । अचक्षुःश्रोत्रं ज्ञानेंद्रियरहितम् । तत्प्रसिद्धम् । अपाणिपादं कर्मेन्द्रियरहितम् । नित्यंकालापरिच्छिन्नम् । विभुंदेशापरिच्छिन्नं सर्वगतंसर्वेष्वंतःप्रविश्यावस्थितम् । तत्रहेतुमाह । सुसूक्ष्ममित्युक्तविशेषणविशिष्टं यत्तदव्ययम् । अथ परायया तदक्षरमित्यत्राक्षरशब्दनिर्दिष्टमित्यर्थः । यद्भूतयोनिंपरिपश्यंतिधीराः । प्रज्ञाशालिनः । यत्सर्वभूतोपादानतयापश्यन्तीत्यर्थः । योनिशब्दस्योपादानवचनत्वम् । "यथोर्णनाभिः सृजतेगृह्णतेच" इति वाक्यशेषादवगम्यत इति प्रकृत्यधिकरणे १ । ४ । २३ ॥ भाषितम् । ननु भूतयोनिशब्दनिर्दिष्टं सर्वोपादानत्वं ब्रह्मणो न संभवति ।

घटादिषु मृदादेरेवोपादानत्वदर्शनेन ब्रह्मण उपादानत्वासंभवादित्याशङ्क्य मृदादिष्वपि ब्रह्मण आत्मतया व्याप्तत्वान्मृदादिरूपस्य ब्रह्मण उपादानत्वेनानुपपत्तिरित्यभिप्रयन्नाह ॥

## यस्मात्परं नापरमस्ति किंचित् ॥

अत्र परशब्द उत्कृष्टवचनः। अपरशब्दोन्यवचनः। यस्मादन्यदुत्कृष्टंनास्तीत्यर्थः। नात्र परापरयोर्द्वयोरपिनिषेधः। तथा सति नभः सकृच्छ्रुतस्यावृत्तिप्रसंगात् ॥

## यस्मान्नाणीयो न ज्यायोस्ति कश्चित् ॥

अणोरणीयान्महतो महीयानितिभावः। अणीयस्त्वं सूक्ष्मत्वं व्यापित्वमिति फलति। ज्यायस्त्वं सर्वेश्वरत्वं सर्वव्यापित्वात्। सर्वेश्वरत्वादस्यैवैतद्व्यतिरिक्तस्य कस्याप्यणीयस्त्वं ज्यायस्त्वं च नास्तीत्यर्थ इतिवेदार्थसंग्रहेव्याख्यातम्। कश्चिदिति लिंगव्यत्ययश्छांदसः ॥

## वृक्षइव स्तब्धो दिवि तिष्ठत्येकः ॥

नंतव्यवस्त्वभावाद्वृक्ष इवाप्रणतस्वभावः सन् यः प्रधानभूतः परमपद आस्तइत्यर्थः ॥

## तेनेदं पूर्णं पुरुषेण सर्वम् ॥

नियमनाद्यर्थमंतःप्रविष्टेन सर्वमिदं व्याप्तमित्यर्थः। अतश्च मृदादिशरीरकस्य ब्रह्मणो घटादावप्युपादानत्वसंभवाद्भूतयोनित्वं नानुपपन्नमितिभावः। अयंमंत्रः केषुचित्कोषेषु न दृष्टः कैश्चिदव्याकृतस्तथापिव्यासार्यैरक्षरपुरुषस्य यस्मात्परंनापरमस्तीति समाभ्यधिकनिषेधश्चोपक्रमादवगत इत्यभिहितत्वात् नप्रक्षेपशंकाहेइतिद्रष्टव्यम्। ननु लोके उपादानस्य स्वभिन्ननिमित्तकारणसापेक्षत्वदर्शनादेकविज्ञानेन सर्वविज्ञानमनुपपन्नम्। किंच। एकस्य

१ अत्र च शब्दोपेक्षितः अथवा गामश्वंपुरुषंपशुम् इतिवत्विनापिचंसमुच्चयः स्यात् ॥

ब्रह्मणः परस्परविरुद्धानन्तप्रपंचोपादानत्वमपि न संभवति । किंच । घटाद्युत्पत्तावुपादानरूपमृत्पिंडादिषु पूर्वावस्थोपमर्दोदृश्यते । प्राकारोपादानभूतास्विष्टकासु चतुरस्रत्वादिलक्षणपूर्वाकारतिरोधानं दृश्यते । अक्षरशब्दितस्य निर्विकारस्य ब्रह्मणः पूर्वाकारोपमर्दतिरोधानयोरसंभवेनोपादानत्वं न संभवतीत्याशङ्क्याह ॥

यथोर्णनाभिः सृजते गृह्णते च ॥

"यथोर्णनाभिर्हृदयादूर्णांसंतत्यवक्त्रतः । तयाविहृत्य भूयस्तां ग्रसत्येवंजनार्दनः । इत्युक्तरीत्या यथालूताख्यकीटविशेषस्य स्वांतःस्थिततंतुनिःसारणतत्प्रवेशनयोर्निरपेक्षकर्तृत्वम् ॥

यथापृथिव्यामोषधयः संभवन्ति ॥

यथैकस्यामेवपृथिव्यां पूर्वावस्थोपमर्दतिरोधानाभावेपिविलक्षणानन्तौषध्युपादानत्वम् ॥

यथा सतः पुरुषात्केशलोमानि ॥

यथाजीवतः पुरुषस्याचेतनकेशलोमाद्युपादानत्वम् ॥

तथाक्षरात्संभवतीहविश्वम् ॥

एवमेवनिमित्तांतरनिरपेक्षादुपादेयविलक्षणान्निर्विकारात्परमात्मनः परस्परविलक्षणचेतनाचेतनात्मकं निखिलं जगत्संभवतीत्यर्थः । ब्रह्मणोविश्वोत्पत्तिप्रकार उच्यते ॥

तपसाचीयते ब्रह्म ॥

तपसा ज्ञानेन " यस्य ज्ञानमयंतप इति वक्ष्यमाणत्वात् । चीयते उपचीयते । बहुस्यामिति संकल्परूपणे ज्ञानेन ब्रह्म सृष्ट्युन्मुखं भवतीत्यर्थः ॥

ततोन्नमभिजायते ॥

" अद्यतेऽत्तिचभूतानि " इतिभोग्यभोक्तृरूपचेतनाचेतनसंघात लक्षणमव्याकृतं परस्माद्ब्रह्मणोजायत इत्यर्थः ॥

## अन्नात्प्राणोमनः सत्यं लोकाः कर्मसु चामृतम् ॥

तस्मात्समष्टिरूपचिदचित्संघातात्मकादन्नशब्दिताद्व्याकृतात् मुख्यप्राणः अंतःकरणं सत्यशब्दितोभोक्तृवर्गः स्वर्गादयोलोकाः कर्मसुआयतममृतंचामृतत्वसाधनं कर्मेतियावत्। अथवा कर्मस्विति निर्धारणे सप्तमी। कर्ममध्ये मोक्षार्थं कर्मेत्यर्थः। तद्द्वारा एतत्सर्वम भिजायते इतिपूर्वेणान्वयः। एतत्सर्वं भाष्यश्रुतप्रकाशिकयोः स्पष्टम्। पूर्वमंत्रोक्ततपःशब्दंविवृण्वन्भूतयोनिभूतस्य ब्रह्मणः सृष्ट्युपकरणसार्वज्ञ्यं दर्शयति ॥

## यत्सर्वज्ञः सर्वविद्यस्य ज्ञानमयंतपः ॥

सर्वज्ञः सर्वविषयकज्ञानवान् सर्ववित् तद्वस्तुगतसर्वप्रकार-ज्ञानवान् स्वरूपतः प्रकारतश्चसर्वविषयकज्ञानवत्वमस्मिन्मंत्रेभूत-योनेर्विधेयम्। अप्राप्तत्वात् "यस्य ज्ञानमयंतपः" इत्यनेनांशेन पूर्वमंत्रोक्ततपश्शब्दविवरणम्। यस्य ब्रह्मणः संकल्परूपज्ञानव्यतिरे केण जगत्सृष्ट्युपयुक्तंकर्मान्तरंनास्तीत्यर्थः। ततोन्नमभिजायत इत्यादिकमनुवदति ॥

## तस्मादेतद्ब्रह्म नामरूपमन्नं चजायते ॥

तस्मात्संकल्पेन सृष्ट्युन्मुखात् ब्रह्मणः "ततोन्नमभिजायते" इत्यत्रान्नशब्दनिर्दिष्टमेतदव्याकृताख्यं ब्रह्म साक्षाज्जायते। तद्द्वारा नामरूपवत्। अद्यतेऽत्तिच भूतानीत्यन्नशब्दनिर्दिष्टभोग्यभोक्तृरूपं च जायत इत्यर्थः। यद्यप्यस्मिन्मंत्रे सर्वज्ञत्वाद्यनुवादेन ब्रह्मशब्दिता व्यक्तादिहेतुत्वं विधीयत इतिप्रतिभाति। तथापि तस्य पूर्वमंत्रप्राप्त स्य विधेयत्वासंभवादप्राप्तस्य सर्वज्ञत्वस्यैव विधेयत्वमितिद्रष्टव्यम्। ननु सर्वज्ञसर्वविच्छब्दयोरपौनरुक्त्याय सर्वज्ञशब्दस्यरूढिरभ्युपगं तव्या "कृशानुरेताः सर्वज्ञः" इतिनिघंटुपाठेसर्वज्ञशब्दस्योमापतौ रूढत्वात्। तस्मात्सर्वविदोदेवतांतरान्निमित्तभूतात्तपसा चीयते ब्रह्मे

ति पूर्वमंत्रनिर्दिष्टमेतत् ब्रह्म नामरूपमन्नंच जायत इत्युपादानभूताद्ब्रह्मणो निमित्तस्येश्वरस्य भेद एव प्रतीयत इतिचेन्न "यः सर्वज्ञः सर्ववित् यस्यज्ञानमयंतपः" इति तपसा चीयमानतया पूर्वमंत्रनिर्दिष्टस्याक्षरब्रह्मण एव सर्वज्ञत्वसर्ववित्त्वयोः प्रतीत्या तयोर्भेदासंभवान्निमित्तोपादानभेदविवक्षायामेकविज्ञानेन सर्वविज्ञानासंभवेन कस्मिन्नु भगवोविज्ञाते सर्वमिदं विज्ञातं भवतीति प्रश्नस्य प्रतिवचनासंभवेन प्रतिपिपादयिषितप्रधानार्थविरोधप्रसंगादित्यलमतिप्रसङ्गेन । प्रथमखंडः ॥

## तदेतत्सत्यम् ॥

नित्यम् उत्पत्तिविनाशादिषड्भावविकारशून्यमित्यर्थः ॥[1]

## मंत्रेषु कर्माणि कवयो यान्यपश्यन् ॥

अतीन्द्रियार्थसाक्षात्कारसमर्था वेदेषु यान्यग्निहोत्रादिकर्माणि दृष्टवंतः ॥

## तानि त्रेतायां बहुधा सन्ततानि ॥

गार्हपत्यादिवैतानिकाग्निषु यावज्जीवं कर्तव्यतयाधिकारिमंत्रफलभेदेन बहुधा विहितानि ॥

## तान्याचरत नियतंसत्यकामाः ॥

स्वतः सत्यं परंब्रह्मैव कामयमानाः । फलाभिसन्धिरहितास्संत इत्यर्थः ॥

## तानि कर्माण्याचरत ॥

अनुष्ठितकर्मणां ब्रह्मप्राप्तिहेतुत्वं ज्ञानद्वारेतिद्रष्टव्यम् । अमुमुक्षून् प्रत्याह ॥

## एषवः पंथाःसुकृतस्यलोके ॥

---

१ जायते अस्ति वर्धते विपरिणमते अपक्षीयते नश्यति इतियास्कमुन्युक्ताः षड्विकाराः श्रीशंकरभाष्येप्युक्ताः ॥

पुण्यफलभूतेलोकेतु वक्षमाणोमार्गइत्यर्थः ॥

**यदालेलायतेह्यर्चिःसमिद्धेहव्यवाहने ॥**

यथेंधनादिभिर्दीपिते अग्नौ यस्मिन्काले ज्वाला चलति ॥

**तदाज्यभागावंतरेणाहुतीः प्रतिपादयेत् ॥**

तस्मिन्काल आज्यभागयोर्मध्ये आहुतीः प्रक्षिपेच्छ्रद्धयातत्सुहुतंभवेदित्यर्थः ॥

**यस्याग्निहोत्रमदर्शपौर्णमासमनाग्रयणमत्तिथिवर्ज्जितंचाहुतमवैश्वदेवमश्रद्धया अविधिनाहुतमासप्तमांस्तस्यलोकान्हिनस्ति ॥**

दर्शाख्यपौर्णमासाख्येष्टयनुष्ठाने नवान्नस्वीकारार्थंशरत्कालकर्तव्याग्रयणाख्येष्टिविशेषाननुष्ठाने तिथिसत्कारोपासनहोमवैश्वदेवाननुष्ठाने श्रद्धावैधुर्य्येण यथाशास्त्रमननुष्ठाने वानुष्ठितमप्यग्निहोत्रकर्मतस्य सुकृतफलं सर्वं सप्तपुरुषपर्यंतं नाशयतीत्यर्थः । यद्यप्यग्निहोत्रस्य न दर्शपौर्णमासादिकमंगं तेषांपृथक्फलकत्वात् । तथापि नित्यनैमित्तिकं सकलं कर्मानुष्ठेयमित्यत्र तात्पर्यम् । अत एव भगवता भाष्यकृता श्रुतिस्मृतिचोदितेषु कर्मसु एकतरवैधुर्येपीतरेषामनुष्ठितानामपि निष्फलत्वमयथानुष्ठितस्याननुष्ठितसमत्वंचाभिधायेति मंत्रार्थोविवृतः ॥

**कालीकरालीच मनोजवाच सुलोहिता याचसुधूम्रवर्णा । स्फुलिंगिनी विश्वरुचीच देवी लेलायमाना इति सप्तजिह्वाः ॥**

देवीत्येतद्विश्वरुच्यादिविशेषणम् । इतिलेलायमानाःसप्तजिह्वा इत्यन्वयः ॥

एतेषु यश्चरते भ्राजमानेषु यथाकालंचाहुतीराददायन् ॥

एतेषुदीप्यमानेषु अग्निजिह्वाभेदेषु विहितकालानतिलंघनेन होमद्रव्यंगृहीत्वा योग्निहोत्रादिकर्माचरति ॥

तंनयंत्येताः सूर्यस्यरश्मयो यत्र देवानां पतिरेकोधिवासः ॥

अधिवसतीत्यधिवासः यस्मिन्सत्यलोकेदेवानां पतिरनवधिकः समानोहिरण्यगर्भ आस्ते तत्राहुतयः सूर्यरश्मयोभूत्वा तंयजमानं प्रापयन्तीत्यर्थः ॥

एह्येहीतितमाहुतयः सुवर्चसःसूर्य्यस्य रश्मिभिर्यजमानंवहंति । प्रियांवाचमभिवदंत्योर्चयंत्यः एषवः पुण्यः सुकृतोब्रह्मलोकः ॥

सूर्यस्यरश्मिसंपृक्ता अतएव सुवर्चसः आहुतयस्तं यजमानमर्चयंत्यः सुकृतसाध्यःपावन एष चतुर्मुखलोकोभवदीयः भवत्स्वामिकः । ईदृशीं प्रियां वाचं वदन्त्यएहिएहीत्याह्वयंत्यस्तं यजमानं ब्रह्मलोकं प्रापयन्तीत्यर्थः । एवं ब्रह्मलोकपर्यन्तसाधनान्यपि कर्माणि क्षयिफलतया निंद्यंते ॥

प्लवाह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ॥

षोडशर्त्विक्पत्नीयजमानरूपाष्टादशकर्त्राश्रितत्वेनोक्तमवरफलाभिसन्धिमत्तयाऽश्रेष्ठं कर्मयेषु यजमानेषु वर्तते । ते यज्ञप्रधानाः पुरुषाः जीर्णनौका इव संसारार्णवसंतरणासमर्थाइत्यर्थः । यद्वा । अष्टादशस्मृत्युक्तं स्मार्त्तं कर्म येषु श्रौतकर्मसु तदधिकारसंपाद-

कत्वेनावरमंगभूतं भवति। तान्यपि श्रौतानि यज्ञात्मकानि कर्माणि शोकांबुधितरणे साधनानि न भवंतीत्यर्थः॥

**एतच्छ्रेयो येभिनन्दन्ति मूढा जरामृत्यू ते पुनरेवापि यन्ति ॥**

एतत्कर्म श्रेयःसाधनं मत्वा येहृष्यंति। ते जरां मृत्युं च भूयो भूयो गच्छंति ॥

**अविद्यायामंतरे वर्तमानाः स्वयंधीराः पंडितं मन्यमानाः ॥**

अविवेकप्रधानाः स्वयमेव धीमंत ऊहापोहक्षमा धीशालिन इति मन्यमानाः ॥

**जंघन्यमानाः परियंतिमूढाः ॥**

जरारोगाद्यनेकानर्थव्रातैः भृशं हन्यमाना मूढाः परिभ्रमंति ॥

**अन्धेनैव नीयमाना यथान्धाः ॥**

स्पष्टोर्थः। एतदेवविशदयति ॥

**अविद्यायां बहुधा वर्तमानाः ॥**

प्रकृतिमंडले देवमनुष्यादि बहुधाभिमानितया वर्तमानाः अज्ञानिनः ॥

**वयं कृतार्था इत्यभिमन्यन्ति बालाः ॥**

वयमेव कृतार्था इत्यभिमानं कुर्वंति ॥

**यत्कर्मिणो नप्रवेदयंति रागात् ॥**

कर्मफलस्वर्गादि रागात् कर्ममूढास्तत्त्वंयतो नजानंति ॥

**तेनातुराः क्षीणलोकाश्च्यवन्ते ॥**

तत्वज्ञानाभावादेव हेतोः क्षीणे पुण्ये मर्त्यलोकं विशन्तीत्यर्थः॥

इष्टापूर्तं मन्यमाना वरिष्ठम् ॥

इष्टं यागादि पूर्तंखातादि एतदेवाखिलपुरुषार्थसाधनं मन्यमानाः ॥

नान्यच्छ्रेयो वेदयंते प्रमूढाः ॥

श्रेयोन्तरं न जानंतीत्यर्थः ॥

नाकस्य पृष्ठे सुकृतेन भूत्वा इमं लोकं हीनतरं वा विंशति ॥

तेसुकृतसाध्ये स्वर्गलोकोर्ध्वलोके कर्मफलमनुभूय इमं लोकं ततोप्यवरतरं वा नरकादिलक्षणं विशन्ति ॥

तपः श्रद्धेयेह्युपवसन्त्यरण्येशांता विद्वांसो भैक्षचर्यां चरन्ति । सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः सपुरुषो ह्यव्ययात्मा ॥

ये संन्यासिनः कृतश्रवणमनना वने स्थित्वोपरतकरणग्रामास्तपःशब्दितं च ब्रह्म तदादरातिशयरूपां च श्रद्धां ये सेवंते ते अवधूतपापाः सूर्यमंडलं भित्त्वा "सहस्रस्थूणे विमिते दृढउग्रे यत्र देवानामधिदेव आस्ते ।" इति पर्यंकविद्यादिप्रमाणप्रतिपन्नो हेयप्रत्यनीकः । सदैकरूपरूपायेतिप्रमाणप्रतिपन्ननित्यविग्रहयुक्तो यत्रास्ते तत्र यान्तीत्यर्थः । येचेमेऽरण्ये श्रद्धातप इत्युपासते इत्यत्र तपःशब्देन ब्रह्मोच्यते । बृहदारण्यके श्रद्धां सत्यमित्युपासतइतितपश्शब्दस्थाने सत्यशब्दप्रयोगात् सत्यशब्दस्य ब्रह्मपरत्वादिति व्यासार्यैरुक्तत्वात्तपःशब्दो ब्रह्मपरः । विरक्तस्य परब्रह्मप्राप्तिसाधनज्ञानेच्छोर्गुरूपसदनं विधीयते ॥

परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत्स मित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । तस्मै विद्वानुपसन्नाय

सम्यक्प्रशांतचित्तायशमान्विताय येनाक्षरं पुरुषं वेद सत्यं प्रोवाचतां तत्वतो ब्रह्मविद्याम् ॥

अस्मिन्वाक्ये न्यायसिद्धार्थानुवादेन गुरूपसत्तिर्विधीयते कर्मचितान्कर्मसंपाद्यान् लोकान् परीक्ष्यमीमांसान्यायैर्निरूप्य ब्राह्मणोधीत सांगसशिरस्कवेदःयइत्यध्याहार्यंस इत्युत्तरत्रश्रवणात्।अकृतोनित्यः अत्र पुरुषोविशेष्यः लिंगवशादक्षरं पुरुषमित्यनंतरोक्तेश्च । कृतेन कर्मणा नास्ति नसिध्यति नलभ्यतइतीतिकरणं द्रष्टव्यमितियोनिर्वेदमायासतद्विज्ञानार्थं गुरुमेवाभिगच्छेत्।एवकारेण नियमविधित्वमवगम्यते। समित्पाणिः न रिक्तपाणिः "रिक्तपाणिस्तु नोपेयाद्राजानं दैवतं गुरुमितिस्मर्यते । श्रोत्रियं श्रुतवेदांतम् । ब्रह्मनिष्ठं ब्रह्मसाक्षात्कारवंतम्।श्रुतवेदांतोपि रुचिभेदादब्रह्मनिष्ठोनोपगंतव्य इतिभावः। अभिगच्छेदित्यन्वयः । शमो बाह्येंद्रियनियमनरूपः प्रशान्तचित्तायेत्यंतःकरणनियमनस्योक्ततयापारिशेष्यात्।एतेनश्रवणोपयुक्तमवधानंविवक्षितं नतूपासनोपयुक्तात्यंतेंद्रियजयादि सतस्मैविद्वान् प्रोवाचेत्यन्वयः। येनेति निर्देशोविज्ञानाभिप्रायः । तद्विज्ञानार्थमिति प्रकृतं सामान्यंतःकरणाभिप्रायेणवालिंगव्यत्ययेनवाअक्षरम् स्वरूपेणाविकारं सत्यं गुणतोप्यविकारम् । आभ्यामचिज्जीवव्यावृत्तिः तां ब्रह्मविद्यांप्रोवाच प्रब्रूयादित्यर्थः इति वेदांतसारे व्याख्यातम् ॥

## तदेतत्सत्यम् ।

पूर्ववत् ॥

यथासुदीप्तात्पावकाद्विस्फुलिंगाः सहस्रशः प्रभवंतेसरूपाः ॥

अयोगोलकादिगताद्धन्यमानाद्वा वेश्मादिषु सुदीप्ताद्वा पावकादनेकशः स्वरूपाविस्फुलिंगायथोत्पद्यंते ॥

तथाक्षराद्विविधाः सोम्य भावाः प्रजायंते तत्र चैवापियन्ति ॥

एवमेवचिदचिच्छरीरादक्षराद्ब्रह्मणः तत्सरूपानानाविधस्थूलचिदचिद्रूपा भवंतीतिभावः । कार्यवर्गाउत्पद्यंते तत्रैवलीयन्तेच ॥

दिव्योह्यमूर्तः पुरुषः सबाह्याभ्यंतरो ह्यजः । अप्राणोह्यमनाः शुभ्रोह्यक्षरात्परतः परः ॥

पूर्वत्र वृक्ष इवस्तब्धोदिवितिष्ठत्येक इतिद्युसंबन्धित्वेन तदपाणिपादमितिवा नित्यं विभुमितिवा अमूर्तत्वेन तेनेदं पूर्णं पुरुषेण सर्वमिति बाह्याभ्यंतरसर्ववस्त्वात्मतया अचक्षुः श्रोत्रमित्यनिंद्रियत्वेन प्राणमनःशून्यतया येनाक्षरं पुरुषं वेद सत्यमितिविकाररूपदोषशून्यतया शुभ्रशब्दितश्च यः सअव्याकृतादक्षराद्यः परः समष्टिरूपः पुरुषस्तस्मादपिकारणत्वेन पर इत्यर्थः । प्रधानपुरुषयोस्तज्जन्यत्वादितिभावः । अक्षरात्परत इत्यत्राक्षरशब्दः अश्नुते इतिवा नक्षरतीति वा व्युत्पत्त्या स्वविकारव्यापकेनामांतराभिलापयोग्यक्षरणाभाववत्यव्याकृते वर्ततेनतु भूतयोन्यक्षरेभूतयोन्यक्षरस्य सबाह्याभ्यंतर इत्यत्र तच्छब्दनिर्दिष्टस्य तस्मादेव परत्वासंभवात् ।नहि तस्यैव ततः परतः परत्वं संभवति विरोधात् । नचाक्षरात्परत इति पंचम्योः सामानाधिकरण्यमेवास्तु।ततः स्वविकारापेक्षयापरभूतादव्याकृतात्पर इत्येवास्तु।नतु अव्याकृतादक्षरात्परभूतात्समष्टिभूतात्पर इतिवाच्यम् । परशब्दस्य प्रतियोगिसापेक्षत्वेनाक्षरशब्दस्य परत्वावधिसमर्पकत्वस्यैव युक्तत्वान्नहि देवदत्तादुत्पन्नाद्दयमित्यत्र पंचम्योः सामानाधिकरण्यप्रतीतिरस्ति । अतोयथोक्तएवार्थः विश्वसृष्टिमेव प्रपञ्चयति ॥

एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणिच ॥

स्पष्टोर्थः ॥

खंवायुर्ज्योतिरापंपृथिवीविश्वस्य धारणी ॥

खमाकाशोज्योतिस्तेजो विश्वस्य कृत्स्नस्य धारिणीति पृथिवीविशेषणम् ॥

अग्निर्मूर्द्धाचक्षुषी चंद्रसूर्योदिशः श्रोत्रेवाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवीह्येषसर्वभूतान्तरात्मा ॥

अमुं मंत्रं प्रस्तुत्य "स्मर्यमाणमनुमानंस्यात् । १ । २ । २६ ॥ इत्यत्राग्निरिहद्युलोकः "असौवाव लोकोग्निरितिश्रुतेः । स्मरंतिच । मुनयः द्यांमूर्द्धानं यस्य विप्रावदन्ति खंवै नाभिं चंद्रसूर्यौच नेत्रे दिशः श्रोत्रे विद्धिपादौक्षितिं च सोचिंत्यात्मा सर्वभूतप्रणेतेतिभाषितम् । वाग्विवृता वागिंद्रियव्यापारा एववेदा वायुः प्राणः महावायुरेव देहधारकः प्राणः जगत्सर्वमस्य देहांतर्वर्तिहृदयाख्यं मांसविशेषः । पद्भ्यांपृथिवी पादावेव पृथिवीत्यर्थः । "प्रकृत्यादिभ्यउपसंख्यानम्" इतितृतीया । सर्वभूतानां तच्छरीरत्वात् सर्वेषामंतरात्मेत्यर्थः ॥

तस्मादग्निः समिद्धोयस्य ॥

इत्यादि ॥

वैश्वानरः साधारणशब्दविशेषात् । १ ।२ । २५ ॥

छांदोग्ये पंचमप्रपाठके एकादशखण्डे वैश्वानरविद्या प्रस्तूयते ॥

प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिंद्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्योवुडिल आश्वतराश्विस्तेहैते महाशाला महाश्रोत्रियाः समेत्यमीमाꣳसां चक्रुःकोनु आत्मा किंब्रह्मेति ॥

उपमन्युसुतः प्राचीनशालनामा पुलषसुतः सत्ययज्ञनामा भाल्लविसुतः इंद्रद्युम्ननामा शार्कराक्षिसुतो जननामा अश्वतराश्वसुतः बुडिलनामा एते पंचापि महागृहस्थतया विस्तीर्णशालाः संपन्नाः प्रसिद्धा इति यावत् । अतीव श्रुताध्ययनसंपन्ना एकत्र संभूयास्माकमंतर्यामितयात्मभूतं ब्रह्म किमितिविचारं कृतवंत इत्यर्थः ॥

तेह संपादयां चक्रुः ॥

त एव मीमांसित्वा निश्चयमलभमानाः आत्मभूतब्रह्मोपदेष्टारं कंचित्संपादितवंतः निश्चितवंत इत्यर्थः । किमिति तत्राह ॥

उद्दालको हवै भगवंतोयमारुणिः संप्रतीममात्मानं वैश्वानरमध्येति तंहंताभ्यागच्छामइति ॥

हे भगवंत उद्दालकनामा इदानीं वैश्वानरमात्मानमध्येति । इक् स्मरणे उपास्तइत्यर्थः । यद्वा । इण्गतौ गत्यर्थाज्ञानार्थाइत्यवगच्छतीत्यर्थः । तमभ्यागच्छामेति ॥

तंहाभ्याजग्मुः ॥

तमागतवंतः ॥

सहसंपादयांचकार । प्रक्ष्यंति मामिमे महाशाला महाश्रोत्रियास्तेभ्योन सर्वमिव प्रतिपत्स्येहंताहमन्यमभ्यनुशासानीति ॥

सहोद्दालक एते महाशाला महाश्रोत्रिया मांवैश्वानरमात्मानं प्रक्ष्यंति नाहं तत्सर्वंप्रतिपत्तुं शक्नोमि । अन्यंतदभिज्ञं कंचिदुपादिशानीत्येवं संपादितवान्निश्चितवानित्यर्थः ॥

तान् होवाचाश्वपतिर्वैभगवंतोयं कैकेयः संप्रतीममात्मानं वैश्वानरमध्येति तंहंताभ्यागच्छामइतितंहाभ्याजग्मुः ॥

केकयस्यापत्यंकैकयः अश्वपतिमुद्दालकषष्ठास्तेभ्यागतवंत इत्यर्थः शिष्टंस्पष्टम् ॥

तेभ्योह प्राप्तेभ्यः पृथगर्हाणिकारयांचकार ॥

प्राप्तेभ्यस्तेभ्यो महर्षिभ्यः पृथक् पूजां भृत्यैः पुरोहितादिभिश्च कारितवान् ॥

सहप्रातः संजिहान उवाच ॥

अन्येद्युः प्रातःकाले स्वभवनंसंजिहानस्त्यजन् स्वभवनान्निर्गत्य तत्समीपमागत्येतियावत्।तान् महर्षीनुवाचेत्यर्थः। किमितितत्राह॥

नमे स्तेनो जनपदे नकदर्यो न मद्यपः। नानाहिताग्निर्नाविद्वान्नस्वैरी स्वैरिणी कुतः। यक्ष्यमाणोह वै भगवंतोहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसंतु भगवन्त इति ॥

हेभगवंतः पूजार्हा मदधिष्ठिते जनपदे चोरो वा दानशून्योवा मद्यपायी वा सत्यांयोग्यतायामनाहिताग्निर्वा वेदाध्ययनादिशून्यस्त्रैवर्णिकोवा परदारगंतावानसंतिस्वैरिणीपुंश्चलीतुकुतःस्यादित्यर्थः। एवमाद्या दुष्टा नसंति न तैर्दत्तं धनमुपजीवामि । अतोमम प्रतिग्रहयोग्यतास्त्यचिरेणैव कालेन यागंकरिष्याम्येकैकस्मा ऋत्विजे यावद्धनं दास्यामि तावद्भगवभ्द्यः प्रत्येकं दास्यामितावत्कालमत्रैव वसंतुयागंचपश्यंत्विति प्रार्थितवानित्यर्थः। भगवता भाष्यकृतानमे स्तेन इत्यादिना यक्ष्यमाणोहवैभगवंतोहमस्मीत्यंतेनात्मनोवृत्तस्थतया प्रतिग्रहयोग्यतांज्ञापयन्नेवब्रह्मविद्भिरपिप्रतिषिद्धस्य परिहरणीयतांविहितस्य कर्त्तव्यतांच प्रज्ञाप्य यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्योदास्यामि वसंतु भगवंत इत्यवोचदितिभाषितम् ॥

तेहोचुर्येन हैवार्थेन पुरुषश्चरेत्तं हैव वदेदात्मानमेवेमं वैश्वानरं संप्रत्यध्येषितमेव नोब्रूहीति ॥

येनार्थेन प्रयोजनेन यत्प्रयोजनमुद्दिश्य पुरुष आगच्छति तमेव पुरुषार्थं तस्य कुर्यात्समीहितं हि कर्त्तव्यं भवत्यस्माकंच वैश्वानरात्माजिज्ञासितः त्वंच तमात्मानमधुनोपास्सेनचतेतज्ज्ञानमपह्नवार्हम् । तमेवन उपदिशनप्रयोजनांतरमित्यर्थः । विश्वान्नरान्नयतीति विश्वेयनं नराः नयंतीति वा विश्वनरः विश्वनर एव वैश्वानरः रक्ष एव राक्षसः वय एववायसइतिवत् ॥

तान्होवाच प्रातर्वः प्रतिवक्तास्मीति ॥

तेषामभिमानं परिशोध्यश्वः प्रतिवचनं दास्यामीति मत्वा प्रातः प्रश्नस्य प्रतिवचनंवक्तास्मीत्युवाचेत्यर्थः ॥

तेह समित्पाणयःपूर्वाह्णेप्रतिचक्रमिरे ॥

तेचराज्ञोभिप्रायज्ञाः समिद्भारहस्ताः अपरेद्युः पूर्वाह्णे राजानं शिष्यभावमेत्योपगतवन्तः ॥

तान्हानुपनीयैवैतदुवाच ॥

राजातुसमित्पाणीनुपयामेतिवदंतस्त्यक्तस्वजात्यभिमानानुद्वीक्ष्यतेषामुपदेशयोग्यतां ज्ञात्वाऽब्राह्मणेन नब्राह्मणउपनेतव्य इतिशास्त्रार्थं ज्ञात्वा समर्पितं समिदाद्युपायनं स्वीकृत्यैव मैत्र्येतद्वक्षमाणमुवाचेत्यर्थः । यत एवमहाशाला महाश्रोत्रिया ब्राह्मणा महाशालत्वाद्यभिमानं हित्वा समिद्भारहस्ता जातितोहीनं राजानं विद्यार्थितयोपजग्मुः।तथान्यैरपि विद्योपादित्सुभिर्भवितव्यमित्याख्यापिकया सूच्यते कैकेयस्तेभ्योवैश्वानरात्मानमुपदिदिक्षुर्विशेषप्रश्नान्यथानुपपत्त्यावैश्वानरात्मन्येतैः किंचिज्ज्ञातं किंचदज्ञातमिति विज्ञाय ज्ञाताज्ञातांशबुभुत्सया तानेकैकशः प्रष्टुमुपक्रमते ॥

औपमन्यव कंत्वमात्मानमुपास्स इति दिवमेवभगवोराजन्निति होवाच ॥

हेभगवः द्युलोकशरीरकं वैश्वानरमुपास इत्युवाचेत्यर्थः । कैकेय आह ॥

एषवै सुतेजा आत्मा वैश्वानरो यंत्वमात्मानमुपास्से ॥

यंद्युलोकावच्छिन्नं वैश्वानरमात्मानमुपास्स एषवैश्वानर आत्मा सुतेजाः शोभनं तेजो यस्य स सुतेजाद्युलोकोहिसूर्य्यचंद्रादितेजसा युक्ततया सुतेजा भवति ततश्चद्युलोकावच्छिन्नोवैश्वानरात्मा तयोपास्यमानः सुतेजस्त्वगुणयोगेन सुतेजानाम वैश्वानरः ॥

तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते ॥

अत्र सुतप्रसुतासुतशब्दा एकाहाहीनसत्रकर्मगताभिषवणपराः सुतशब्दवत्त्वसाम्यात्सुतेजस्त्वोपासनायाःसुतादिफलकत्वोपपत्तिः ॥

अत्स्यन्नं पश्यसि प्रियम् ॥

तदुपासनवैभवेन लौकिकं भोग्यमनुभवसि प्रियं पुत्रादिकं चपश्यसीत्यर्थः । एवमन्योपि यः कश्चित्त्वमिव त्वदुपास्यं वैश्वानरमुपास्ते। सोपि त्वमिवान्नादनप्रियदर्शनब्रह्मवर्चसशाली संतानवांश्चभवतीत्याह ॥

अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले यएतमेवमात्मानं वैश्वानरमुपास्ते ॥

उक्तोर्थः उक्तमर्थमंगीकुर्वन्नेवफलदर्शनेन तदभिमुखीकृत्य तत्र वक्तव्यमुपदिशति ॥

मूर्द्धात्वेष आत्मन इतिहोवाच मूर्द्धाते व्यपतिष्यद्यन्मां नागमिष्यइति ॥

त्वया वैश्वानरबुद्ध्योपास्यमान एष द्युलोकपरिच्छिन्न आत्मा वैश्वानरस्यात्मनो मूर्द्धरूपावयवभूतः। नतु सएववैश्वानर आत्मा एतदर्थनिर्णयार्थं मत्समीपानागमने वैश्वानरमूर्द्धावयवभूते कृत्स्नवैश्वानरबुद्धिं कुर्वतस्तवविपरीतविद्यावशादनर्थः स्यादतः साध्वकार्षीस्त्वं यतोमामागतोसीत्यभिप्रायः॥

अथहोवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्यकंत्वमात्मानमुपास्सइतिप्राचीनयोग्येति सत्ययज्ञस्य नामान्तरआदित्यमेवभगवो राजन्निति होवाच एष वैविश्वरूप आत्मा वैश्वानरो यंत्वमात्मानमुपास्से। तस्मात्तव विश्वरूपं कुले दृश्यते प्रवृत्तोऽश्वतरीरथोदासीनिष्कोऽत्स्यन्नंपश्यसि प्रियम्। अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानंवैश्वानरमुपास्ते चक्षुस्त्वेतदात्मन इति होवाच। अन्धोभविष्योयन्मांनागमिष्य इति॥

रूप्यत इतिरूपं विश्वंरूपं प्रकाश्यं यस्य सविश्वरूपः आदित्यस्य विश्वप्रकाशकत्वात् विश्वरूपत्वम्। तव कुले विश्वरूपं विश्वप्रकाशकं पुत्ररत्नादिकं कुले दृश्यते अश्वतरीभिर्युक्तोरथः त्वामनुगतः दासीभिर्युक्तोहारः दासीनिष्कः त्वामनुगतः शिष्टंपूर्ववत्॥

अथहोवाच इन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्यकंत्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाच एषवैपृथग्वर्त्मात्मा वैश्वानरो यंत्वमात्मानमुपास्से तस्मात्त्वां पृथग्वलय आयन्ति॥

पृथग्रथश्रेणयोऽनुयन्ति ॥

अत्स्यन्नंपश्यसिप्रियम् । अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त उदक्रमिष्यद्यन्मान्नागमिष्यइति । अथहोवाच जनं शार्कराक्ष्यंकत्वमात्मानमुपास्स इति आकाशमेव भगवोराजन्निति होवाच एषवै बहुल आत्मा वैश्वानरो यंत्वमात्मानमुपास्से तस्मात्त्वं बहुलोसि प्रजयाच धनेनच अत्स्यन्नं पश्यसि प्रियम् । अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले यएतमेवमात्मानंवैश्वानरमुपास्ते संदेहस्त्वेष आत्मन इतिहोवाच संदेहस्तेव्यशीर्यद्यन्मांनागमिष्यइति ॥

भूतांतरेभ्यआकाशस्य महत्वात् बहुलत्वम् । संदेहोमध्यकायोमध्येकायोहिउत्तराधरकाययोश्चानुप्रविष्टइति संदिह्यमानत्वात् संदेहइत्युच्यते । व्यशीर्यतविशीर्णोभविष्यत् । शिष्टं स्पष्टम् ॥

अथहोवाच बुडिलमाश्वतराश्विंवैयाघ्रपद्यकंत्वमात्मानमुपास्सइति अपराव भगवो राजन्नितिहोवाच एषवैरयिरात्मावैश्वानरोयं त्वमात्मानमुपास्से तस्मात्त्वंरैमान् पुष्टिमानत्स्यन्नं पश्यसिप्रियम् अत्त्यन्नं पश्यतिप्रियं भवत्यस्य ब्रह्मवर्चसं कुले यएतमेवमात्मानंवैश्वानरमुपास्ते बस्तिस्त्वेषआत्मानइतिहोवाच बस्तिस्तेविभेत्स्यद्यन्मांनागमिष्यइति ॥

अपांवेगवत्वात् रयित्वं विसर्गश्छांदसः धनप्राप्तिहेतुत्वाद्वारयित्वं रैमान् धनवानित्यर्थः । बस्तिनाममूत्रस्थानम् ॥

अथ होवाच उद्दालकमारुणिं गौतम कं त्वमात्मान मुपास्स इति पृथिवीमेव भगवोराजन्निति होवाच एष वैप्रतिष्ठात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं प्रतिष्ठितोसि प्रजयापशुभिश्च अत्स्यन्नं पश्यसि प्रियं अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एत मेवमात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नागमिष्य इति ॥

प्राण्याधारत्वात् पृथिव्याः प्रतिष्ठात्वं व्यम्लास्येतां म्लानौश्लथा वभविष्यताम् ।शिष्टंस्पष्टम् ॥

तान्होवाच ॥

तानृषीनुवाचेत्यर्थः ॥

एते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसो अन्नमत्थ ॥

तादृशा यूयमिमं वैश्वानरमात्मानं पृथगिव विद्वांसो भिन्नभिन्न तया उपासीना तदानुरूप्येण लौकिकं भोगमनुभवथ । पूर्वत्रात्स्य न्नमिति प्रतिपुरुष एकवचनेनोक्तस्य अत्र बहुवचनेन निर्देशः । अत्रान्नम थेत्येतत् प्रियंपश्यथेत्यस्याप्युपलक्षकम् ॥

यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते ससर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्म स्वन्नमत्ति ॥

अभिविमानं सर्वात्माभिव्याप्ततया विगतमानं विश्वेषां नराणां

नेतारमेतमात्मानं प्रादेशमात्रं द्युलोकादिप्रदेशसंबंधिनीप्रादेशीप्रा-
देशीमात्रा यस्य तंप्रादेशमात्रम्।द्युप्रभृतिप्रदेशपरिच्छिन्नं य उपास्ते
ससर्वलोकसर्वभूतसर्वात्मवर्ति ब्रह्मरूपमन्नमत्ति अनुभवतीत्यर्थः।
अनेन वैश्वानरोपासनस्य ब्रह्मप्राप्तिफलकत्वमुक्तं भवति । भगवता
भाष्यकृता सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु वर्तमानं यदन्नं
भोग्यं तदत्ति सर्वत्र वर्तमानं स्वत एवानवधिकातिशयानन्दं ब्रह्मा-
नुभवति । यत्तु सर्वैः कर्मवश्यैरात्मभिः प्रत्येकमनन्यसाधारणमन्नं
भुज्यते तन्मुमुक्षुभिस्त्याज्यत्वादिहनगृह्यते इतिभाषितम्। अत्र प्रा-
देशमात्रं ह्वैदेवाः सुविदिता अभिसंपन्ना तथात्वेतान्वक्ष्यामि यथा
प्रादेशमात्रमभिसंपादयिष्यामीति । सहोवाच मूर्द्धानमुपदिशन्नेषवा
प्रतिष्ठा वैश्वानर इति चक्षुषी उपादिशन्नुवाच।एषवै सुतेजा वैश्वानर
इति नाशिके उपदिशन्नुवाचैषवै पृथग्वत्मा वैश्वानर इति मुख्यमा-
काशमुपदिशन्नुवाच। एषवै बहुलो वैश्वानर इतिमुख्याश्रयउपादि-
शन्नुवाच एषवै रयिर्वैश्वानर इति चिबुकमुपदिशन्नुवाच एषवै प्रतिष्ठा
वैश्वानर इति वाजसनेयकोक्तमूर्द्धचिबुकांतरालप्रतिष्ठितत्वलभ्यप्रा-
देशमात्रत्वंनोपजीव्यम्[१]। द्युप्रभृतिप्रदेशसंबन्धमात्रस्य यौगिकार्थस्य
प्रकरणतः प्रतीतेः । उक्तंच व्यासाचार्यैः सर्ववेदान्तप्रत्ययाधिक-
रणे ३ । ३ । १ । यस्त्वेतमिति नवाजसनेयकोक्तानुवादः
स्वशाखावाक्य एव पूर्वप्रतिपादितस्यानुवादेन फलसमर्पकत्वोपप-
त्तेरिति । नचापरिच्छिन्नस्य परस्य ब्रह्मणो द्युप्रभृतिपृथिव्यंतप्रदे
शसंबंधिन्यामात्रया कथं परिच्छिन्नत्वमितिचोदनीयम्।परिच्छिन्नत्वे
बुद्धिसौकर्यलक्षणाभिव्यक्तेस्संभवात् । सूत्रितंचा " भिव्यक्तेरित्या-
स्मरथ्य १।२।३२ ॥" इतिबुद्धिसौकर्य्यलक्षणाभिव्यक्तेर्हेतोर
भिविमानस्यापि ब्रह्मणः प्रादेशमात्रत्वमुपदिश्यत इति आस्मरथ्य

१ अत्रेत्यस्योपजीव्येन्वयः ॥

आचार्योमन्यतइतिसूत्रार्थः । अभिव्यक्तार्थपरिच्छिन्नत्वोपदेशेपि मूर्द्धप्रभृत्यवयवविशेषैः पुरुषविधत्वं परस्य ब्रह्मणः किमर्थमिति नचोदनीयम् तथोपासनार्थत्वात् । सूत्रितंचा "नुस्मृतेर्बादरिः१ ।२। ३३ ॥" इति अनुस्मृतिरुपासनम् । अनुस्मृतेर्हेतोः पुरुषविधत्वरूपणमिति बादरिराचार्योमन्यतइतिसूत्रार्थः । प्राणाहुत्याधारत्वत्रिविधाग्नित्वपरिकल्पितजाठराग्निशरीरकद्युमूर्द्धत्वादिविशिष्टात्मत्वभाविते श्वरशरीरेक्रियमाणप्राणाद्याहुतिभिः वैश्वानरविद्यानिष्ठेन परमात्मा समाराधनीय इति प्रतिपादयति ॥

तस्य हवा एतस्यात्मनोवैश्वानरस्य मूर्द्धैवसुतेजा चक्षुर्विश्वरूपः प्राणं पृथग्वर्त्मासंदेहोबहुलो बस्तिरेवरयिः पृथिवी पादा उरएव वेदिर्लोमानि बर्हिर्हृदयंगार्हपत्योमनोन्वाहार्यपचन आस्यमाहवनीयः॥

एतस्योपासकस्यात्मनः मूर्द्धैव तस्य वैश्वानरस्य मूर्धात्वेष आत्मन इति वैश्वानरं मूर्द्धत्वेन निर्दिष्टस्सुतेजा इत्यर्थः । नचात्र तस्य हवा एतस्येति पदयोःसामानाधिकरण्यमेवास्तु । नत्वेतस्येति शब्दस्योपासकपरत्वमितिशंक्यम् उरएववेदिरित्यादावुपासकपरामर्शस्यावश्यंभावात् । मूर्द्धैवेत्यत्राप्युपासकस्य मूर्द्धैव परामृश्यते । तस्मादेतस्येति शब्दस्योपासकपरत्वमेवासिद्धम् । इह भगवता भाष्यकृता "आमनंतिच १ । २ । ३९॥" इति सूत्रव्याख्याने । एनंपुरुषद्युमूर्द्धत्वादिविशिष्टं वैश्वानरमास्मिन्नुपासकशरीरे प्राणाहुत्याधारत्वाय आमनन्ति तस्य हवा एतस्यात्मनोवैश्वानरस्य मूर्द्धैव सुतेजाइत्यादिना । अयमर्थः यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानंवैश्वानरमुपास्त इति त्रैलोक्यशरीरस्यैव परमात्मनो वैश्वानरस्योपासनं विधाय सर्वेषु लोकेषु इत्यादिना ब्रह्मप्राप्तिलक्षणं फलमुपदि-

इयास्यैवोपासनस्यांगभूतं प्राणाग्निहोत्रं तस्य हवाएतस्येत्यादिनोपदिशति । यः पूर्वमुपास्यतयोपदिष्टोवैश्वानरः तस्यावयवभूतान् द्व्यादित्यादीन् सुतेजोविश्वरूपादिनामधेयानुपासकशरीरेमूर्द्धादिपादांतेषु संपादयति । मूर्द्धैव सुतेजा उपासकस्यमूर्द्धैव परमात्ममूर्द्धभूतं द्यौरित्यर्थः । चक्षुर्विश्वरूप आदित्य इत्यर्थः । प्राणःपृथग्वर्त्मा वायुरित्यर्थः । संदेहोबहुलःउपासकस्य मध्यकाय एव परमात्ममध्यकायभूत आकाशइत्यर्थः । पृथिव्येव पादौ अस्य पादावेव तत्पादभूता पृथिवीत्यर्थः । एवमुपासकः स्वशरीरेपरमात्मानं त्रैलोक्यशरीरं वैश्वानरं संनिहितमनुसन्धाय स्वकीयान्युरोलोमहृदयमनआस्यानि प्राणाहुत्याधारस्य परमात्मनो वैश्वानरस्य वेदिर्बर्हिर्गार्हपत्यान्वाहार्यपचनाहवनीयानग्निहोत्रोपकरणभूतान् परिकल्प्य प्राणाहुतेश्चाग्निहोत्रत्वं परिकल्प्य एवं विधेन प्राणाग्निहोत्रेण परमात्मानं वैश्वानरमाराधयेदिति उरएववेदिर्लोमानिबर्हिर्हृदयंगार्हपत्य इत्यादिनोपदिश्यते इतिभाषितम् । उरःप्रभृतीनां वेद्यादित्वोपदेशश्च प्राणाहुतेरग्निहोत्रत्वसंपत्त्यर्थइति संपत्तेरितिजैमिनिस्तथाहिदर्शयति १ । २ । ३४ ॥ इतिसूत्रितम् । सय इदंविद्वानग्निहोत्रं जुहोतीतिदर्शिताग्निहोत्रसंपत्तेर्हेतोर्वेद्यादित्वोपदेश इतिजैमिनिर्मन्यते इतिसूत्रार्थः । हृदयंगार्हपत्यःहृदयकमलावच्छिन्नजाठराग्निर्गार्हपत्यः । मनइन्द्रियावच्छिन्नजाठराग्निर्दक्षणाग्निः आस्यमाहवनीयः आस्यावच्छिन्नजाठराग्निराहवनीयइत्यर्थः । गार्हपत्यादिपरिकल्पनस्य सजातीयजाठरएवोचितत्वात् । वैश्वानरस्य हृदयादिस्थस्याग्निहोत्रत्रयकल्पनंक्रियतइतिभाषितत्वाच्च । अत्रचहृदयादिशब्दास्तत्तदवच्छिन्नजाठराग्निशरीरकपरमात्मपर्यंताइतिद्रष्टव्यमतउक्तएवार्थः ॥

तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम् ॥

होमसाधनं तेन होतव्यमित्यर्थः ।

सयां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणायस्वाहेति प्राणस्तृप्यति प्राणेतृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यतिआदित्येतृप्यतिद्यौस्तृप्यति दिवितृप्यंत्यांयत्किंचिद्यौश्चादित्यश्चाधितिष्ठतः तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजयापशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥

प्राणायस्वाहेति प्रथमायामाहुतौ हुतायां प्राणश्चक्षुरादित्यो द्यौश्च तृप्यतिद्यादित्याभ्यामधिष्ठितं वस्तुजातंच तृप्यतीत्यर्थः । तस्मिन्सर्वस्मिन् तृप्ते तत्तृप्तिमनुप्रजायश्वादिभिर्होतापितृप्यतीत्यर्थः । अत्र प्राणचक्षुरादिशब्दाः तदभिमानिदेवतापराः । अचेतनानांतृप्तेरसंभवादिति । एवमुत्तरत्रापिद्रष्टव्यम् ॥

अथ यां द्वितीयांजुहुयात्तांजुहुयाद्व्यानायस्वाहा ॥

इत्यादिखण्डचतुष्टयम् ॥

सयइदमविद्वानग्निहोत्रंजुहोति ॥

उरः प्रभृतीनामग्निहोत्रोपकरणवेद्यादिनामजानन् यः प्राणाग्निहोत्रमनुतिष्ठतीत्यर्थः ॥

यथांगारानपोह्यभस्मनिजुहुयात्तादृग् तत्स्यात् ॥

भस्माहुतिसमानंस्यादित्यर्थः । निष्फलमिति यावत् ॥

अथय एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥

सर्वात्मकभगवदाराधनेन सर्वमाराधितं भवतीति हुतप्रकर्षोक्तिः॥

तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पा-

प्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति ॥

यथैषीकायामुजांतर्वर्तितृणविशेषस्य तूलमग्नौ प्रक्षिप्तं सद्योद्-द्धत एवं सर्वाणि पापानि एतादृशविद्यापूर्वकप्राणाग्निहोत्रानुष्ठानेन दग्धानि भवंतीत्यर्थः। ब्रह्मोपासनफलस्य सर्वपापप्रदाहस्य प्राणा-ग्निहोत्रे कीर्तनमंगिफलेनांगस्य स्तुत्यर्थम् । ततश्चानेनापिप्राणाग्नि होत्रस्य वैश्वानरविद्यांगत्वं ज्ञापितं भवति। वैश्वानरविद्यां स्तौति ॥

तस्मादुहैवं विद्यद्यपि चण्डालायोच्छिष्टंप्रयच्छेत्। आत्मनि हैवास्य तद्वैश्वानरे हुतं स्यादिति ॥

उच्छिष्टप्रदानायोग्यचांडालाय उच्छिष्टप्रदानमपि वैश्वानरे सर्वभूतात्मनि अन्नंजुहोमीति बुद्ध्यानुष्ठितत्वान्नाधर्मायभवतीत्यर्थः।

तदेषश्लोकः। यथेहक्षुधिताबालामातरं पर्य्युपासते। एवं सर्वाणि भूतान्यग्निहोत्रमुपासते इति । अग्नि होत्रमुपासत इति ॥

यथा बुभुक्षिता बालाः कदा मातान्नं प्रयच्छतीति मातरं परितः उपासते । एवं सर्वाणि भूतानि एवंविधप्राणाग्निहोत्रमुपासते । इति विदुषः प्राणाग्निहोत्रस्तुत्यर्थः श्लोक इत्यर्थः । द्विरुक्तिरध्याय परिसमाप्त्यर्था ॥

इति विषयवाक्यदीपिकायां ब्रह्मसूत्रेषु द्वितीयः पादः ॥ २ ॥

---

द्युभ्वाद्यायतनं स्वशब्दात्। १। ३। १ ॥

मुण्डकोपनिषदि द्वितीय मुण्डके द्वितीयखण्डे ॥

यस्मिन् द्यौश्च पृथिवीचांतरिक्षमोतं मनः सहप्रा-णैश्च सर्वैस्तमेवैकं जानथात्मानमन्या वाचो विमुंचथ अमृतस्यैषसेतुः ॥

यस्मिन्नक्षरे द्युपृथिव्यंतरिक्षमनःप्राणादिकं समवेतं तमेव स्वेतरसमस्तनियंतृत्वेन व्यापकतयात्मानं जानीत अनात्मविषयावाचः त्यजत अमृतस्यैष सेतुं नद्यादिषु सेतुर्हिकूलस्यप्रतिलभकः इव संसारार्णवपारभूतस्यामृतस्यैष प्रतिलंभकइत्यर्थः ॥

अरा इव नाभौसंहता यत्र नाड्यः सएषोंतश्चरते बहुधाजायमानः ॥

संततं शिराभिस्तु लंबत्याकोशसन्निभमित्युक्तरीत्या यत्र हृदये रथनाभौ समर्पिता अराइव नाड्यः संगताः तत्र मध्ये सएष प्रकृत आत्मा "अजायमानो बहुधाविजायते तस्यधीराः परिजानन्तियोनिम्"इति । देवादीनां समाश्रयणीयत्वाय तत्तत्सजातीयस्वरूपसंस्थानगुणकर्मसमन्वितः । स्वस्वभावमजहदेव स्वेच्छया बहुधा जायमानः सञ्चरते वर्ततइत्यर्थः ॥

ओमित्येवं ध्यायथ आत्मानम् ॥

स्पष्टोर्थः ॥

स्वस्तिवः पारायतमसः परस्तात् ॥

तमसः पारे वर्तमानाय वः पाराय परतीराय । पारावारेपरार्वाचीतिनैघंटुकाः । प्राप्यभूतायेतियावत् । तत्प्राप्तयेध्यायथेत्यन्वयः । एवंध्यानायप्रवृत्तेभ्योयुष्मभ्यं स्वस्तिभवतु ॥

यः सर्वज्ञः सर्ववित् ॥

उक्तोर्थः ॥

यस्यैष महिमाभुवि ॥

भूलोकेसंसारतन्त्रप्रवर्तनरूप एवमहिमायदीयः ॥

दिव्ये ब्रह्मपुरेह्येष व्योमन्यात्मा प्रतिष्ठितः ॥

यस्यैष महिमाभुवीति लीलाविभूत्यन्वयउक्तः । दिव्येव्योम्नीति

त्रिपादविभूतिरुक्तेतिव्यासार्यैरुक्तत्वात् । वैकुंठाख्ये ब्रह्मपुरेपरमे व्योमनि अयमात्मा प्रतिष्ठितइत्यर्थः ॥

भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः ।
क्षीयंतेचास्यकर्माणि तस्मिन् दृष्टेपरावरे ॥

हृदयस्यांतःकरणस्य ग्रंथयः ग्रंथिवद्दुर्मोचाः रागद्वेषादयः । हृत्स्थानमयतइतिव्युत्पत्त्या हृदयशब्दितो जीवोवा ब्रह्मज्ञानेन सार्वज्ञसिद्धेः सर्वविषयकाः संशयाः नश्यंतीति । अस्यच प्रारब्धव्यतिरिक्तानि पूर्वाण्यनेकभवार्जितानि च कर्माणिनश्यन्ति । नाशोनाम । कर्मणां फलजननशक्तिविनाशः । तदधिगमउत्तरपूर्वाघयोः ४ । १ । १३ ॥ इतिसूत्रे । अघस्य विनाशकरणमुपन्नायास्तच्छक्तेर्विनाशकरणं शक्तिर्हिपरमपुरुषाप्रीतिरेवेतिभाषितम् । एतत्सर्वं कदेत्यत्राह। तस्मिन्दृष्टे परावरे । परेऽवरेयस्मात् सपरावरः सर्वोत्कृष्टाअपिब्रह्मादयो यस्मान्निकृष्टाइत्यर्थः । अथवा परावरे परावरशरीरके सर्वात्मभूतइत्यर्थः । तादृशे तस्मिन् दर्शनसमानाकारज्ञानविषयीकृतइत्यर्थः ॥

द्वा[१]सुपर्णा सयुजा सखाया समानंवृक्षं परिषस्वजाते॥

युज्यत इति युक् युक्शब्दोगुणपरः । समानगुणकः सयुक्इति व्यासार्यैर्विवृतत्वात् । सयुजा समानगुणकौ सखाया अपहतपाप्मत्वादिगुणैः परस्परसमानौ द्वौ सुपर्णौ पक्षिसदृशौ समानमेकंवृक्षवच्छेदनार्हं शरीरं समाश्रितावित्यर्थः ॥

तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्न्योभिचाकशीति ।

तयोर्मध्ये अन्यतरोजीवः स्वादुपरिपक्वं पिप्पलं कर्मफलं भुंक्ते ।

---

१ उपबृंहिताचैषाश्रुतिःश्रीमद्भागवतैकादशस्कंधे श्रीशुकमुनिभिः सुपर्णावेतौ सदृशौ सखायौ यदृच्छयैतौ कृतनीडौ च वृक्षे ॥ एकस्तयोः खादति पिप्पलान्नं सपिप्पलादोनतु पिप्पलादः इति ॥

अन्यस्तु परमात्मा अभुंजान एव प्रकाशते । अत्र शरीरतदाश्रयजीवपरादिविषयवाचकशब्दनिगरणेन विषयिवाचकवृक्षसुपर्णादिशब्दैर्वृक्षत्वाद्यध्यवसानविषयनिगरणेन विषयव्यध्यवसानलक्षणरूपकातिशयोक्तिविच्छित्तिविशेषायेतिद्रष्टव्यम् ॥

समाने वृक्षे पुरुषोऽनिमानोनीशया शोचति मुह्यमानः ॥

अनीशया भोग्यभूतया प्रकृत्या मुह्यमानः 'पराभिध्यानात्तु तिरोहितंततोह्यस्यबंधविपर्ययौ । ३ । ३ । ४ ॥ देहयोगाद्वासोपि । ३। २ । ५ ॥' इति न्यायेन तिरोहितपरमात्मशेषत्वज्ञानानन्दलक्षणस्वरूपः सन् वृक्ष इव च्छेदनार्हे एकस्मिन् शरीरे जीवः स्थूलोहंकृशोहमित्यादितादात्म्यबुद्ध्यापांसूदकवत् तदेकतामापन्नःसन् तत्संसर्गकृतानि दुःखान्यनुभवतीत्यर्थः ॥

जुष्टं पदापश्यत्यन्यमीशमस्य महिमानमितिवीतशोकः ॥

इति शब्दोबुद्धिस्थप्रकारवचनः । चशब्दश्चाध्याहर्तव्यः । य असौजीवो निमग्नात्स्वस्माद्धारकत्वनियंतृत्वशेषित्वादिनाविलक्षणंस्वकर्मभिः प्रीतं परमात्मानं निखिलजगदीशनलक्षणमस्य महिमानं च यदापश्यति तदावीतशोकोभवतीत्यर्थः ॥

यद्वापश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् तदाविद्वान् पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति ॥

पश्यतीति पश्यः पाघ्राध्माधेट्दृशःशः । ३ । १ । १३७ ॥ इति शप्रत्ययेशित्वात् पश्यादेशः । यस्मिन् काले आदित्यवर्णं तमसः परस्तात् हिरण्यश्मश्रुर्हिरण्यकेश इत्युक्तरीत्यादेदीप्यमानादिव्य-

मंगलविग्रहयुक्तं जगत्कर्तारं जगदीशितारं तस्मादेतद्ब्रह्मेतिनिर्दिष्टाव्याकृतब्रह्मोपादानभूतम् । "भगवानितिशब्दोयं तथापुरुष इत्यपि। निरुपाधीचवर्तेते वासुदेवे सनातने" इत्युक्तरीत्या पुरुषशब्दनिर्दिष्टं वासुदेवं यदापश्यति तदापुण्यपापेनिरस्य निरस्तप्रकृतिलेपः सन् अपहतपात्मत्वादिगुणाष्टकलक्षणेन ब्राह्मेण रूपेण परमंसाम्यमुपैतीत्यर्थः। व्यासार्यैस्तु षष्ठीतत्पुरुषे लक्षणाप्रसंगात् योनिं ब्रह्मेति योनिब्रह्मशब्दयोः सामानाधिकरण्यं युक्तमित्युक्तं तदतिसुंदरम् ॥

## प्राणोह्येषः सर्वभूतैर्विभाति ॥

"सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ती" त्यादाविवप्राणशब्दः परमात्मपरः एष परमात्मा सर्वभूतैराश्रितोभवतीत्यर्थः ॥

## विजानन् विद्वान् भव तेनातिवादी ॥

भवेति लोण्मध्यमैकवचनं श्रवणमननाभ्यां विजानन् विद्वान् तमुपासीनः तेन परमात्मना अतिवादीभवेतिशिष्यंप्रत्युपदेशः। अतीत्यसर्वान् वदितुं शीलमस्येति सोतिवादी यस्तुस्वोपास्यदेवतायाः सर्वातिशायित्वं वदति सोतिवादीत्युच्यते ॥

## आत्मक्रीड आत्मरतिः क्रियावानेषः ब्रह्मविदां वरिष्ठः ॥

यस्यक्रीडाआत्मन्येवनोद्यानादौ सआत्मक्रीडः यस्यरतिःआत्मन्येवनस्रक्चन्दनादौ सआत्मरतिः रतिः स्रक्चन्दनादिजन्याप्रीतिः क्रीडाउद्यानादिजन्येति भूमाधिकरणे ।१।३।७॥ व्यासार्यैरुक्तत्वात्। क्रियावान् अनभिसंहितफलक्रियानुष्ठानशाली च भवेति पूर्वेणान्वयः। क्रियावत्वंकिमर्थमित्यत्राह । एषः ब्रह्मविदांवरिष्ठः

क्रिययाह्यंतःकरणे परिशुद्धे ब्रह्मविद्यानिष्पत्तिशैघ्यात् ब्रह्मविद्यानिष्ठइत्यर्थः ॥

**सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येणनित्यम् । अंतः शरीरे ज्योतिर्मयो हिशुभ्रो यंपश्यंति यतयः क्षीणदोषाः ॥**

रागादिदोषशून्या जितेन्द्रियाः यंपश्यंति सशरीरांतर्वर्ति ज्ञानमयोनिर्दोष आत्मा "मनसश्चेन्द्रियाणांचैकाग्र्यंपरमंतप" इत्युक्तेः बाह्याभ्यंतरैरिन्द्रियैकाग्र्यलक्षणतपसा आगमोत्थज्ञानेनच स्त्रीसंगादिराहित्यलक्षणनित्यब्रह्मचर्येण च लभ्यः साक्षात्कर्तव्यः । उपासनद्वाराप्राप्यइतिवार्थः ॥

**न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसाकर्मणावा ॥**

देवाइंद्रियाणि शिष्टंस्पष्टम् ॥

**ज्ञानप्रसादेन विशुद्धसत्वस्ततस्तुतं पश्यति निष्फलं ध्यायमानः ॥**

सनोदेवःशुभयास्मृत्या संयुनक्तीति ज्ञानहेतुत्वेन ज्ञानशब्देन परमात्मोच्यते । उपासीनः पुमान् तत्प्रसादेन विशुद्धांतःकरणः । तदनन्तरं दर्शनसमानाकारज्ञानेन तं विषयीकरोतीत्यर्थः । "नायमात्माप्रवचनेन" इति मंत्रः कठवल्यामेव व्याकृतः ॥

**नायमात्मा बलहीनेन लभ्यो नचप्रमादात्तपसो वाप्यलिंगात् ॥**

अयमात्मा अवसन्नमनसा न लभ्यः अवसादो नाम देशकालवैगुण्यजं दैन्यं तदभावोहिबलं प्रमादः अनवहितचित्तता तपःशब्दः

तपःप्रधानसंन्यासाश्रमपरः तपएवद्वितीय इतिवत् तस्य च लिङ्ग शिखा[1]यज्ञोपवीतव्रतादि। हितात्संन्यासादपि न लभ्यः इत्यर्थः। इदं आश्रमांतराणामप्युपलक्षणम्। सर्वाश्रमाणामपि ब्रह्मविद्याधिकारात्। आश्रमलिङ्गान्यपेक्षितानीत्यर्थः ॥

**एतैरुपायैर्यततेयस्तु विद्वांस्तस्यैष आत्मा विशति ब्रह्मधाम ॥**

उक्तैर्बलाप्रमादसलिङ्गाश्रमैः योविद्वान् ब्रह्मप्राप्तये यतते तस्यैताद्दृशमात्मस्वरूपं धामभूतं ब्रह्म विशति प्राप्नोतीत्यर्थः ॥

**यथानद्यः स्यंदमानाः समुद्रेऽस्तंगच्छति नामरूपे विहाय ॥**

यथा गंगायमुनासरस्वत्यादिनद्यः। स्वोत्पत्तिस्थानेभ्यः प्रवृत्ताः गङ्गायमुनादीनि नामानि शुक्लकृष्णादीनि च रूपाणि विहाय एकतामेव भजन्ते ॥

**तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥**

तद्वदेवभेदकनामरूपादिविमुक्तः सन् अक्षरात्परतः परइति पूर्व-

---

१ ननु शिखायज्ञोपवीतादिकं नसंन्यासलिंगमिति चेन्न। ताद्दशोक्तौ प्रमाणाभावात्। "अथ परिव्राड्विवर्णवासाः मुंडोऽपरिग्रहः" इति जाबालश्रुतिरस्तीतिचेत् एवंतर्ह्येकदंडस्यात्रानुक्तेः सोपिलिंगंनस्यात् "एकंवैणवं दंडमेकशाटीधरोवा" इति संन्यासोपनिषदुक्तमस्तीतिचेत् तर्हितस्यामेवोपनिषदि "कुटीचकः शिखायज्ञोपवीती" एकतान्नादनपरः "श्वेतोर्ध्वपुंड्रधारीत्रिदंडः" इति श्रूयतएवेति संतुष्यताम्। किंच तत्रैव "पवित्रं स्नानं शाटीं च उत्तरासंगत्रिदंडकम्। अतोतिरिक्तंयत् किंचित्तत्सर्वंवर्जयेद्यतिः" इत्यपिश्रूयते "सर्वभूतहितः शांतस्त्रिदंडीसकमंडलुः। एकारामः परिव्रज्यभिक्षार्थी ग्राममाश्रयेत्"। ३। ५८ इति याज्ञवल्क्यस्मृतौ। तत्रमिताक्षरायामपिविस्तरः "शिखीदंडीकुसुंभवान्" इति श्रीरामायणे अरण्यकांडे "त्रिदंडीद्वारकामगात्" इत्यादिश्रीभागवतेच प्रयोग दर्शनात् त्रिदंडशिखायज्ञोपवीतोर्ध्वपुंड्रादिकं संन्यासिनां लिंगमितिस्फुटमवगम्यते। एवं च छांदोग्यद्वितीयाध्यायत्रयोविंशखंडे "त्रयोधर्मस्कंधाः" इतिश्रुतिव्याख्याने मुंडित्वादिकमेवसंन्यासलक्षणमित्येतत्परं श्रीशांकरभाष्यं प्रौढिवादमात्रपरमितिद्रष्टव्यम् ॥

मंत्रनिर्दिष्टं पुरुषं प्राप्नोतीत्यर्थः । यथा नदीसमुद्रजलयोर्भेदकाकारप्रहाणमेवनस्वरूपैक्यम् । एवं इहापि शुद्धे शुद्धमाशिक्तंतादृशेवभवतीत्यादिश्रुत्यनुरोधात् । भेदकाकारप्रहाणकृतसादृश्यमेव नत्वैक्यमितिद्रष्टव्यम् ॥

सयोहवै तद्वत् परमं ब्रह्म वेदब्रह्मैवभवति ॥

आविर्भूतब्रह्मस्वरूपो भवतीत्यर्थः । आनुषंगिकप्रयोजनमाह ॥

नास्याब्रह्मवित्कुलेभवति ॥

ब्रह्मभावमेवाह ॥

तरतिशोकं तरतिपाप्मानं गुहाग्रंथिभ्यो विमुक्तो मृतोभवति ॥

त्रिगुणात्मकप्रकृतिरूपगुहाकारितरागादिग्रन्थिभ्योमुक्तः सन् अमृतशब्दितब्रह्मभूतो भवतीत्यर्थः ॥

तदेतदृचाभ्युक्तम् ॥

एवंद्विधासंप्रसिद्धमभिमुखीकृत्यऋङ्मंत्रेणोक्तम् ॥

क्रियावन्तः श्रोत्रियाब्रह्मनिष्ठाः स्वयंजुह्वतएकऋषिंश्रद्धयन्तः ॥

नित्यनैमित्तिकक्रियायुक्ता अधीतवेदा ब्रह्मबुभुत्सवः । अग्निहोत्रं स्वयमेवकुर्वन्तः एकऋषिमुख्यंऋषिपरमात्मानं श्रद्धयन्तः तत्र रक्षकत्वविश्वासशालिनोये ॥

तेषामेवैतांब्रह्मविद्यांवदेतदानशिरोव्रतंविधिवद्यैस्तुचीर्णम् ॥

अत्र विद्याशब्दोग्रन्थसंदर्भेवर्तते यैः शिरस्यङ्गारपात्रधारणलक्षणम् । आथर्वणिकानुष्ठेयं शिरोव्रतनामकं व्रतं चीर्णं तेषामेवेमामुपनिषदमध्यापयेदित्यर्थः ॥

तदेतत्सत्यमृषिरंगिराः पुरोवाच ॥

एतत्सत्यमक्षरमंगिराऋषिः शौनकायप्रोवाच ॥

नैतदचीर्णव्रतोधीते ॥

इदमचीर्णव्रतस्याध्ययन निषेधपरं पूर्ववाक्यमध्ययननिषेधपरम् । अतोनपौनरुक्त्यम् एतत्सर्वं "स्वाध्यायस्य तथात्वेहि । ३ । ३ ।३॥" इतिसूत्रभाष्येस्पष्टम् अत्रावगन्तव्यं सर्वंमुंडकप्रकाशिकायामवगंतव्यम् ॥

भूमासंप्रसादादध्युपदेशात् । १ । ३७ ॥

छांदोग्ये । सप्तमाध्यायोपक्रमे भूमविद्याव्याख्यायते ॥

अधीहिभगवइतिहोपससादसनत्कुमारंनारदः ॥

सनत्कुमारंनारदोविधिवदुपसन्नः तं ॥

होवाचयद्वेत्थतेनमोपसीद ततस्तऊर्ध्वंवक्ष्यामीति॥

ज्ञातांशमुक्त्वामत्समीपउपसीद तच्छ्रुत्वा अज्ञातांशंतेवदिष्यामीत्युक्तवानित्यर्थः ॥

सहोवाचऋग्वेदंभगवोध्येमियजुर्वेदंसामवेदमाथर्वणंचतुर्थमितिहासंपुराणं पंचमंवेदानांवेदंपित्र्यंराशिंदैवंनिधिंवाकोवाक्यमेकायनंदेवविद्यांब्रह्मविद्यांभूतविद्यांक्षत्रविद्यांनक्षत्रविद्यांसर्पदेवजनविद्यामेतद्भगवोध्येमिसोहंभगवोमंत्रविदेवास्मिनात्मवित् ॥

मंत्रवित् मंत्रप्रधानंकर्मविदेवास्मि नात्मविदित्यर्थः ॥

श्रुतंह्येवमेभगवद्दृशेभ्यस्तरति शोकमात्मविदिति साहंभगवःशोचामितंमाभगवान् शोकस्यपारंतारयत्विति ॥

भवादृशेभ्यः आत्मवित् शोकंतरतीतिमयाश्रुतमतआत्मानमुपदिश्यतंशोकंतारयत्वित्यर्थः ॥

तꣳहोवाचयद्वैकिंचैतदध्यगीष्ठा नामैवैतन्नामवाऋग्वेदोयजुर्वेदइत्यादिः ॥

अध्यगीष्ठा अधीतवानसीत्यर्थः ॥

नामोपास्वसयोनामब्रह्मेत्युपास्तेयावन्नाम्नोगतंतत्रास्य यथा कामचारोभवति सयोनामब्रह्मेत्युपास्ते ॥

नामात्मकशब्दोयावदिहलोकेनुवर्तंतेतावत्पर्यंतं नाम्निनिरातिशयलक्षणातिशयबृहल्लक्षणब्रह्मत्वेआत्मत्वेचश्रद्धामलभमानः चारोभवतीत्यर्थः । संपृच्छति ॥

अस्तिभगवोनाम्नोभूयइति ॥

इतराह ॥

नाम्नोवावभूयोस्तीति ॥

इतराह ॥

तन्मेभगवन्ब्रवीतीति ॥

इतराह ॥

वाग्वावनाम्नोभूयसीति ॥

एवंप्रश्नप्रतिवचनरूपेणवाङ्मनःसंकल्पचित्तध्यानविज्ञानबलान्नजलतेजआकाशस्मराशापर्यंतमुपन्यस्याह ॥

प्राणोवाचआशायाभूयान् ॥

अत्रप्राणशब्देनप्राणसहचारीजीवोलक्ष्यते तस्यचहेतुरुत्तरत्रवक्ष्यते ॥

यथावाअरानाभौसमर्पिताएवमस्मिन्प्राणेसर्वंसमर्पितम् ॥

यथारथचक्रस्यारानाभ्याश्रिताः एवंसमस्त चेतनभूतजातमेतच्चे-तनाश्रितमित्यर्थः । "भूतमात्राप्रज्ञामात्रास्वर्पिता" इतिश्रुत्यंतरात् ॥

प्राणःप्राणेनयातिप्राणःप्राणंददातिप्राणायददाति ॥

गंतादेवदत्तादिरपिजीवएवगमनकरणभूतोश्वादिरपिजीवएवदातापि जीवएवदेयोगवादिरपिजीवएवसंप्रदानभूतोब्राह्मणादिरपिजीवएवेत्यर्थः ॥

प्राणोहपिताप्राणोमाताप्राणोभ्राताप्राणःस्वसाप्राण-आचार्यःप्राणोब्राह्मणः ॥

पित्रादिरपिजीव एवेत्यर्थः । ननुपरिदृश्यमानमांसपिंडविशेषाएवपित्रादिशब्दवाच्याः नजीवइतिमन्यमानंप्रत्याह ॥

सपदिपितरंवामातरंवाभ्रातरंवास्वसारंवाआचार्यंवाब्राह्मणंवाकिंचिद्भृशमिवप्रत्याहधिक्त्वास्त्वित्येवैनमाहुः पितृहावैत्वमसिमातृहावैभ्रातृहावैत्वमसिस्वसृहावैत्वमस्याचार्यहावैत्वमसिब्राह्मणहावैत्वमसीति । अथपद्येनाक्रान्तप्राणान्शूलेनसमासंव्यतिसंदहेन्नैवैनंब्रूयुः पितृहासीतिनमातृहासीतिनस्वसृहासीतिनाचार्यहासीतिनब्राह्मणहासीतिप्राणोह्येवैतानिसर्वाणिभवंति॥

सजीवेषुपित्रादिशरीरेषुधिक्त्वामितिर्किंचिद्भृशमधिक्षिपतिपुरुषेधिक्त्वामित्युक्त्वापितृहेत्यादिशब्दान् प्रयुंजतेतेष्वेवशरीरेषूत्क्रांतजीवेषुशूलेनसमासमितिसंपूर्वात्क्षेपार्थात् अस्यतेर्णमुलंतोयंशब्दः । शूलेनसम्यक्प्रक्षिप्यसम्यग्दाहकेपिपुरुषेपितृहेत्यादिशब्दाप्रयोगात् निर्जीवस्यशरीरस्यपित्रादित्वाभावस्यसिद्धत्वात् जीवएवपित्रादिर्भवतीत्यर्थः॥भगवताभाष्यकृताप्राणशब्दनिर्दिष्टप्राणसहचारीप्रत्यगात्मैवनवायुविशेषमात्रंप्राणोहपिताप्राणोहमातेत्येवमादयः प्राणस्य

चेतनतामवगमयंति पितृहामातृहेत्यादिनासप्राणेषुपितृप्रभृतिषूपमर्द कारिणिहिंसकत्वादिनिमित्तोपक्रोशवचनात्तेष्वेवविगतप्राणेष्वत्यन्तोपमर्दकारिण्यप्युपक्रोशाभावाच्चहिंसायोग्यश्चेतनएवप्राणशब्दनिर्दिष्टःअप्राणेषुस्थावरेष्वपिचेतनेपूपमर्दभावाभावयोर्हिंसातदभावदर्शनात्हिंसायोग्यतयानिर्दिष्टःप्राणः प्रत्यगात्मैवेतिनिश्चीयते अतएव चारनाभिदृष्टांताद्युपन्यासेन प्राणशब्दनिर्दिष्टः परइतिनभ्रमितव्यंपरस्यहिंसाप्रसंगाभावात् जीवादितरस्यभोग्यभोगोपकरणस्यकृत्स्नस्याचिद्वस्तुनोजीवायत्तस्थितित्वेनप्रत्यगात्मन्येवारनाभिदृष्टांतोपपत्तेश्चेतिभाषितम् यद्यपि "नायंहंतिनहन्यते" इतिनिर्दिष्टस्यजीवस्यस्वतोहिंसायोग्यत्वाभावेनदेहादिसाहित्यप्रयुक्तहिंस्यत्ववन्मुख्यप्राणस्यापिहिंस्यत्वंसुवचम् । स्थावरहिंसास्थलेपि "भेदश्रुतेर्वैलक्षण्याच्च ।२।४।१६।।" इतिसूत्रभाष्योक्तरीत्यास्थावरेषुप्राणस्यपंचधावस्थायशरीरधारणस्याभावेपिप्राणसद्भावोस्तीति "नतुदृष्टांतभावात् । २ । १ । ९ ।। " इतिसूत्रेभाषितत्त्वेनप्राणस्यसद्भावाद्धिंसावचनमुपपद्यतएव तथापिप्राणोहपितेत्यादिवाक्यनिर्दिष्टानांजीववाचितयालोकेप्रसिद्धानांबहूनांपित्रादिशब्दानांगौणत्वकल्पनापेक्षयाएकस्यप्राणशब्दस्यैवजीववाचित्वमाश्रयणीयमितिभाष्यकाराभिप्रायः। अतएव वृत्तिकृता भगवताबोधायनेनापि "भूमासंप्रसादादध्युपदेशात् ।१ । ३ । ७।।" इति सूत्रव्याख्याने प्रत्यगात्मन ऊर्ध्वमुपदेशादित्येवोक्तं नतुमुख्यप्राणादूर्ध्वमिति । वेदनाजनकव्यापारलक्षणहिंसायावेदनाशून्ये अचेतन असंभवाच्च ॥

सवाएष एवं पश्यन्नेवं मन्वान एवं विजानन्नति वादी भवति ॥

पूर्ववाक्ये प्राणशब्दनिर्दिष्टः सवा एष जीवः स्वात्मानमुक्तेन

प्रकारेण मन्वानः अनेन प्रकारेण विजानन्नुपासीनः तेन प्रकारेण पश्यन् साक्षात्कुर्वन्नतिवादी भवति । अतिक्रांतस्वोपास्यवस्तुवादी भवति स्वोपास्यवस्तुनः सर्वोत्कृष्टत्ववादी भवतीत्यर्थः । बृहस्पति समप्रत्यर्थिजनाप्रतिबाध्यस्वोपास्यदेवतायारम्यशीलत्वमतिवादित्वम् । तस्योपास्यदेवतातिशये पर्यवस्यति । " एवं पश्यन्नेवं मन्वानः " इत्यादौ " लक्षण हेतोः क्रियायाः ३ । २ । १२६ ॥" इति हेत्वर्थे शतृप्रत्ययः । ततश्च स्वोपास्यदेवतासाक्षात्कारोतिवादित्वे हेतुरित्यर्थः । साक्षात्कारप्रीतस्वोपास्यदेवतानुग्रहादीदृशमतिवादित्वं भवतीतिभावः । अत्र " स वा एष एवं पश्यन्नेवं मन्वानः " इति वाक्येन पूर्वसंदर्भनिर्दिष्टप्राणस्य द्रष्टृत्वमन्तृत्वकथनादपि प्राणशब्दनिर्दिष्टो जीव इत्यवसीयते । प्राणशब्दनिर्दिष्टस्य जीवत्वज्ञापनायैव हि स वा एषपदयोः प्रवृत्तिः ॥

तंचेद्ब्रूयुरति वाद्यसीत्यति वाद्यस्मीति ब्रूयान्नापन्हुवीत ॥

प्राणशब्दितस्य जीवस्य पूर्वोक्तसर्वातिशायित्वादेवातिवादित्वं नापन्होतव्यमितिभावः । अत्र पूर्वपर्यायेष्वनुक्तस्यातिवादित्वस्य कथनात्प्रक्रांतआत्मोपदेशः । प्राणशब्दिते प्रत्यगात्मनि पर्य्यवसन्न इति प्राणाद्भावभूयोस्तीति पुनरपृच्छत्येव नारदे सनत्कुमारः स्वयमेव ततोप्यतिशयितं परमात्मानमुपक्षिपति॥

एष तु वातिवदति यः सत्येनाति वदति ॥

तु शब्दोविशेषप्रदर्शकः " तस्य हवा एतस्य ब्रह्मणोनामसत्य मिति । " इति दहरविद्यायां वक्ष्यमाणत्वात् " सत्यंज्ञानमनंतंब्रह्मेति " सत्यशब्दस्य ब्रह्मणि प्रसिद्धेः सत्यशब्दोब्रह्मपरः । तस्यसततैकरूपत्वेन निर्विकारत्वात्सत्यत्वम् । तेनब्रह्मणानिमित्तेन योतिव-

दत्येषोति वादीपूर्वस्मात्प्राणातिवादिनो विशिष्टइत्यर्थः । अत्र भाष्यकृता सत्येनेति "इत्थं भूतलक्षणे २।३।२१॥" तृतीया सत्येन परेण ब्रह्मणा उपास्येनोपलक्षितोयोतिवदतीत्यर्थः—इतीत्थंभूतलक्षणे तृतीया कंठतः प्रतिपादिता । अतिवाद्यन्तरत्वनिमित्तसत्यशब्दाभिधेयं परं ब्रह्म प्रतीयतइतिभाष्यवाक्यान्निमित्तत्वार्थकत्वमपि तृतीयायाः सूचितम् । ततश्च निमित्तस्य करणत्वविवक्षया कारकविभक्तित्वमपि भाष्यकृदभिमतमेवेतिद्रष्टव्यम् । अत्र सत्यातिवादिनः प्राणातिवाद्यपेक्षयातिशयकथनात्सत्यशब्दनिर्दिष्टस्य ब्रह्मणः प्राणशब्दितजीवापेक्षया भूयस्त्वमुक्तंभवति । नचपूर्वप्रस्तुतप्राणातिवादिन एव "एषतुवाअग्निहोत्रीयः सत्यंवदति" इत्यादाविव सत्यवदनमंगतया विधीयतामितिवाच्यम् । "एषतुवाअग्निहोत्री" इतिवाक्ये द्रव्यदेवतान्तराभावेनाग्निहोत्रंतराप्रतीतेस्तुशब्दस्वारस्यभंगः इहतुप्रकृतातिवादिनिमित्तप्राणव्यतिरिक्तस्यैव सत्यशब्दितस्य ब्रह्मणोनिमित्तांतरस्य प्रतीतेर्नतत्स्वारस्यभंगोयुक्तः । किंच । सत्यवदनस्यांगतयाविधाने सत्यं वदतीतिनिर्देशस्य युक्ततयासत्येनेतितृतीयायाअतीत्युपसर्गस्यचायोगादितिद्रष्टव्यम् ॥

## सोहं भगवः सत्येनातिवदानीति ॥

ब्रह्मणातिवदानीति शिष्यः प्रार्थयामास इत्यर्थः । इतराह ॥

## सत्यंत्वेव विजिज्ञासितव्यमिति ॥

यदि सत्यशब्दितब्रह्मनिमित्तकातिवादितामभिलषसितर्हि ब्रह्मोपास्यमित्यर्थः । ब्रह्मोपासनमतिवादित्वनिमित्तमितियावत् । शिष्यस्तदभ्युपगच्छति ॥

## सत्यंभगवोविजिज्ञास इति ॥

उपासनंकरोमीत्यर्थः । ब्रह्मोपासनस्यातिवादित्वेहेतुत्वं ब्रह्मसाक्षात्कारद्वारेत्याह ॥

## यदावै विजानात्यथ सत्यंवदति ॥

अत्र विजानाति शब्दः साक्षात्कारपरः यदावैसाक्षात्करोति तदा सत्यं वदति सत्येनातिवदतीत्यर्थः । पूर्वत्र सत्येनातिवदानीति निर्दिष्टत्वात् । सत्यशब्दितस्य ब्रह्मणोतिवदनंप्रतिनिमित्तत्वेन करणत्वविवक्षया ॥ तृतीयावद्वदनंप्राति कर्मतया द्वितीयाया अप्युपपत्तिः । "सवाएष एवं पश्यन्नेवं मन्वान एवंविजानन्नतिवादी भवति । इति " साक्षात्कारमननोपासनानामतिवादित्वनिमित्ततया पूर्वत्रोक्तत्वात् सत्यंत्वेव विजिज्ञासितव्यमित्युपासनस्योक्तत्वान्मतिस्त्वेव विजिज्ञासितव्येति मननस्य वक्ष्यमाणत्वादत्र विजानातीत्यनेन साक्षात्कार एवोच्यते । उक्तंचव्यासार्यैः । विजानातिशब्दः साक्षात्कारपरः नतुशास्त्रजन्यज्ञानपरः । " यदावैमनुतेऽथविजानाति " इतिविजानात्यर्थस्य मननसाध्यत्वावगमात् । सत्यं वदति सत्यमतिवदतीत्यर्थः ॥

## नाविजानन्सत्यंवदति विजानन्नेव सत्यं वदति विज्ञानंत्वेव विजिज्ञासितव्यमिति ॥

साक्षात्काराभावेनातिवादित्वंमित्यतः साक्षात्काररूपं विज्ञानं विजिज्ञासितव्यं संपाद्यमित्यर्थः । [१]पाकंपचतीतिवत् विज्ञानं विजिज्ञासितव्यमितिनिर्देशः । उत्तरत्रापि विजिज्ञासितव्यपदस्यसंपाद्यत्वमेवार्थः । उक्तंचव्यासार्यैःसत्यव्यतिरिक्तविषयाणि विजिज्ञासितव्यपदानि संपाद्यवाचीनीति । शिष्यस्तदभ्युपगच्छति ॥

## विज्ञानंभगवोविजिज्ञासइति ॥

हेभगवन्नतिवादित्वनिमित्तं साक्षात्कारं संपादयामीत्यर्थः । पूर्वखंडे सत्यंत्वेव विजिज्ञासितव्यमिति ब्रह्मोपासनस्यातिवादित्व-

---

१ अत्रभाविनोपिपाकस्यबुद्ध्यासन्निधापितत्वेनयथापूर्वंनिर्देशस्तद्वदित्यर्थः ।

हेतुत्वकथनादत्रच वाक्ये साक्षात्कारस्यातिवदनहेतुत्वकथनाद्ब्रह्मो-पासनतत्साक्षात्कारयोर्द्वारद्वारिभावापन्नयोरेवातिवादित्वहेतुत्वंसि-ध्यति । एतत्सर्वमभिप्रेत्य भगवता भाष्यकृता ब्रह्मसाक्षात्का-रनिमित्तातिवादित्वसिद्धये परब्रह्मसाक्षात्कारोपायभूतं ब्रह्मोपासनं सत्यंत्वेव विजिज्ञासितव्यमित्युपदिश्यतइतिभाषितम् । केचित्तु "सत्यंत्वेवविजिज्ञासितव्य" मितिविहितस्य साक्षात्कारस्य उपास-नात्मकं हेतुभूतं विज्ञानमेव "यदावैविजानात्यथसत्यं वदती"तिख-ण्डेनापिनिर्दिश्यते नतुसाक्षात्कारः । एवंच सति कारणपरंपरोपदे-शावैरूप्यंसिध्यतीतिवदन्ति ॥

यदावै मनुतेऽथविजानाति नामत्वाविजानाति मत्वैवविजानाति मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवोविजिज्ञासइति ॥

ब्रह्मोपासनोपायभूतं मननं संपाद्यमित्यर्थः ॥

यदावै श्रद्दधात्यथमनुते नाश्रद्दधन्मनुते श्रद्दधदे-वमनुते श्रद्धात्वेव विजिज्ञासितव्येति श्रद्धां भगवोवि-जिज्ञासइति ॥

अत्रच भाष्यकृता श्रवणप्रतिष्ठार्थत्वान्मननस्य मननोपदेशेन श्रवणमप्यर्थसिद्धंमत्वाश्रवणोपायभूतां ब्रह्मणिश्रद्धांश्रद्धात्वेवविजि-ज्ञासितव्येतीत्युपदिश्यतइतिभाषितम् । श्रवणोपायभूतां ब्रह्मणिश्र-द्धामित्यनेन ब्रह्मश्रवणविषयिणी श्रद्धाविवक्षिता श्रद्धात्वेरेतिव्यासा-र्यैर्व्याख्यातम् ॥

यदावैनिस्तिष्ठत्यथश्रद्दधातिनानिस्तिष्ठन्श्रद्दधा-तिनिस्तिष्ठन्नेवश्रद्दधातिनिष्ठात्वेवविजिज्ञासितव्येति-निष्ठांभगवोविजिज्ञासइति ॥

ब्रह्मैवश्रोतव्यंनान्यदितिहिव्यवसायरूपानिष्ठा श्रोतुस्तराल्क्षण-श्रद्धोपायतयासंपाद्येत्यर्थः ॥

**यदावैकरोत्यथनिस्तिष्ठतिनाकृत्वानिस्तिष्ठतिकृत्वैवनिस्तिष्ठतिकृतिस्त्वेवविजिज्ञासितव्येतिकृतिंभगवोविजिज्ञासइति ॥**

उद्योगप्रयत्नापरपर्यायाश्रोतव्यांतरेषुहेयत्वानुसन्धानेन मनसो नियमनरूपाकृतिः । ब्रह्मैवश्रोतव्यमितिव्यवसायलक्षणानिष्ठाहेतुत्वात्संपाद्येत्यर्थः ॥

**यदावैसुखंलभतेऽथकरोतिनासुखंलब्ध्वाकरोतिसुखमेवलब्ध्वाकरोति सुखंत्वेवविजिज्ञासितव्यमितिसुखभगवोविजिज्ञासइति ॥**

उक्तलक्षणायाः कृतेर्ब्रह्मणि निरतिशयानुकूलत्वावगतिमंतरेणासंभवात् श्रोतव्यांतरेषुहेयत्वानुसन्धानाहितमनोनियमनरूपकृतिहेतुतयात्यंतानुकूलत्वलक्षणंसुखत्वंब्रह्मणिज्ञातव्यमित्यर्थः । अत्र चश्रवणमननश्रद्धादेः प्रागेव सुखप्राप्तेरसंभवादत्रप्राप्त्यर्थस्यापिलभते ज्ञानमेवार्थः । ज्ञानस्यापिप्राप्तिरूपत्वात् श्रोतव्येऽत्यन्तानुकूलत्वज्ञानाभावेश्रोतव्यांतरेषुहेयत्वानुसन्धानाऽऽहितमनोनियमनरूपकृतेरसंभवात्यंतानुकूलत्वंश्रोतव्येब्रह्मणिज्ञातव्यमितिभावः । अत्र विजिज्ञासितव्यशब्दस्यज्ञातव्यत्वमर्थोनोपासितव्यत्वंसंपादनीयत्वंवा।

**योवैभूमातत्सुखंनाल्पेसुखमास्तिभूमैवसुखंभूमात्वेवविजिज्ञासितव्यइति भूमानंभगवोविजिज्ञासइति ॥**

भूमशब्दोबहुत्ववाचीबहुशब्दात्पृथ्वादित्वादिमनिचि "बहोर्लोपोभूचबहोः ६।४।१५८॥" इतिप्रकृतिप्रत्यययोर्विकारेचसतितन्निष्पत्तेर्बहुत्वंचात्रवैपुल्यंनसंख्याविशेषः बहुशब्दस्य "बहुषुबहुवच

नम् । १ ।४।२१॥" इत्यादौसंख्यायामिव"अल्पंवाबहुवायस्यश्रुत-स्योपकरोतियः" इत्यादावल्पत्वप्रतिप्रयोगितिवैपुल्येपि प्रयोग-दर्शनादिहापिनाल्पेसुखमस्तीत्यल्पत्वप्रतिद्वंद्वितयैवभूमशब्दप्रयो-गाच्चवैपुल्यमेवार्थः वैपुल्यंचगुणोत्कर्षरूपम् । उत्तरत्रोत्कर्षस्यप्र-तिपादितत्वात् नतुपरिमाणरूपम् अतउत्कर्षकृतवैपुल्यमेवेहभूमश-ब्देनविवक्षितम् । अतएवनवैपुल्यरूपधर्मपरोभूमशब्दः सुखस्यवै-पुल्यरूपत्वासंभवात् अल्पप्रतियोगितयानिर्देशाच्च नह्यत्रवोत्तरत्रवा ल्पत्वंभूमप्रतियोगितयानिर्दिश्यतेअपितुअल्पमेव अतोल्पशब्दप्र-तियोगितयाप्रतीयमानोभूमशब्दोवैपुल्याश्रयधर्मिपरएव ततश्चाय-मर्थः । यदुत्कृष्टतयाविपुलंतदेवसुखमत्यंतानुकूलमित्यर्थः नाल्पे-सुखमस्तिसुखंसुखत्वमत्यंतानुकूलत्वमित्यर्थः अपशवोवाअन्येगोअ श्वेभ्यइत्यत्रगवाश्वादिव्यतिरिक्तेपशुत्वनिषेधस्यप्रशस्तपशुत्वनिषे धपरत्ववत् अल्पेप्रत्यगात्मसुखेसुखत्वनिषेधस्यप्रशस्तसुखत्वनिषे धपरत्वात् एतत्सर्वंभाष्येपिस्पष्टम् एतद्वाक्यप्रस्तुतयोर्भूमाल्पश-ब्दयोरर्थंजिज्ञासमानंप्रत्याह ॥

**यत्रनान्यत्पश्यतिनान्यच्छृणोतिनान्यद्विजानाति सभूमायत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानातित-दल्पम् ॥**

यत्रेत्यनन्तरमनुभूयमानइत्यध्याहारः यत्रयस्मिन्वस्तुन्यनुभूय-मानेततोन्यन्नदृश्यतेनश्रूयतेनविज्ञायतेचसभूमेत्यर्थः यस्मिन्दृश्य मानेततोन्यन्नदृश्यते यस्मिन्श्रूयमाणेततोन्यन्नश्रूयतेयस्मिन्विज्ञाय-मानेततोन्यन्नविज्ञायतेसभूमेतिवार्थः । यद्वा । सप्तम्याविषयत्वमर्थः पश्यन्नित्यध्याहारः यंपश्यन्नन्यंनपश्यतीत्यर्थः अत्रतदितरदर्शनाद्य-भावोविषयाभावकृतः ततश्चयतोन्यन्नास्तिसभूमेतिपर्यवसितोर्थः ।

ननुचेतनाचेतनवर्गस्यतद्भिन्नत्वात्कथंभूम्नोऽन्यन्नास्तीत्युच्यतेनचाचिदचिद्विशिष्टस्यैवभूमशब्दार्थत्वात् चिदचितोरपितत्रांतर्भावात्तदन्यन्नेतिनिषेधः शक्यतेकर्तुमितिवाच्यंविशेषणभूतयोश्चिदचितोर्भूमशब्दार्थभूताद्विशिष्टादन्यत्वेनततोऽन्यन्नास्तीतिनिषेधस्यायुक्तत्वादतएवजगदैश्वर्यविशिष्टमनुभवन्नतदतिरिक्तम् पश्यतीत्यपिनयुक्तम् । ऐश्वर्यविशिष्टादीशितव्यस्यभिन्नत्वात्सर्वज्ञत्वेन विशिष्टमनुभवन् तदतिरिक्तंनपश्यतीतितस्यापिभूमत्वप्रसंगात् । अथातआत्मादेशइतिभूम्नएवात्मत्वस्योपदेक्ष्यमाणत्वात् । तरतिशोकमात्मविदितिप्रस्तुतस्यात्मोपदेशस्यभूम्निपर्यवसानाच्चभूम्नआत्मत्वमवर्जनीयम् । नहिचिदचिद्विशिष्टस्यात्मत्वमस्तिविशेष्यस्यैवांतःप्रविश्यनियंतृत्वेनात्मत्वादतश्चतस्यैवभूमत्वंवक्तव्यम् । नचैतल्लक्षणं संभवतितद्व्यतिरिक्तस्यवस्तुनःसत्वादितिचेत् उच्यते । ब्रह्मशब्दवद्भूमशब्दस्यापिवस्तुपरिच्छेदरहितत्वमेवार्थः । वस्त्वपरिच्छेदोनामेदमिदंनेतिनिर्देशार्हत्वराहित्यम् । तच्चस्वरूपाभेदाद्वाभवेत्तदपृथक्सिद्धत्वाद्वाभवेत् । जीवजडयोरीश्वराभेदाभावात्तदपृथक्सिद्धसत्ताकत्वमितिफलति । तच्चद्वेधाघटतेतत्सत्ताव्यतिरिक्तसत्ताशून्यत्वाद्वा "यदधीनायस्यसत्तातत्तदित्येवभण्यते"इतिस्मृत्यनुसारेणतदधीनसत्ताकत्वाद्वाभवेत् । तत्रतत्सत्ताव्यतिरिक्तसत्ताशून्यत्वमपिसत्तारूपविशेष्याभावेनमिथ्यात्वाद्वाभवेत् । तत्सत्ताऽभिन्नसत्ताकत्वेनसत्ताव्यतिरिक्तत्वरूपविशेषणाभावाद्वाभवेत् । तत्रसत्ताशून्यत्वंसकलप्रमाणविरुद्धत्वन्नाभ्युपगमार्हं तथैवतत्सत्ताभिन्नसत्ताकत्वमपिनाभ्युपगमार्हम् । अपितुतत्सत्ताधीनसत्ताकत्वमेव । एवंविधापृथक्सिद्धत्वस्यसिद्धांतेभ्युपगतत्वात् । "अंशोनानाव्यपदेशाः २।३।४२॥" इत्यत्र अपृथक्सिद्धत्वलक्षणांशत्वस्याभेदव्यपदेशनिर्वाहकत्वस्योक्तत्वादात्मभरणमिहसत्ताशब्दार्थः ।

उक्तंचहरिणा । "आत्मानमात्मनाबिभ्रदस्तीतिव्यपदिश्यते" इति चेतनाचेतनयोरात्मभरणलक्षणासत्तापरमात्मसत्ताधीनेत्यर्थः । ततश्चयत्रनान्यदित्यस्यापियत्सत्तानधीनसत्ताकंनास्तिएतदनात्मकंनास्तीत्यर्थपर्यवसानान्नानुपपत्तिः । यद्वा । "समानेषुपूर्वत्वा" दितिसाप्तमिकाधिकरणेअन्येतरादिसर्वनामशब्दानांपूर्वनिर्दिष्टसदृशवाचित्वस्यव्यवस्थापिततयानान्योतोस्तिद्रष्टेत्यादिवाक्योष्विवयत्रनान्यत्पश्यतीतिवाक्येपिसामान्यनिषेधस्यविशेषनिषेधपरत्वाश्रयणान्नानुपपत्तिः ॥

## योवैभूमातदमृतम् । अथयदल्पंतन्मर्त्यम् ॥

उक्तलक्षणोभूमैवामृतम् । जन्ममरणादिशून्यंनित्याविर्भूतानन्याधीनापहतपाप्मत्वादिगुणाष्टकमितियावत् । इतरस्त्वनीदृशम् । नित्यमुक्तादीनामप्यनन्याधीनतादृक्त्वाभावान्नवाक्यानुपपत्तिरिति द्रष्टव्यम् ॥

सर्ववस्तूनामाधारसापेक्षत्वं दृष्ट्वा पृच्छति ॥

## सभगवःकस्मिन्प्रतिष्ठितइति ॥

उत्तरमाह ॥

## स्वेमहिम्नि इति ॥

स्वस्वरूपमहिमाधारकः । "स्वयंदासास्तपस्विनः"[1] इतिवत् । अनाधारइत्यभिप्रायः ॥

---

१ यदत्रकेचिदनादित "याशास्त्रसिद्धंस्वस्मिन्भगवद्दास्यंस्वाहंकारपारवश्येनासहमानाः" "दासःसेवकशूद्रयोः" "कैवर्तेदासधीवरौ" इत्यादिकोशबलेन ब्राह्मणानां दासपदघटितंनामनभवतीतिवदंति तत्तेषांवदनंबहुशास्त्रादिविरुद्धम् ॥ तथाहि "दासोहंकोशलेंद्रस्य" इतिरामायणेश्रीहनुमति "हंतायमद्रिरबलाहरिदासवर्यः" इतिगोवर्धने "हरिदासो व्रजौकसाम्" इतिउद्धवे "हरिदासस्यराजर्षेः" इतियुधिष्ठिरेचश्रीभागवते "दासोस्मितेलक्ष्मण" इतिहनुमन्नाटके "देवदेवस्यदासः" इति श्रीशिवमहिम्नस्तवे गंधर्वे "सूर्यदासः सोमयाजी" इतिसमरसारग्रंथे "कालिदास" इत्यादयोलोकेपि प्रयोगा येषु दृश्यंतेन ह्येतेसर्वेशूद्राएवेतिशक्यते वक्तुम् ॥ एवंच भगवन्नाम्नासह कृतंदासांतंनामनब्राह्मणादिषु प्रयोक्तव्यमितिनिष्कर्षः ॥

उक्ताभिप्रायेणाचार्य्यैः स्वयमुक्त्वास्वशब्दस्यात्मात्मीयवचनत्वादात्मीयेनियाम्यतयामहिमभूतेगवाश्वहस्तिहिरण्यदासभार्यादिलक्षणेप्रतिष्ठतइत्यभिप्रायंशिष्योगृह्णीयादथवास्वशब्दस्यात्मपरतया। आत्माधारइत्यभिप्रायइतिबुध्येत नचतदुभयमपिसंभवतिपरमात्मन उभयविभूतिलक्षणात्मीयमहिमसद्भावेप्यनाधारस्यपरमात्मनस्तत्प्रतिष्ठितत्वासंभवान्नह्यतिशिक्षितोपि नटः बटुः स्वस्कंधमारुह्यनरीनर्तीतिन्यायेनस्वस्वाश्रितत्वासंभवाच्च नद्वयमपियुज्यते। अतः शिष्यस्यसाबुद्धिर्निवर्तनीयेतिमत्वापुनराह ॥

यदिवानमहिम्नीति ॥

यदिवाअन्यथापश्यसितदानमहिम्नीतिब्रूमइत्यर्थः ॥

तद्विवृणोति गोश्वमिवमहिमेत्याचक्षतेहस्तिहिरण्यंदासभार्य्यंक्षेत्राण्यायतनानीति ॥

इति शब्दः प्रकारवचनःएवंजातीयकानीत्यर्थः ॥

नाहमेवंब्रवीमीतिहोवाच ॥

तत्रप्रतिष्ठितत्वंनब्रवीमीत्यर्थः। उक्तंचव्यासार्यैः। "अस्यमहिमानमितिवीतशोकः" "च" एतांविभूतियोगंइत्यादिश्रुतिस्मृतिषुचपरमात्मनोमहिमवत्वावगमात्। यदिवानमहिम्नीति नमहिमनिषेधःअपितुविभूतिरूपमहिमप्रतिष्ठितत्वनिषेधोवगम्यतइतिस्वस्वरूपप्रतिष्ठितत्वं ॥

निषेधति ॥

अन्योह्यन्यस्मिन्प्रतिष्ठितइति ॥

ननु यत्रनान्यत्पश्यतीत्यनुपपन्नंनानादिग्वर्तिनांचेतनाचेतनपदार्थानामुपलंभादित्यत्राह ॥

**सएवाधस्तात्सउपरिष्टात्सपश्चात्सपुरस्तात्सदक्षिणतःसउत्तरतःसएवेदꣳसर्वमिति ॥**

सामानाधिकरण्यात्सइतिनिर्दिष्टस्यभूम्नःइदंसर्वमितिनिर्दिष्टस्य चिदचिद्वर्गस्यचशरीरात्मभावःफलितोभवतिशरीरात्मभावश्चव्याप्तिनिबंधनइतिसएवाधस्तादितिश्रुत्यभिप्रायः । ततश्चयत्रनान्यत्पश्यतीतितदनात्मकान्यनिषेधेनानुपपत्तिरितिभावः ॥

एवंसर्वात्मभूतस्यभूम्नः उपासकेनस्वशरीरकतयोपासनंकर्तव्यमित्युपदिशति ॥

**अथातोहंकारादेशः ॥**

क्रियतइतिशेषः अथशब्दःप्रकृतविषयत्वद्योतनार्थः।अहंकारोऽहंबुद्धिः अहंग्रहेणभूम्नउपासनप्रकारोतःपरमुपदिश्यतइत्यर्थः नतुजीवस्वरूपोपदेशइतिमंतव्यम् तथासत्यहमादेशइतिनिर्देशस्यैवयुक्ततयाकारपदवैयर्थ्यात् ॥

परमात्मनोहंग्रहेणोपासनप्रकारमेवदर्शयति ॥

**अहमेवाधस्तात् अहं उपरिष्टादहंपश्चादहंपुरस्तादहंदक्षिणतोहमुत्तरताहमेवेदꣳसर्वमिति ॥**

सर्वदिग्वर्तिसर्वात्माभूमाहमेवेतिज्ञातव्यमित्यर्थः । नतुजीवस्य सर्वात्मकत्वमुपदिश्यतइतिभ्रमितव्यंजीवस्यातथात्वात् । तथात्वे कारशब्दवैयर्थ्यस्योक्तत्वाच्च । उक्तंचभगवताभाष्यकृतायत्त्वहमेवाधस्तादित्यादिनासर्वात्मत्वमुपदिष्टम् तद्भ्रमगुणविशिष्टस्यब्रह्मणो हंग्रहेणोपासनमुपदिश्यते । अथातोहंकारादेशइतिपरमात्मनःप्रत्यगात्मशरीरकत्वज्ञानप्रतिष्ठार्थमहंग्रहेणोपासनंकर्तव्यमितिच ॥

नन्वहंबुद्धिशब्दयोः जीवात्मविषययोः कथंभूमपर्यंतत्वम् । अतोऽनहमर्थंचपरमात्मन्यहंग्रहोपासनस्यायथार्थत्वमेवस्यादित्या-

शंक्यभूम्नःप्रत्यगात्मानंप्रत्यात्मत्वेनतद्विषयबुद्धिशब्दानांपरमात्मपर्यंतत्वमुपपद्यतइतिदर्शयन्तरतिशोकमात्मविदितिप्रक्रांतमात्मोपदेशंभूम्निसमापयति ॥

अथातआत्मादेशः ॥

अत्रापिक्रियतइतिशेषः अथशब्दः प्रकृतविषयत्वद्योतनार्थः । आत्मादेशः आत्मत्वोपदेशः क्रियतइत्यर्थः ॥

आत्मैवाधस्तादात्मोपरिष्टादात्मापश्चादात्मापुरस्तादात्मादक्षिणतआत्मोत्तरतआत्मैवेदꣳसर्वमिति ॥

सामानाधिकरण्येनात्मत्वंफलति तथापिकंठोक्त्योपासकात्मत्वसिध्यर्थंविशिष्यकंठोक्त्योपदेशः । नचाथात्मादेशइत्युपासकंप्रत्यात्मत्वोपदेश इतिविशेषेकिंनियामकमितिवाच्यम् । एवंविजानतआत्मतः प्राणइतिविद्वदात्मनः प्राणाद्युपादानत्वेनसार्वात्म्यस्योत्तरत्रप्रतिपादयिष्यमाणत्वात् । यत्त्वत्रपरैः अहंकारस्यात्मैकत्वेनप्रत्यक्षसिद्धस्याथातोहंकारादेशः अथातआत्मादेशइतिपृथगुपदेशोभेदार्थः । भूमात्मनोर्भिन्नत्वेनप्रसिद्धयोः पृथगुपदेशऐक्यार्थः । द्वयोः सार्वात्म्यायोगादिति तदसारमहमर्थादन्यस्यात्मनः भूमाख्यब्रह्मभिन्नत्वेनप्रत्यक्षासिद्धत्वात्तयोरुपदेशोभेदार्थः । अहमर्थस्यतुब्रह्मभिन्नत्वेनप्रत्यक्षसिद्धत्वात् तयोरुपदेशऐक्यार्थइतिवैपरीत्यस्यापि सुवचत्वादित्यास्तांतावत् ॥

सवाएषएवंपश्यन्नेवंमन्वानएवंविजानन्नात्मरतिरात्मक्रीडआत्ममिथुन आत्मानन्दः सस्वराड्भवतितस्यसर्वेषुलोकेषुकामचारोभवति ॥

रतिः स्रक्चंदनादिजन्याप्रीतिः । क्रीडोद्यानादिजन्या स्त्रीसंभ-

१ उक्तमितिशेषः ॥

वाप्रीतिः । मिथुनंविभूतिजन्याप्रीतिःआनन्दः आत्मन्येवरतिर्यस्यस तथोक्तः । सर्वविधसुखानुभवोद्ध्यात्मसुखानुभवांतर्गतइत्यर्थः । स्वराट्स्वयमेवराजाअकर्मवश्यः विधिनिषेधकिंकरोनभवतीतियावत् । च "अतएवअनन्याधिपतिः।४।४।९॥"इतिसूत्रेअतएव सत्यसंकल्पत्वादेव अनन्याधिपतिः अन्याधिपतित्वंविधिनिषेधयोग्यत्वं विधिनिषेधयोग्यत्वेहिप्रतिहतसंकल्पत्वंभवेत् । अतः सत्यसंकल्पत्वश्रुत्यैवानन्याधिपतित्वंसिद्धम् । अतएवसस्वराड्भवतीत्युच्यतइतिभाषितम् । "प्रत्यक्षोपदेशान्नेतिचेत् । ४ । ४ ।१८॥" इति सूत्रेअकर्मप्रतिहतज्ञानोमुक्तः विकारिलोकान्ब्रह्मविभूतिभूताननुभूययथाकामंतृप्यतीत्यर्थः इतितस्यसर्वेषुलोकेषुकामचारोभवतीत्यस्य वाक्यस्यार्थइतिभाषितम् ॥

अथयेन्यथातोविदुरन्यराजानस्तेक्षय्यलोकाभवंतितेषांसर्वेषुलोकेष्वकामचारोभवति ॥

येउक्तप्रकारादन्येनप्रकारेणोपासतेतेन्यराजानोभवंतिविधिनिषेधकिंकराभवन्ति कर्मवश्याभवंतीत्यर्थः । स्वराडित्यस्यप्रतिद्वंद्वित्वात् क्षय्यलोकाश्चभवंतीत्यर्थः । अत्रक्षय्यलोकाभवंतीत्यनेनयथोक्तप्रकारेणपरमात्मोपासकानामक्षय्यभगवल्लोकत्वमस्तीत्युक्तंभवति । अथात आत्मादेशइत्यनेनोक्तोपासकांतर्यामिणः चेतनाचेतनसकलप्रपंचोपादानत्वलक्षणंसर्वात्मत्वंस्पष्टयति ॥

तस्यहवाएतस्यैवंपश्यतएवंमन्वानस्यैवंविजानत आत्मतः प्राणआत्मतआशात्मतः स्मरआत्मतआकाशआत्मतस्तेजः आत्मतः आपः आत्मतः आविर्भावतिरोभावावात्मतोन्नमात्मतोबलमात्मतोविज्ञानमात्मतोध्यानमात्मतश्चित्तमात्मतः संकल्पआत्मतोमन-

आत्मतोवागात्मतोनामात्मतोमंत्राआत्मतः कर्माणि-
आत्मतएवेदꣳसर्वमिति ॥

ततश्चविहितोहंग्रहस्तात्विकविषयएवेतिभावः ॥

तदेषश्लोकः ॥

तस्मिन्विषयेएषवक्ष्यमाणः श्लोकः प्रवर्ततेइत्यर्थः ॥

नपश्योमृत्युंपश्यतिनरोगंनोतदुःखतांसर्वंहपश्यः पश्यतिसर्वमाप्नोतिसर्वशइति ॥

पश्यः ब्रह्मदर्शी मृत्युं मरणं रोगं दुःखसाधनम् जगतिप्रातिकूलतां चनपश्यति सर्वसाक्षात्कर्तासन्संकल्पमात्रेणसंकलिपतानर्थान्सर्वस्मिन्कालेप्राप्नोतीत्यर्थः । अपहतपाप्मत्वादिगुणाष्टकाविर्भावोभवतीतिपर्यवसितोर्थः । अत्रजगतिदुःखतांनपश्यतीत्युक्त्याजगतोमुक्तंप्रतिप्रतिकूलत्वंनास्तिपित्तोपहतस्यपयसः प्रतिकूलत्ववत् जगतः प्रतिकूलत्वंकर्मनिबंधनमित्युक्तंभवति ॥

सएकधाभवतित्रिधाभवतिपंचधाभवतिसप्तधानवधाचैवपुनश्चैकादशस्मृतः । शतंचदशचैकंचसहस्राणि चविꣳशतिः ॥

आत्मनोनिरवयवस्यत्रिधापञ्चधाविभागायोगात्संकल्पपरिगृहीतानेकविधशरीरोभवतीत्यर्थः ॥

एवंमोक्षसाधनभूतोपासनप्रकारमुपदिश्यताद्दशोपासननिष्पत्त्यंतःकरणस्योपासनोत्पत्तिप्रतिबंधकपापराहित्यमपेक्षितम् तच्चराजसतामसाहारसेविनांनभवत्यपितुतद्विविक्तसात्विकाहारसेविनांभवेदित्युपदिशति ॥

आहारशुद्धौसत्वशुद्धिः सत्वशुद्धौध्रुवास्मृतिः स्मृतिलंभेसर्वग्रंथीनांविप्रमोक्षः ॥

इतिध्रुवस्मृतिलंभेदुर्मोचतयाग्रंथिशब्दवाच्यानाम् अविद्यारागादीनांमोक्षोभवतीत्यर्थः । अत्रस्मृतिलंभएवसर्वग्रंथीनांप्रमोक्षइत्युक्त्यास्मृत्यनंतरभाविनास्मृतिविलक्षणेनदर्शनेननमोक्षः अपितुदर्शनसमानाकारस्मृतिसंतानेनैवततः सवाएषएवंपश्यन्नेवंमन्वानएवंविजानन्नित्यत्र पश्यन्नित्यादिशब्दादर्शनसमानाकारोपासनपराः प्रकरणांतरस्थाः “ आत्मावारेद्रष्टव्यः श्रोतव्यः ” इत्यादिशब्दाश्चदर्शनसमानाकारः पराइतिसूचितंभवति ॥

शास्त्रार्थमशेषमुक्त्वाआख्यायिकामुपसंहरतिश्रुतिः ॥

तस्मैमृदितकषायायतमसः पारंदर्शयतिभगवान्सनत्कुमारः ॥

एवं शुद्धांतःकरणायनारदायभगवान्सनत्कुमारः संसारसंतमसचण्डभानूपासनगोचरंपरमात्मानंस्पष्टमुपादिशादित्यर्थः । अत्रनामादिषुब्रह्मत्वेनोपदिष्टेष्वपितत्रब्रह्मत्वस्यानभ्युपगमात्तस्यमृदितकषायत्वंशिष्यस्यपरिशुद्धांतः करणतयोपदेशयोग्यतांपरीक्ष्यैवोपदिष्टवानित्यर्थः ॥

तंस्कंदइत्याचक्षतेस्कंदइत्याचक्षते ॥

तंसनत्कुमारंस्कंदइत्यपिवदंतीत्यर्थः । द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥

अक्षरमंबरांतधृतेः । १ । ३ । ९ ॥

बृहदारण्यकेपंचमाध्यायेष्टमेगार्गीब्राह्मणे ॥

साहोवाच अहंवैवायाज्ञवल्क्ययथाकाश्योवावैदेहोवाउग्रपुत्रउज्ज्यंधनुरधिज्यंकृत्वाद्वौबाणवंतौशरौसपत्नातिव्याधिनौहस्तेधृत्वोपोत्तिष्ठेदेवमेवत्वांद्वाभ्यांप्रश्नाभ्यामुपोदस्थांतौमेब्रूहीति ॥

काशीदेशभवोविदेहदेशभवोहिशूरवंश्यः उत्सृष्टज्यंधनुःपुनरधि-ज्यंकृत्वाद्वौबाणवंतौ बाणशब्देनशराग्रेयःखंडःसोभिधीयते सपत्ना-तिव्याधिनौ सपत्नात्यन्तव्यथनशीलौ शरौ हस्तेगृहीत्वासपत्नसमीपंगच्छति । एवमेवाहंद्वाभ्यांप्रश्नाभ्यामुपस्थितास्मि । उपोदस्था-म् । लुङि "गातिस्थाघुपाभूभ्यः २ । ४ । ७७ ॥" इतिसिचोलुक् ॥

तौमेब्रूहीत्येवमुक्तआहयाज्ञवल्क्यः ॥

पृच्छगार्गीति साहोवाचयदूर्ध्वंयाज्ञवल्क्यदिवोय-दर्वाक्पृथिव्यायदंतराद्यावापृथिवी इमेयद्भूतंचभवच्च-भविष्यच्चेत्याचक्षतेकस्मिंस्तदोतंचप्रोतंचेति ॥

दिवोयदूर्ध्वंलोकजातंपृथिव्याश्चाधस्तनंयद्वस्तुजातंद्यावापृथिव्यं तरालवर्तिकालत्रयपरिच्छिन्नंयद्वस्तुजातमेतत्सर्वंकुत्रवादीर्घतंतुव-दोतंतिर्यक्तंतुवत्प्रोतंचेति । यदर्वाक्पृथिव्याइतिपाठेप्ययमेवार्थः ॥

सहोवाचयदूर्ध्वंगार्गिदिवोयदर्वाक्पृथिव्यायदंतरा-द्यावापृथिवीइमेयद्भूतंचभवच्चभविष्यच्चेत्याचक्षतआ-काशेतदोतंचप्रोतंचेति ॥

आकाशशब्देन नवायुमदंबरंगृह्यते तस्यसर्वविकाराश्रयत्वाभा-वात् । किंतु । अव्याकृताकाशःएतच्च "अक्षरमंबरांतधृतेः। १ । ३ । ९ ॥" इत्यत्रस्थितम् ॥

साहोवाचनमस्तेस्तुयाज्ञवल्क्ययोमएतंव्यवोचः । अपरस्मैधारयस्वेति ॥

यस्त्वंम एतेप्रश्नंव्यवोचउक्तवानासितस्मैतेनमोस्तुअपरस्मैद्विती-यप्रश्नायावधानंकुरुसहोवाच ॥

पृच्छगार्गीति साहोवाचयदूर्ध्वंयाज्ञवल्क्यदिवोयद

र्वाक्पृथिव्यायदंतराद्यावापृथिवीइमेयद्भूतंचभवच्चभ-
विष्यच्चेत्याचक्षते आकाशएवतदोतंचप्रोतंचेति ॥

यआकाशउक्तइतिशेषः ॥

कस्मिन्नुखल्वाकाशओतश्चप्रोतश्चेति ॥

सोऽव्याकृताकाशः किमाश्रितइत्यर्थः ॥

सहोवाचैतद्वैतदक्षरंगार्गिब्राह्मणाअभिवदन्त्यस्थूल
मनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोवा-
य्वनाकाशमसंगमरसमचक्षुष्कमश्रोत्रमवागमन अते
जस्कमप्राणममुखममात्रमनंतरमबाह्यंनतदश्नातिकिं-
चननतदश्नातिकश्चन ॥

हेगार्गितदेतत्सर्वासूपनिषत्सुप्रसिद्धम् । अश्नुतइतिवानक्षर-
तीतिवाअक्षरंब्रह्मब्राह्मणाब्रह्मविदःअभिवदन्ति । अत्रब्राह्मणाभिव-
दनकथनेननाहंकिंचिद्विप्रतिपन्नंवक्ष्यामीतिहृदयम् । अस्थूलंस्थूल
भिन्नम् । तर्हिकिमण्वितितत्राह अनण्विति तर्हिकिंह्रस्वमित्यतआ-
ह । अह्रस्वमिति । तर्हिकिमदीर्घमित्यत्राह अदीर्घमिति । एवमु
त्तरत्रापिद्रष्टव्यम् । अमात्रम् । मात्राइन्द्रियाणि यद्वामात्रापरिच्छेद-
स्तद्रहितमित्यर्थः । अनंतरमबाह्यंस्वाव्याप्तदेशशून्यमित्यर्थः ।
नतदश्नातिकिंचन तदक्षरंकर्तृकिंचिदपिनाश्नाति । अवाप्तसमस्त-
कामतयाभक्ष्यनिरपेक्षमित्यर्थः। स्वयंकस्यापिनभक्ष्यमित्याह नत-
दश्नातिकश्चनेति तद्ब्रह्मनाशनकर्म ॥

एतस्यवाक्षरस्यप्रशासनेगार्गिसूर्याचंद्रमसौविधृ-
तौतिष्ठतः ॥

वैशब्दोवधारणेप्रशासनेआज्ञाचक्रेसूर्याचंद्रमसौ देवताद्वंद्वेच ६।
३।२९॥ इतिपूर्वपदस्यानङ्। विधृतौविशेषेणधृतौतिष्ठतः प्रकृष्टं-

शासनंप्रशासनम् । क्वचिदप्यप्रतिहतत्वमेवशासनस्यप्रकर्षः । ततश्चसर्वविषयकंशासनमितिफलति प्रशासितारंसर्वेषामितिप्रमाणानुसारात् । ततश्चसर्वविषयकशासनाधीनद्यावापृथिव्यादिधारणत्वमर्थइतिपर्यवस्यति । अत्रप्रधानस्यजगद्धारकत्वेपि प्रशासनाधीनधारकत्वाभावात् । जीवस्यप्रशासनाधीनयत्किंचिद्धारकत्वेपिप्रशासनशब्दितसर्वविषयकशासनाधीनसर्वधारकत्वासंभवाच्च नात्रजीवोवाप्रधानंवाप्रतिपाद्यते । इदंच "साचप्रशासनात् । १ । ३ । १०॥ इति सूत्रेस्पष्टम् ॥

एतस्यावाक्षरस्यप्रशासने गार्गिद्यावापृथिव्यौविधृतेतिष्ठतः । एतस्यवाअक्षरस्यप्रशासनेगार्गिनिमेषामुहूर्ताअहोरात्राण्यर्द्धमासामासाऋतवः संवत्सराइतिविधृतास्तिष्ठंतीति ॥

इतिशब्दः प्रकारपरः संवत्सराइत्येवंजातीयकाः कालविशेषा इत्यर्थः ॥

एतस्यवाअक्षरस्यप्रशासनेगार्गिप्राच्योनद्यः स्यंदन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्याः यांयांचदिशमनु।

प्रशासनइतिनिमित्तेसतिसप्तमी । प्राच्यः प्राक्प्रवाहाः प्रसिद्धा गंगाद्यानद्यः श्वेतेभ्यो हिमवदादिभ्यः पर्वतेभ्यो लोकोपकारायस्यन्दन्ते । तत्प्रशासनाभावे ताः स्यंदनायनप्रभवन्तीतिभावः । प्रतीच्यःप्रत्यङ्मुखाः अन्याउदीच्यश्चनद्यः यांयांदिशमनुप्रस्थितास्ताः सर्वाएतस्यप्रशासनेसतिस्यन्दन्ते ॥

एतस्यवा अक्षरस्यप्रशासनेगार्गिददतोमनुष्याः प्रशंसन्तियजमानंदेवादर्वीपितरोन्वायत्ताः ॥

एतस्यवाअक्षरस्यप्रशासनेनिमित्तेददतस्तदाज्ञयादानंकुर्वतः

आज्ञाकैंकर्यबुद्ध्यादानंकुर्वतोजनान् अन्वायत्ताअनुवशास्संतोम-नुष्याः प्रशंसन्ति प्रशासनइत्येतद्यजमानंदेवादर्वींपितरइत्यत्रापि संबध्यते । अन्वायत्ताइतिपदं देवमनुष्यपितृसाधारणम् । द्विती-यान्तपदानांप्रशंसन्तीत्यनेनान्वयः । परमात्माज्ञयायागंकुर्वताम-न्वायत्ताः संतोदेवाः प्रशंसन्ति । परमात्माज्ञयाप्रवृत्तांदर्वींहोमम-न्वायत्तास्संतः पितरः प्रशंसन्ति । एवमेवव्याख्यातंव्यासार्यैः ॥

**योहवाएतदक्षरंगार्ग्यविदित्वास्मिंल्लोकेजुहोतिय-जतेतपस्तप्यतेबहूनिवर्षसहस्राण्यंतवदेवास्यतद्भवति । योवाएतदक्षरंगार्ग्यविदित्वास्माँल्लोकात्प्रैतिसकृपणः ॥**

ब्रह्मज्ञानमंतरेण क्रियमाणंहोमयज्ञतपआदिकंबहुकालमपिसाध्यं सर्वं नश्वरफलसाधनं भवति । तद्ज्ञानमंतरेण लोकान्तर्गतस्यापि शोच्यताभवति । तदज्ञानात्संसारोभवतीतियावत् ॥

**योवा एतदक्षरं गार्गिविदित्वास्माँल्लोकात्प्रैति स ब्राह्मणः ॥**

ब्रह्मज्ञानवान् म्रियते स ब्रह्मवित् ब्रह्मानुभविता मुक्त इति यावत् । उक्तं च भगवताभाष्यकृता योवाएतदक्षरंगार्गीत्येतद्व्या-कुर्वता यदज्ञानात्संसारप्राप्तिः यज्ज्ञानाच्चामृतत्वप्राप्तिस्तदक्षरंपरं ब्रह्मेति ॥

**तद्वा एतदक्षरं गार्ग्यदृष्टं दृष्टश्रुतं श्रोत्रमृतं मंत्र-विज्ञातं विज्ञातृ ॥**

अयोगिभिरदृष्टं सत् द्रष्टृरूपादि साक्षात्कर्तृश्रोतृशब्दसाक्षा-त्कारकर्तृ मंतृ मंतव्यं साक्षात्कर्तृ विज्ञातृ अध्यवसायसाक्षात्कर्तृ ॥

**नान्यदतोऽस्ति द्रष्टृनान्यदतोस्ति श्रोतृनान्यदतो-स्ति मंतृ नान्यदतोस्तिविज्ञातृ ॥**

अंतर्यामि ब्राह्मणोक्तरीत्यात्राप्यन्यपदस्य तत्सदृशपरत्वमेव यथाचोल एव भूपतिर्नान्यइत्युक्तेस्तत्सदृशभूपतिनिषेधपरत्वमेवमिहाप्यद्रष्टृत्वादिविशेषितनिरुपाधिकद्रष्टृत्वाश्रयस्य परमात्मनः सदृशं किमपि नास्तीत्येवार्थः। यद्वैतदक्षरमन्यैरदृष्टंसत् स्वव्यतिरिक्तसमस्तसाक्षिभूतम्। एवमनेनाक्षरेणादृष्टमेतस्याक्षरस्याधारभूतमेतस्य द्रष्टृनास्तीत्यर्थः। पूर्वव्याख्याने समनिषेधः अस्मिंश्च व्याख्यानेऽधिकनिषेधश्च फलति। नच नेह नानास्तीतिवन्नान्यदतोस्तिद्रष्ट्रिति वाक्यस्याप्यब्रह्मात्मकवस्तुनिषेधपरत्वोपपत्तौ समाभ्यधिकनिषेधतयाव्याख्यानं किमर्थमितिवाच्यम्। तद्वदत्रैक्यविधिशेषत्वाभावेन समाभ्यधिकनिषेधपरत्वस्यैवयुक्तत्वात्। उपसंहरति॥

## एतस्मिन्नुखल्वक्षरेगार्गि आकाश ओतश्चप्रोतश्चेति साहोवाच ब्राह्मणा भगवंतस्तदेव बहुमन्येध्वं यदस्मान्नमस्कारेण मुच्येध्वम्॥

हे भगवंतो ब्राह्मणायूयं तदेव बहुमन्येध्वं यदस्माद्याज्ञवल्क्यान्नमस्कारं कृत्वा मुच्येध्वमिति यन्मुक्ताभवतेति यदस्तीत्यर्थः। न कदाचिदस्य पराभवः शंकनीयः नमस्कारं कृत्वामुक्ताभवतेत्यर्थः। मन्येध्वमिति लिङ्मध्यमबहुवचनम्॥

## नवैजातु युष्माकमिमंकश्चिद्ब्रह्मोद्यंजेतेति॥

युष्माकं मध्य इमं याज्ञवल्क्यं कश्चिदपि ब्रह्मवादं प्रति जेता नास्तीत्यर्थः॥

## ततो ह वाचक्नव्युपरराम॥

वचक्नोरपत्यंवाचक्नवी गार्ग्युपररामेत्यर्थः॥

## ईक्षतिकर्मव्यपदेशात् सः। १। ३। १२॥

प्रश्नोपनिषदि पंचमप्रश्ने ॥

अथ हैनं शैव्यं सत्यकामः प्रपच्छ ॥

स्पष्टोर्थः ॥

सयोहवै तद्भगवन्मनुष्येषु प्रापणान्तमोंकारमभिध्यायीतकतमंवावसतेनलोकं जयति ॥

हवाइति प्रसिद्ध्यर्थः । तदित्यव्ययं सयइत्येतदधिकारिसामान्यपरम् । अयमर्थः हे भगवन्पूजार्ह । योधिकारी मनुष्याणां मध्ये मरणान्तम् एतदोंकारमभिध्यायति । सः कतमंलोकं तेनोङ्कारेण प्राप्नोतीत्यर्थः । वावशब्दोवधारणेप्रसिद्धौवा ॥

तस्मैसहोवाच ॥

स्पष्टोर्थः ॥

एतद्वै सत्यकामपरं चापरं चब्रह्मयदोंकारस्तस्माद्विद्वानेतेनैवायनेनैकतरमन्वेति ॥

हेसत्यकामएतदेवपरंचापरंचब्रह्मोभयवाचकमित्यर्थः।वाच्यवाचकभावनिबंधनंसामानाधिकरण्यम्।तथैवव्यासार्यैः"इक्षतिकर्माधिकरणे १ । ३ । १२॥" व्याख्यातत्वात् । किंतदित्यत्राह यदोंकारस्तदुपासकएतेनैवोंकाररूपेणैकतरंपरमपरंवाब्रह्मान्वेत्युपास्तइत्यर्थः ॥

सपद्येकमात्रमभिध्यायीत सतेनैवसंवेदितस्तूर्णमेवजगत्यामभिसंपद्यते ॥

सउपासकः यद्येकमात्रंह्रस्वंप्रणवमपरब्रह्मवाचकमभिध्यायीतापरब्रह्मवाचकेनह्रस्वेनप्रणवेनयोऽपरंब्रह्मोपास्तेसतेनैवैकमात्रोंकारकरणकायपरब्रह्मध्यानेनैवसंवेदितोलब्धसत्ताकोजगत्यांभुव्यभिसंपद्यते ॥

तमृचोमनुष्यलोकमुपनयन्ते ॥

तमृङ्मंत्रामनुष्यलोकंप्रापयन्ति ॥

सतत्रतपसाब्रह्मचर्येणश्रद्धयासंपन्नोमहिमानमनुभवति ॥

समनुष्यलोकंनीतस्तपसानशनादिना ब्रह्मचर्येण मैथुनवर्जनेन श्रद्धयास्तिक्यबुद्ध्याद्यादिसंपन्नोभवति। तदामहिमानंश्रेयस्साधनकं ब्रह्मोपासनमनुतिष्ठतीत्यर्थः। नचैचोह्रस्वत्वाभावात्कथमोंकारस्यह्रस्वत्वमितिशङ्कनीयम्। न्यूंखेह्रस्वस्योंकारस्यदर्शनात् ॥

अथयदि द्विमात्रेणमनसिसंपद्यते ॥

द्विमात्रेणापरब्रह्मवाचकेनप्रणवेनयस्यमनस्यपरब्रह्मध्यानंसंपद्यते॥

सोन्तरिक्षंयजुर्भिरुन्नीयतेससोमलोकम् ॥

अन्तरिक्षम् अन्तरिक्षाश्रितेसोमलोकंद्विमात्रोपासकः पुमान्यजुर्मंत्रैरुन्नीयते अत्रांतरिक्षसोमलोकशब्दः उर्ध्वलोकमात्रोपलक्षकः आमुष्मिकमात्रपरः।अतएव "ईक्षतिकर्माधिकरणभाष्ये१।३।१२॥" यदपरंकार्यमपरब्रह्मनिर्दिष्टंतदैहिकामुष्मिकत्वेनद्वेधाविभज्यैकमात्रं प्रणवमुपासीनानामैहिकंमनुष्यलोकावाप्तिफलमभिधायद्विमात्रमुपासीनानामामुष्मिकमंतरिक्षशब्दोपलक्षितंफलंचाभिधायेत्युक्तम् ॥

ससोमलोकेविभूतिमनुभूयपुनरावर्तते ॥

आमुष्मिकैश्वर्यमनुभूयतत्पुण्यावसानेपुनरावर्तते ॥

यः पुनरेतंत्रिमात्रेणोमित्यनेनैवाक्षरेणपरमपुरुषमभिध्यायीत ॥

एकमात्रत्वद्विमात्रत्वदशायामर्वाचीनफलसाधनेनैवाक्षरेणत्रिमात्रेणपरमात्मानमभिध्यायीत आभिमुख्येनध्यायतीत्यर्थः ॥

सतेजसिसूर्येसंपन्नः यथापादोदरस्त्वचाविनिर्मुच्यते एवंहैवसपाप्मनाविनिर्मुक्तः ससामभिरुन्नीयते ब्रह्मलोकम् ॥

सउपासकस्तेजोमंडलेसूर्ये संगतः सन्नुदरमेवपादोयस्यसपादोदरः सर्पइतियावत् । यथासर्पोजीर्णत्वचाविनिर्मुक्तोभवत्येवंपाप्मनाविनिर्मुक्तः सन् ब्रह्मलोकंवैकुण्ठंसामभिर्गीतप्रधानैर्मंत्रैरुन्नीयते। अत्रव्यासार्यैः सपाप्मनाविनिर्मुक्तइतितच्छब्दांतरश्रवणात्ससामभिरित्यैकपद्यमाश्रित्यसामगानसहितैरितिवा सांत्ववचनसहितैःपुरुषैरितिवार्थः इतिवर्णितम् ॥

सएतस्माज्जीवघनात्परात्परंपुरिशयंपुरुषमीक्षते ॥

ईक्षति "कर्माधिकरणे। १।३।१२॥" यस्यहिकर्मनिमित्तं देहित्वं सजीवघनइत्युच्यते। चतुर्मुखस्यापितच्छ्रूयते यो ब्राह्मणंविदधातिपूर्वमित्यादिभाष्योक्तिर्जीवघनशब्देनसंसारिमंडलमुच्यते।मूर्तौ घनइतिकाठिन्यशब्दितमूर्तौ घनशब्दस्य निपातितत्वाद्देहद्वारत्वादात्मकाठिन्यस्य घनशब्दोदेहिपरएव । तस्मात्परः परिशुद्धात्मा। तस्मादपिपरभूतंपुरिशयं पूंःप्राणिनः सर्वगुहाशयस्येति सर्वेषुप्राणिष्वंतरात्मतयाशयानम्। "भगवानिति शब्दोयं तथा पुरुषइत्यपि। निरुपाधीचवर्ततेवासुदेवे सनातने" इति निरुपाधिकपुरुषशब्दवाच्यं भगवंतं परवासुदेवमीक्षते इत्यर्थः। अतएवसामभिरुन्नीयते ब्रह्मलोकमित्यत्रब्रह्मलोकशब्दस्य चतुर्मुखलोकपरत्वशंकाव्युदस्ता । चतुर्मुखलोकगतानां परवासुदेवेक्षणासंभवादिति द्रष्टव्यम् ॥

तदेतौश्लोकौभवतः ॥

---

१ इदं चापस्तंबवचनमितिसमन्वयाधिकरणश्रीभाष्ये स्पष्टम् ॥

तदोंकारध्यानमधिकृत्य वक्ष्यमाणौ श्लोकौप्रवृत्तावित्यर्थः ॥

तिस्रोमात्रामृत्युमत्यःप्रयुक्ता अन्योन्यसक्ताअनविप्रयुक्ताः ॥

अविप्रयुक्तानभवंतीत्यनविप्रयुक्ताः विप्रयुक्ता इतियावत्। अत्यंतद्रुतोच्चारणेन अन्योन्यसक्ततयाअतिविप्रकृष्टकालतया अत्यंतविप्रयुक्ततया वाप्रयुक्तास्तिस्रोमात्रामृत्युमत्यः मृत्युप्रदाः अनर्थावहाइतियावत् ॥

क्रियासुबाह्यांतरमध्यमासुसम्यक्प्रयुक्तासुनकंपतेज्ञः ॥

यज्ञाद्या बाह्यक्रिया अंतरा मानसक्रिया मध्यमा वाचकजपरूपादिक्रिया आसुक्रियासुतिसृषु मात्रासुसम्यगत्यंतसंयोगविप्रयोगमंतरेणप्रयुक्तासुसतीषु ज्ञः तत्प्रयोगाभिज्ञः पुमान्नकंपतेफलान्नच्यवत इत्यर्थः ॥

ऋग्भिरेतंयजुर्भिरंतरिक्षंसामभिर्यत्तत्कवयोवेदयंते ॥ तमोंकारेणैवायनेनान्वेतिविद्वान् यत्तच्छांतमजरममृतमभयंपरंचेति ॥

ऋग्भिरेतं मनुष्यलोकमित्यर्थः । यजुर्भिरंतरिक्षम्। आमुष्मिकमित्यर्थः । यत्तत्कवयोवेदयंते । कवयः क्रांतदर्शिन इत्यर्थः । "तद्विष्णोःपरमंपदंसदा पश्यंतिसूरयः"इत्युक्तरीत्या सूरयः यंलोकंपश्यंतितमोंकारेणैवमार्गेणान्वेति गत्वाच शांतमूर्मिषट्करहितंजरामरणशून्यमकुतोभयम् । सर्वकारणत्वेनसर्वोत्कृष्टंब्रह्मचप्राप्नोतीत्यर्थः ॥

" दहरउत्तरेभ्यः। १। ३। १३॥ " " आकाशोर्थान्तरत्वादिव्यपदेशात्। १। ३। ४२॥ " " नचका-

येंप्रत्यभिसंधिः । ४ । ३ । १३ ॥ " " कृत्स्नभावात्तु गृहिणोपसंहारः । ३ । ४ । ४७ ॥ "

इत्यादिविषयवाक्यार्थज्ञानाय प्रायश्छांदोग्याष्टमप्रपाठको व्याख्यायते ॥

अथयदिदमस्मिन् ब्रह्मपुरेदहरंपुण्डरीकंवेश्म ॥

विद्यांतरारम्भदर्शनार्थोयमपशब्दः । उपास्यतयासन्निहितस्य परब्रह्मणः स्थानतयानवद्वारवत्त्वादिनाचपुरशब्दितेउपासकशरीरे पुण्डरीकाकारमल्पं हृदयाख्यं परस्यब्रह्मणोवेश्म ॥

दहरोस्मिन्नंतराकाशस्तस्मिन्यदंतस्तदन्वेष्टव्यंतद्वावविजिज्ञासितव्यमिति ॥

अस्मिन्वेश्मनिदहरः सूक्ष्मः आकाशः यइतिपुंल्लिंगयच्छब्दोध्याहर्तव्यः । अस्मिन् योदहराकाशः तस्मिन्यदंतरित्यत्रांतःशब्दोंतरवर्तिपरः चशब्दश्चाध्याहर्तव्यः । ततश्चायमर्थः अस्मिन् दहरपुण्डरीकेयोदहराकाशः तदंतर्वर्तिचयत् तदुभयंश्रवणमननाभ्यामवगंतव्यं ध्यातव्यंचेत्यर्थः । तदन्वेष्टव्यमित्यत्रतदितिनपुंसकलिंगनिर्देशोलिंगसामान्यविवक्षयाद्रष्टव्यः । यद्वा दहरोस्मिन्नंतराकाशइत्यत्रनपुंल्लिंगोयच्छब्दोध्याहर्तव्यः । योस्मिन्दहराकाशः तदंतर्वर्तिचयदितियच्छब्देनैव "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् । १ । २ । ६९॥" इतिकृतनपुंसकैकशेषवद्भावेनैकेनैवनपुंसकलिंगयच्छब्देनद्वयोरपिपरामर्शसंभवात् । तदन्वेष्टव्यमितिवाक्येतच्छब्देपिनपुंसकैकशेषसंभवादेकेनैवतच्छब्देनद्वयोरपिपरामर्शः । ततश्चानेन वाक्येन दहराकाशस्तदंतरवर्तिचान्वेष्टव्यमित्युक्तं भवति । उक्तंचभगवताभाष्यकृता यदिदमस्मिन् ब्रह्मपु-

१ आदिपदेन संकल्पादेवतुतच्छ्रुतेः । ४ । ४ । ८ । संपद्याविर्भावः स्वेनशब्दात् । ४ । ४ । १ ॥ इतिसूत्रेगृह्येते ॥

रेदहरंपुण्डरीकंवेश्मेत्यनूद्य तस्मिन्दहरपुण्डरीकवेश्मनि योदहराकाशः यच्चतदंतर्वर्ति तदुभयमन्वेष्टव्यमितिविधीयतइति । अत्रचाकाशशब्दः आसमंतात्काशतेप्रकाशतेइतिव्युत्पत्त्यापरमात्मपरः । तत्रहेतुरुत्तरत्रवक्ष्यते।नचतदंतरवर्तिनएवान्वेष्टव्यत्वेप्रतीयमाने दहराकाशस्यान्वेष्टव्यतासिद्ध्यर्थमेतावान्क्लेशः किमर्थमाश्रीयते।किंच "विश्वजित्सर्वपृष्ठोतिरात्रोभवतीत्यत्र पृष्ठगतसर्वताविध्याक्षिप्तपृष्ठविधिवद्दहराकाशांतरवर्तित्वेनगुणजातोपासनस्य दहराकाशोपासनमंतरेणासंभवेनाक्षेपादेव दहराकाशोपासनस्यापि सिद्धतयायत्तच्छब्दयोर्नपुंसकैकशेषैकवद्भावचशब्दाध्याहारक्लेशानुभवोव्यर्थइतिवाच्यम् । "अथयइहआत्मानमनुविद्यव्रजंत्येतांश्चसत्यान्कामान्" इत्यौपसंहारिकोभयोपासनवचनानुसारेणास्यक्लेशस्यानुभोक्तव्यत्वात् । नचतदेववाक्यंदहराकाशतदंतर्वर्तिलक्षणोभयोपासनविधिपरमस्त्वितिवाच्यम् । उपक्रमस्थंविस्पष्टतव्यप्रत्यययुक्तंवाक्यं विहायौपसंहारिकस्यविस्पष्टविधिप्रत्ययशून्यस्ययच्छब्दयुक्तस्यविधित्वकल्पनानौचित्यात् । तस्यविधित्वकल्पनायामप्यनुवादरूपस्याप्यस्यवाक्यस्यतदनुसारेणार्थद्वयोपासनपरत्वस्याश्रयणीयतया नपुंसकैकशेषादिक्लेशस्याश्रयणीयत्वात् । इतिशब्दोवाक्यसमाप्तौ । अथवाइतीत्यस्यानंतरमाचार्योब्रूयादित्यध्याहारः॥

**तंचेदब्रूयुर्यदिदमस्मिन्ब्रह्मपुरेदहरंपुण्डरीकंवेश्मदहरोस्मिन्नंतराकाशः किंतदत्रविद्यतेयदन्वेष्टव्यंयद्वावविजिज्ञासितव्यमिति ॥**

एवमुक्तवंतमाचार्यंस्वल्पहृदयमध्यवर्तितयातिस्वल्पआकाशे किंवावर्तितुमर्हतियदन्वेष्टव्यंस्यादितिदहराकाशशब्दितस्यब्रह्मत्वंतदंतर्वर्तितयानिर्दिष्टस्यतद्गुणजातत्वंचाजानानाअंतेवासिनोयदिब्रूयुरित्यर्थः । किंतदत्रविद्यत इतिवाक्यंसर्वांतरस्यपरमात्मनः अन्तर्वे

र्यंतरासंभवलक्षणानुपपत्तिगर्भांतर्वर्तिविशेषप्रश्नपरमिति व्यासार्याणामभिप्रायइति यद्यपिप्रतीयते तथापीदमस्मिन्ब्रह्मपुरे दहरंपुण्डरीकंवेश्मदहरोस्मिन्नंतराकाश इत्येतावन्मात्रंश्रुतवतांशिष्याणांपरमात्मत्वविरोधिन्याकाशशब्देजागरूके दहरत्वान्वेष्टव्यांतराधारत्वादिविरोधिलिंगेच जाग्रतिब्रह्मलिंगेषु चानुपन्यस्तेषु परमात्मनिश्चयस्यतदुपजीव्याक्षेपप्रवृत्तेर्वासंभवात् । किंचसर्वांतरस्यपरमात्मनोंतर्वर्त्यसंभवलक्षणानुपपत्तेरेवशिष्याणांहृदिविपरिवर्तमानत्वेप्रश्नवाक्येदहरंपुण्डरीकंवेश्मदहरोस्मिन्नंतराकाशइतिदहरपुंडरीकांतरवर्तित्वेनाकाशस्यदहरत्वोपन्यासस्यवाप्रतिवचनेयावान्वायमाकाशइतिवैपुल्योपन्यासस्यवा असंगत्यापातात् । व्यासार्याणामप्युक्तएवार्थोभिप्रेतः । केचित्तुशरीरस्यब्रह्मपुरत्वेनोपक्रमादेवतदंतर्वर्तिआकाशशब्दनिर्दिष्टंब्रह्मेत्यवगत्यैवतदंतर्वर्तिवस्त्वंतरासंभवलक्षणानुपपत्तिमभिप्रयन्तएवअंतर्वर्तिविशेषंपप्रच्छुरित्यपिसंभवान्नानुपपत्तिरितिवदन्ति ॥

**सब्रूयाद्यावान्वाअयमाकाशस्तावानेषोंतर्हृदयआकाशउभेस्मिन्द्यावापृथिवीअंतरेवसमाहितेउभावग्निश्चवायुश्चसूर्याचंद्रमसावुभौविद्युन्नक्षत्राणि ॥**

एवमुक्तःसआचार्यः प्रतिब्रूयाद्धृदयपुंडरीकमध्यवर्त्याकाशशब्दनिर्दिष्टः भूताकाशवद्विपुलः द्यावापृथिव्यादिशब्दोपलक्षितंभोग्यभोगस्थानभोगोपकरणम् ।अग्निसूर्यादिशब्दोपलक्षितोभोक्तृवर्गश्चसमाश्रितइत्यर्थः ।यच्चास्येहास्तियच्चनास्तिसर्वंतदस्मिन्समाहितमिति अस्योपासकस्येहलोकेयद्भोग्यजातमस्तियच्चमनोरथमात्रगोचरमिह नास्ति सर्वंतद्भोग्यजातमस्मिन्दहराकाशेसमाहितमित्यर्थः । दहराकाशोनिरतिशयभोग्यइतियावत् । भगवताभाष्यकृतायावान् वायमाकाशस्तावानेषोंतर्हृदय आकाशइतिदहराकाशस्यातिमहतामभिधाय "उभेस्मिन् द्यावापृथिवी अंतरेवसमाहिते । उभावग्निश्चवा-

द्युश्चसूर्याचन्द्रमसावुभौ । विद्युन्नक्षत्राणीति प्रकृतमेव दहराकाशम स्मिन्निति निर्दिश्यतस्मिन्त्सर्वजगदाधारत्वमभिधाय यच्चास्येहा- स्ति यच्चनास्ति सर्वं तदस्मिन्त्समाहितमिति । पुनरप्यस्मिन्नितित- मेवदहराकाशं परामृश्य तस्मिन्नस्योपासकस्येह लोकेयद्भोग्यजात- मस्ति यच्चमनोरथमात्रगोचरमिहनास्ति सर्वंतद्भोग्यजातमस्मिन्दह- राकाशे समाहितमिति निरतिशयभोग्यत्वं दहराकाशस्याभिधा- यः" इतिभाषितम् । नचयच्चास्येहास्ति यच्चनास्ति सर्वं तदस्मिन्स- माहितमित्यनेनोपासकभोग्यवस्त्वाधारत्वमात्रंप्रतीयते । नतु दहरा काशस्यनिरतिशयभोग्यत्वम् । ततश्च यच्चास्येहास्तीतिवाक्येन दहराकाशस्य निरतिशयभोग्यत्वमभिधायेतिभाष्यं कथमुपपद्यता मितिवाच्यम् । उपासकस्य ब्रह्मप्राप्त्यैकफलकस्य स्वर्गपश्वादीनां भोग्यत्वाभावात् । यच्चास्येहास्ति यच्चनास्ति सर्वंतदस्मिन्समा- हितमित्यनेन दहराकाशस्य निरतिशयभोग्यत्वमेव प्रतिपाद्यतइ- तिव्यासार्यैरुक्तत्वात् । नास्याशंकाया अवकाशइतिद्रष्टव्यम् ॥ केचित्तुसयदि पितृलोककामो भवतीत्यादिना प्राचीनानेकजन्म- संबन्धिपित्रादिवर्गदिदृक्षया संकल्पमात्रेणतत्स्रष्टृत्वस्य च प्रति- पादयिष्यमाणत्वात् । सूत्रकृतापि " संकल्पादेवतच्छ्रुतेः । ४ । ४ । ८ " । इति सूत्रेणतद्वाक्यस्य विवक्षितार्थत्वाविष्करणात् । योह्यस्येतः प्रैति न तमिह दर्शनाय लभते ॥ अथ येचास्येह जीवा येचप्रेता यच्चान्यदिच्छन्न लभते सर्वंतत्रगत्वा विन्दत इत्यनेन नष्टानां पित्रादीनां मुक्तकामनाविषयत्वप्रतिपादनात् । " प्रत्यक्षो पदेशान्नेतिचेन्नाधिकारिकारिकमंडलस्थोक्तेः । ४ । ४ । १८ । " इति सूत्रोक्तन्यायेन ब्रह्मविभूतितया नष्टपित्राद्यनुभवस्यकामना- विषयत्वसंभवाच्च । अन्यथा अस्मिन्कामाः समाहिताः एतांश्चसत्या न्कामानित्यादावपि कामशब्दस्य निरतिशयभोग्यार्थकत्वं को

वारयेत् । तथाजक्षन्क्रीडन्नित्यादावपि भोग्यार्थकत्वमेवस्यादिति परोपिविजयेत । अतोयथाश्रुतार्थत्वेपि नदोषः । भाष्यमपिभोग्याधारत्वफलितभोग्यत्वपरमेवास्त्विवतिवदन्ति ॥ अत्र भूताकाशतुल्यवैपुल्यप्रतिपादनेन द्यावापृथिव्यादिजगदाश्रयत्वप्रतिपादनेनोपासकं प्रति निरतिशयभोग्यताप्रतिपादनेनच दहराकाशस्य प्रसिद्धाकाशवैलक्षण्यप्रतिपादनात्स्वल्पे दहराकाशे किमपिमातुं नशक्नोतीत्याक्षेपबीजं परिहृतंभवति ॥

**तंचेद्ब्रूयुरस्मिंश्चेदिदं ब्रह्मपुरे सर्वं वा समाहितम् । सर्वाणि च भूतानि सर्वेच कामाः । यदेतज्जरावाप्नोति प्रध्वंसते वा किंततोऽतिशिष्यत इति ॥**

अल्पत्वरूपमाक्षेपबीजं परिहृत्य किं तत्र विद्यते इति प्रश्नं प्रतिविवक्षत्येव । आचार्यैउक्तेर्थे अनुपपत्तिं पश्यंतः शिष्या यद्याचार्यं ब्रूयुः किमिति ब्रह्मपुरशब्दितं शरीरं द्यावापृथिव्यादिशब्दनिर्दिष्टभोग्यभोगोपकरणभोगस्थानमग्निवाय्वादिशब्दानिर्दिष्टो भोक्तृवर्गश्च यद्याश्रयेयुः । तदा शरीरस्य जरानाशादौसति द्यावापृथिव्यादिकं किमपि नावशिष्येत तदपि नश्येदित्यर्थः । सर्वेचकामाइत्यस्य यच्चास्येहास्तीतिवाक्यनिर्दिष्टनिरतिशयभोग्यत्वानुवादित्वात्सर्वेचकामाइत्यस्य निरतिशयभोग्यत्वमर्थइतिव्यासार्यैरुक्तम् ॥

ननुदहराकाशाश्रितत्वस्यैवोक्ततया ब्रह्मपुरशब्दितशरीराश्रितत्वस्यानुक्ततया तज्जरानाशानुविधायिजरानाशवत्त्वस्य दहराकाशाश्रिते द्यावापृथिव्यादौ कथंप्रसक्तिरितिचेदुच्यते । यथा घटाद्यंतराकाशे निहितस्य दध्यादेर्वस्तुतोघटादिरेव धारकः । आकाशःपरमवकाशात्मनोपकरोत्येवं देहांतर्वर्तिनि दहराकाशे विद्यमानस्य द्यावापृथिव्यादेः देहएव धारकः, दहराकाशस्त्ववकाशात्मनोपक-

रोति। अस्तुवादहराकाशस्य घटाकाशवैलक्षण्येन स्वतो धारकत्वम् । तथापि तस्य देहजराप्रध्वंसानुपदभाविजराप्रध्वंसवत्त्वाद्यावद्देहस्यभारधारणानुकूलंबलं तावत्पर्यन्तमेव दहराकाशस्य तद्धारकत्वमिति फलतो देहएव तस्य सर्वस्य धारकः पर्यवस्यतीत्याक्षेप्तॄणांशिष्याणामभिप्रायः ॥

तत्प्रतिवक्ति ॥

**नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते एतत्सत्यं ब्रह्मपुरम् ॥**

भोग्यभोगस्थानभोगोपकरणभोक्तृवर्गादिशालितया पुरमिव वर्तमानमेतद्दहराख्यं ब्रह्म । न तु घटाकाशादिवत्केवलमवकाशात्मनोपकारकम् । यथा पुरंभोग्यभोगस्थानादीनां स्वत एवाधारभूतं न तु दध्यादीनां घटादिवदाकाशात्मनोपकारकं तथेत्यर्थः ॥

ननु स्वतो धारकत्वेपि देहांतर्वर्तितया तदंतर्गतहृदयवत्तज्जरानाशानुविधायित्वं स्यादितिशंकाबीजं परिहरति ॥

**एतत्सत्यमिति ॥**

सत्यं निर्विकारमित्यर्थः ॥ अतएव देहजरामरणानुविधायि न भवतीत्यर्थः । यद्वा अथ यत्तत्सत्तदमृतमित्यस्मिन्प्रकरणे वक्ष्यमाणसत्यशब्दनिर्वचनरीत्या चेतनाचेतननियामकत्वंसत्यत्वम् । यथाकथंचिद्घटादिविलक्षणधारकइत्यर्थः । केचित्त्वस्मिश्चेदिदंब्रह्मपुरइत्यत्रब्रह्मपुरशब्देन ब्रह्मरूपपुरत्वाद्दहराकाश एवोच्यते । यदेतज्जरावाप्नोतीत्येव पाठः । तत्रचैतस्य शरीरस्य जराएतज्जरा यदा दहराकाशं प्राप्नोति तद्ध्वंसेन ध्वंसते वा तदा द्यावापृथिव्यादिकं नावशिष्येत इत्येवार्थः ॥ नतुब्रह्मपुरशब्देन शरीरपरामर्शमभिप्रेत्य तदनुगुणो दृशाभिप्रायपरिकल्पनाक्लेशोऽनुसर्तव्यइति वदन्ति ॥

एवं मध्ये प्रसक्तमाक्षेपं परिहृत्य किं तदत्र विद्यत इत्यंतर्वर्तिविशेषजिज्ञासां शमयति ॥

अस्मिन्कामास्समाहिताः ॥

काम्यंत इतिकामाः कल्याणगुणाः ॥

कोदहराकाशः सचकैः कामैर्विशिष्ट इत्याकांक्षायामाह ॥

एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसंकल्पः ॥

उक्तंचभगवताभाष्यकृता दहराकाशस्य काम्यभूतकल्याणगुणविशिष्टत्वं तस्यात्मत्वं च । "एषआत्माअपहतपाप्मेत्यादिना-सत्यसंकल्पः" इत्यंतेन स्फुटीकृत्येति ॥ पापजरामरणशोकबुभुक्षापिपासावर्जितः सत्यकामस्सत्यसंकल्पश्चेत्यर्थः । परमात्मप्रकरणेषुपाप्मशब्दः सुकृतदुष्कृतसाधारणः । नसुकृतं नदुष्कृतं सर्वे पाप्मानोऽतो निवर्तंते इति सुकृतेपि पापशब्दप्रयोगात् । "एतेवैनिरयास्तातस्थानस्यपरमात्मनः" इतिस्वर्गादीनामपि मुमुक्षोरनिष्टत्वेन स्वर्गादिसाधनकर्मणां मुमुक्षून्प्रत्यनिष्टसाधनत्वेनालौकिकत्वेसत्यनिष्टसाधनत्वलक्षणपापशब्दप्रवृत्तिनिमित्तस्यक्रोडीकृतत्वेनपापशब्दवाच्यत्वावश्यंभावात् । अपहतपाप्मत्वं च नध्वस्तपाप्मत्वम् । नैनंसेतुमहोरात्रेतरतोनसुकृतंनदुष्कृतमितिसुकृतदुष्कृतप्राप्त्यभावश्रवणात् । तरतेः प्रातिवचनत्वात् । तस्मादपहतपाप्मत्वमश्लिष्टपाप्मत्वमित्यर्थः । अकृतकर्माश्लेषस्यसर्वसाधारणत्वात्कृतेपिकर्मणितत्फलाश्लेषउच्यते । अतईश्वरेणकृतानिपुण्यपापजातीयानिकर्माणि न शुभाशुभफलजननशक्तानीत्यर्थः । कृतेपिपापे तत्फलजननशक्तिप्रतिभटत्वलक्षणः कश्चिदीश्वरस्यस्वभावविशेषोऽपहतपाप्मत्वम् । परिशुद्धात्मविषयस्यापहतपाप्मत्वस्यायमेवार्थः । स तु तस्य तिरोधानार्हः प्रतिबंधकनिवृत्तावाविर्भवति । ईश्वर-

स्यतु तिरोधानानर्हा नित्याविर्भूत इति विशेष इतिव्यासार्यैः"अंतस्त द्धर्मोपदेशात् ।१।१।२१॥" इत्यधिकरणेवर्णितः । अत्रसत्यकामश ब्दो न कामनायाः सत्यत्वपरः। अमोघाशयत्वस्य सत्यसंकल्पशब्दे- न सिद्धत्वात् । नापि काम्यंत इति व्युत्पत्त्या गुणमात्रपरः। कतिपय गुणांतराणांपृथगुक्तेः । अतोभोग्यभोगोपकरणभोगस्थानरूपा नि- त्याः कामाअस्य संतीत्युच्यते ॥ तदक्षरे परमेव्योमन्नित्युक्तरीत्या नित्यविभूतिविशिष्टत्वं सत्यकामशब्दार्थ इतिव्यासार्यैरुक्तम् । वेदार्थ संग्रहेभाष्यकृताप्युक्तं "सत्यसंकल्पः अप्रतितसंकल्पः" इति ॥

यथाह्येवेह प्रजाअन्वाविशन्ति यथानुशासनम् । यं यमन्तमभिकामा भवन्ति । यं यमन्तं यं जनपदं यं क्षेत्रभागं तंतमेवोपजीवन्ति ॥

इह लोके प्रजा यथानुशासनं राजशासनानतुल्लंघनेन राजानम- न्वाविशंति अनुसरन्तीत्यर्थः ॥

अनुसृत्य किं कुर्वंतीत्यत्राह॥यंयमंतमभिकामा भवन्ति । कर्मणः फलापवर्गिकत्वात्फलमेव कर्मणोंतः यंयमंतंयद्यत्फलमभिकामा अ- भ्यर्थिनो भवन्ति जनपदं क्षेत्रादिकं तत्तत्फलं यथानुशासनमेवोप- जीवंति।राजशासनानुरोधेनैवेहलोके यथोपजीवंति तथा परलोकेपि परतंत्रा भवंतीति भावः ॥ यद्वा यंयमंतमभिकामा भवंति तामिह लोकेयथा प्रजाअन्वाविशंति राजानमनुसृत्य लभंते तथा परलोके- प्युपजीवन्तीत्यर्थः । अयमेवार्थो व्यासार्यैर्वर्णितः ॥

एवं कर्मसाध्ये परलोके पारतंत्र्यमुक्त्वा क्षयिष्णुत्वमप्याह ॥

तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्य चितो लोकः क्षीयते ॥

राजसेवादिकर्मणार्जितो लोको यथा क्षीयते एवमेवामुत्र पर लोके पुण्यसंपादितो लोकः क्षीयते ॥

तद्य इहात्मानमननुविद्य व्रजंत्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेष्वकामचारो भवति । अथ य इहात्मानमनुविद्य व्रजंत्येतांश्च सत्यान्कामांस्तेषांसर्वेषु लोकेषु कामचारो भवति ॥

यस्मात्सुकृतसाध्येषु परलोकेषु पारतंत्र्यक्षयिष्णुत्वादिकं तस्माद्य उक्तमात्मानमेतानपहतपाप्मत्वादीनेतांश्च सत्यान्नित्यान्काम्यमानान्कल्याणगुणांश्चाननुविद्यानुपास्य परलोकं व्रजन्ति तेषां सर्वेषु लोकेषु अकामचारोभवति । पारतंत्र्यमिति यावत् । ये त्वात्मानमपहतपाप्मत्वादींश्च कल्याणगुणानुपास्य परलोकं व्रजन्ति ते ब्रह्मविभूतिभूतान्विकारिलोकाननुभूय यथाकामं तृप्ता न पारतंत्र्यमनुभवन्तीत्यर्थः ॥ नन्वपहतपाप्मेत्यादिवाक्येषु अपहतपाप्मत्वादिधर्माणां स्वातंत्र्येणानुपस्थितानां कथमेतानित्यनेन परामर्शः ॥ न च गत्यभावात्तेषामेव परामर्श इति वाच्यम्॥यच्चास्येहास्तीतिवाक्यनिर्दिष्टस्य सर्वाणि भूतानि सर्वे च कामा इति बहुवचनांतकामशब्देनानूदितस्य निरतिशयभोग्यत्वस्यैवास्मिन्कामास्समाहिताः एतांश्च सत्यान्कामानित्यत्रापि निर्देशोस्त्विति चेन्न ॥ तथासत्यपहतपाप्मा विजर इत्याद्युपन्यासवैयर्थ्यप्रसंगात्कामानित्यस्य भोग्यत्वपरत्वे बहुवचनासंगतेश्चापहतपाप्मत्वादय एव एतांश्च सत्यान्कामानिति कामशब्देन निर्देश्याः । भोग्यत्वहेतुपितृलोकादिविषयपरत्वे सत्यानितिकाम्यमानानां नित्यत्व कथनस्यासंभवादिति सिद्धम् । ततश्च दहरोस्मिन्नंतरआकाश इत्याकाशशब्दनिर्दिष्टः परमात्मा न भूताकाशः, तस्मिन्यदंतरिति

निर्दिष्टमपहतपाप्मत्वादिगुणजातमितीयता संदर्भेणोपदिष्टं भवति ॥

**सपदि पितृलोककामो भवति । संकल्पादेवास्य पितरः समुत्तिष्ठन्ति । तेन पितृलोकेन संपन्नो महीयते ॥**

स मुक्तः सन्यदि प्राचीनानेकजन्मसंबन्धिपितृवर्गं दिदृक्षेत तदा स पितृवर्ग एतस्य संकल्पमात्रसमुत्थितो भवति । तेन सहितः पूज्यते ॥

**त इमे सत्याः कामा अनृतापिधानाः तेषां सत्यानां सतामनृतमपिधानम् ॥**

परमात्मनिष्ठा इमे सत्याः अपहतपाप्मत्वादयः कामाः अनृतमपिधानं येषां ते अनृतापिधाना अनृताच्छादिताः । ऋतेतरविषयो ह्यनृतशब्दः । ऋतमिति कर्मवाची ऋतं पिबंतामिति वचनात् । ऋतं कर्मफलाभिसन्धिरहितं परमपुरुषाराधनवेषं तत्प्राप्तिफलम् । अत्र तद्व्यतिरिक्तफलं सांसारिकफलं कर्म अनृतं ब्रह्मप्राप्तिविरोधीति महासिद्धांते भाषितम् । तेषां सत्यानां सतांविद्यमानानामेव कर्माच्छादकम् । ततश्चस्वात्मभूतपरमात्मगतापहतपाप्मत्वादयो धर्माः कर्मरूपाविद्यातिरोहितत्वान्न प्रकाशन्ते इत्यर्थः ॥

**योयो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दते ॥**

---

१ एतदधिकरणसिद्धान्तसंग्राहको वियतिजयति क्रीडनसर इति काव्यकादम्बिनी समस्यापूर्तौ मदीयश्लोको यथा “ गुणैरष्टाभिर्यच्छ्रुतिनिगदितैः कामपदगैरुपेतं प्रामन्यं श्रुतिषु पठितं तत्क्रतुनयात् । मुनीनां मुक्तानां हृदयदहराख्ये सुविमले परंतद्ब्रह्माख्यं वियति जयति क्रीडनसरः ” इति ॥ अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्प इत्यत्रोक्ता अष्टौ गुणाः ॥

अस्योपासकस्य यो बंधुवर्गः इतः प्रैति न स इह द्रष्टुं शक्यः। अन्येतु ये जीवंतः नष्टाश्च बंधवः अलभ्याश्च मनोरथाः तत्सर्वं दहराकाशं परमात्मानं प्राप्यलभते। अत्र यच्चेहास्ति यच्चनास्तीति वाक्यसमानार्थत्वादस्य वाक्यस्य मुक्तस्य सर्वतोविरक्तस्य प्राप्यांतरासंभवान्निरतिशयभोग्यत्वमेवार्थः॥

अत्र ह्यस्यैते सत्याः कामाः॥

यत् उपासकस्य काम्यमाना भोग्यभूतापहतपाप्मत्वादयः एतन्निष्ठा अतोनिरतिशयभोग्यत्वमित्यर्थः। हिशब्दो हेतुत्वपरः॥

तद्यथाहिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरिसंचरन्तो न विंदेयुरेवमेवेमाः सर्वाः प्रजाः अहरहर्गच्छंत्य एतं ब्रह्मलोकं न विंदंत्यनृतेन हि प्रत्यूढाः॥

यथाऽधस्तान्निक्षिप्तं हिरण्यनिधिं निधिमत्क्षेत्रस्वभावविज्ञानहीना निधेरुपर्युपरिसंचरंतोपि न लभन्ते एवमेवेमाः सर्वाः प्रजाः सुषुप्तिकाले अहरहर्गच्छंत्यः सुषुप्तौ सति संपद्य न विदुरित्युक्तरीत्याऽविभागं गच्छंत्यः एतं दहराकाशाख्यं ब्रह्मरूपं लोकं न विन्दन्ति न लभंते न जानंतीत्यर्थः। ब्रह्मलोकशब्दो निषादस्थपत्यधिकरणन्यायेन समानाधिकरणो। तत्रहेतुमाह। अनृतेन हि प्रत्यूढाः। प्रतीपं नीताःस्वभावान्तरंनीताः प्राप्ताः। आच्छादिता इति यावत्। यद्वाऽहरहर्गच्छंत्य इति न सुषुप्तिकालीनं गमनमुच्यते। अपित्वंतरात्मत्वेन सर्वदा वर्तमानस्य दहराकाशस्य हिरण्यनिधिवत्परमपुरुषार्थभूतस्योपर्युपर्यहरहर्गच्छंत्यः सर्वस्मिन्काले वर्तमानास्तमजानंत्यस्तं न विदंति न लभंतइत्यर्थः। अर्थद्वयमपि भाष्यकृता वर्णितम्। अत्रव्यासार्यैरंतर्यामिविषयतया व्याख्यानेंतर्यामिण्यहरहर्गमनस्य दहराकाशस्य परब्रह्मत्वसाधकत्वमयुक्तम्। उपासकानु-

ग्रहायावस्थितो हि दहराकाशः अंतरात्मतयावस्थितो ह्याधारः । तयोरूपभेदादित्याशंक्य धर्म्यैक्याभिप्रायेणैक्यमुक्तमिति परिहृतम् ॥ पूर्वोक्तस्य हृदयांतर्वर्तित्वं स्मारयति ॥

सवाएष आत्मा हृदि ॥

हृदयनामनिर्वचनादप्यात्मनो हृद्गतत्वंसिद्ध्यतीत्याह ॥

तस्यैतदेवनिरुक्तंहृद्ययमिति । तस्माद्धृदयमिति ॥

तस्यैतस्य हृदयस्य । हृदि अयमात्मा वर्तत इति हृदयशब्दनिरुक्तिरितिभावः ॥

अहरहर्वा एवंवित्स्वर्गंलोकमेति ॥

अहरहःप्रत्यहमाप्रयाणम् । एवंविदेतादृशदहरोपासननिष्ठः सुखरूपं लोक्यमानं ब्रह्म प्राप्नोतीत्यर्थः । ब्रह्मोपासननिष्ठस्य तत्क्रतुन्यायेन ब्रह्मप्राप्तेरेव वक्तव्यतया प्रसिद्धस्वर्गलोकप्राप्त्यसंभवादिति द्रष्टव्यम् ॥

कथं ब्रह्मप्राप्तिः प्राप्तस्य वा ततः किं भवतीत्यत आह ॥

अथ य एष संप्रसादोस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ॥

अथशब्दः प्रकृतार्थत्वद्योतकः । संप्रसादशब्दः सुषुप्तिस्थानवचनस्सन्तत्संबन्धाज्जीवंलक्षयति।अहरहर्वा एवंविदिति पूर्ववाक्यनिर्दिष्ट उपासको जीवो अस्माद्धेयतयापरिदृश्यमानाच्छरीरादुत्क्रम्यदेशविशेषनिष्ठं परमात्मानं प्राप्य स्वेनरूपेणाभिनिष्पद्यते । अस्यवाक्यस्यार्थः प्रजापतिविद्यायांविशिष्यवक्ष्यते ॥

एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति ॥

एष आत्मा एतदमृतमित्यत्र एतच्छब्दौ पूर्ववाक्ये परंज्योतिरुप-

संपद्येति प्राप्यतया निर्दिष्टपरंज्योतिश्शब्दितब्रह्मपरौ । प्राप्यतया प्राधान्यादव्यवहितत्वाच्च ॥

**अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय ॥**

उक्तलक्षण आत्मा सेतुरिव धारकः । किमर्थं स सेतुर्विधृतिरित्यत्राह । एषां लोकानामसंभेदाय असंभेदोऽसंकरः । यद्ययं परमात्मा स्वशासनेन जगन्न धारयेत् सर्वधर्माणां सांकर्यमेवस्यात् । पृथिव्या गंधवत्त्वंजलस्यशैत्यं तेजस औष्ण्यमित्यादयो धर्माः परमात्माज्ञया व्यवस्थिता भवन्ति । सिनोति बध्नाति स्वस्मिन्नश्चिदचिद्वस्तुजातमसंकीर्णमिति सेतुरुच्यते इति " सामान्यात्तु । ३ । २ । ३१ ॥ " इतिसूत्रे भाषितम् ॥

**नैनं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम् ॥**

तरतिः प्राप्तिवचनः । वेदांतं तरतीतिवदिति तत्रैव भाषितत्वात् । एनं परमात्मानं सेतुमहोरात्रे परिच्छेदकत्वेन नप्राप्नुतः । जरादिकमपि न प्राप्नोति ॥

उक्तमर्थंनिगमयति ॥

**सर्वे पाप्मानोतो निवर्तन्ते ॥**

शोकादिषु पाप्मशब्दस्यामुख्यत्वेपि सुकृतदुष्कृतयोरलौकिकमुमुक्ष्वनिष्टसाधनत्वलक्षणपापशब्दप्रवृत्तिनिमित्तसद्भावात्पाप्मशब्दोमुख्य इति व्यासार्यैर्लघुसिद्धांते उक्तम् ॥

तत्रहेतुमाह ॥

**" अपहतपाप्मा ह्येष ब्रह्मलोकः " ॥ इति ॥**

ब्रह्मरूपो लोकः एष अपहतपाप्माहि । हिर्हेतौ । यस्मादपहतपा-

प्मातस्मात्सर्वेपाप्मानोतो निवर्तन्त इत्यर्थः । पापहेतुकर्माचरणेपि तदुत्पत्तिप्रतिबंन्धकशक्तियोगित्वमेव ह्यपहतपाप्मत्वम् । तस्मान्न- पापशब्दमुख्यार्थसुकृतदुष्कृतयोस्तत्फलभूतजरारोगादीनांच प्रस- क्तिरित्यर्थः ॥

तस्माद्वा एतं सेतुं तीर्त्वा अंधस्सन्ननंधो भवति । विद्धस्सन्नविद्धो भवति। उपतापी सन्ननुपतापी भवति॥

एतं परमात्मलक्षणं सेतुं प्राप्य पूर्वमांध्यायुधवेधज्वरादियुक्तदे- होपिसन्तद्दोषरहितदिव्यदेहयुक्तो भवतीत्यर्थः ॥

तस्माद्वा एतं सेतुं तीर्त्वा अपिनक्तमहरेवाभिनि- ष्पद्यते । सकृद्विभातो ह्येष ब्रह्मलोकः ॥

परमात्मानंप्राप्तस्य तामिस्रारात्रिरपिदिवैव । तस्याऽज्ञानप्रसक्तेर- भावात् । अहस्सदृशी सा रात्रिः । अहोरात्रयोर्न विशेषः । अत्र हेतुः सकृद्विभातः । सर्वदा ब्रह्मस्वरूपप्रकाशस्यासंवृततया भासमान- त्वादित्यर्थः ॥

तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति । तेषामे वैषःब्रह्मलोकः।तेषाꣳसर्वेषु लोकेषु कामचारो भवति ॥

तत्तत्र । एवंसति एतमेव परमात्मानंस्त्रीविषयतृष्णात्यागपूर्वक- शास्त्राचार्योपदेशादिना जानंति तेषामेवेदृशब्रह्मप्राप्तिः, सर्वलोकानु- भवश्च । न ब्रह्मचर्यहीनानामित्यर्थः ॥

अरश्चहवैण्यश्चार्णवौ ब्रह्मलोके ॥

अरसंज्ञकोण्यसंज्ञकश्च द्वौ समुद्रौ ब्रह्मलोक इत्यर्थः ॥

प्रसिद्धं चतुर्मुखलोकं व्यावर्तयति ॥

तृतीयस्यामितोदिवि ॥

प्रथमो द्युलोकः स्वर्गलोकः द्वितीयस्तु चतुर्मुखलोकः तृतीयस्तु वैकुंठलोक इतिभावः ॥

तदैरंमदीयं सरः तदश्वत्थः सोमसवनः ॥

तत्तत्रैरंमदीयनामकंसरः । इरयाऽमृतेन माद्यंतेयस्मिन्तदैरं मदीयममृतमयं सर इत्यर्थः । सोमसवननामाश्वत्थः चंद्रवदाह्लादकत्वात्सोमसवनत्वम् ॥

तदपराजितापूर्ब्रह्मणः ॥

तत्तत्र अब्रह्मविद्भिः प्राप्तुमशक्यत्वेनापराजितानाम पुरी ॥

प्रभुविमितꣳहिरण्यमयम् ॥

मंडपमितिशेषः । प्रभुणा भगवता परमपुरुषेण विशेषेण मितं स्वभोग्यभूमित्वेन विशेषतः परिगृहीतमित्यर्थः । भगवतो व्याप्तत्वेपि नित्यविग्रहविशिष्टतया सन्निधानाद्विमितत्वम् । अतश्च तद्देश विशिष्टब्रह्मप्राप्तिरेव ब्रह्मप्राप्तिरितिभावः ॥

तद्य एवैतावरंचाण्यं चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकः तेषां सर्वेषु लोकेषु कामचारो भवति ॥

ब्रह्मप्राप्तिसाधनीभूतारण्यशब्दितार्णवद्वयप्राप्तेः ब्रह्मचर्याधीनत्वाद्ब्रह्मचर्यमेव सर्वसाधनोत्कृष्टमितिभावः ॥

उक्तब्रह्मलोकप्राप्तिसाधनतयामूर्धन्यनाडीगमनं प्रस्तौति ॥

अथ या एता हृदयस्य नाड्यस्ताः पिंगलस्य अणिम्नस्तिष्ठंति शुक्लस्य नीलस्य पीतस्य लोहितस्येति ॥

हृदयसंबंधिन्यो नाड्यो नानारूपसूक्ष्मान्नरसपूर्णास्तिष्ठंतीत्यर्थः ॥

असौवा आदित्यः पिंगलः एष शुक्ल एष नील एष पीत एष लोहितः ॥

आदित्यस्य नानारूपत्वं च मधुविद्यायां प्रसिद्धं प्रत्यक्षसिद्धंच । ततश्चैतद्रश्मिसंबंधादेवान्नरसस्य नानारूपत्वं चेतिभावः ॥

तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुंच एवमेवैता आदित्यस्य रश्मयः उभौ लोकौ गच्छंतीमं चामुंच ॥

यथा विस्तीर्णो महापथो ग्रामद्वयप्रतिष्ठितो भवति तथादित्यस्य रश्मयो लोकद्वयानुप्रविष्टा इत्यर्थः ॥

लोकद्वयानुप्रवेशक्रममाह ॥

अमुष्मादादित्यात्प्रतायंते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायंते तेमुष्मिन्नादित्ये सृप्ताः प्रतायन्ते सन्ततास्सृप्ताः ॥

प्रतायंते संतताः सृप्ताः प्रविष्टाः । रश्मीनामुभयलिंगत्वादेता इतिच निर्देशः । शिष्टंस्पष्टम् ॥

तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नस्स्वप्नं न विजानाति आसु तदानाडीषु सृप्तोभवति ॥

तत् तस्मात् यत्र यदा समस्त उपसंहृतकरणमंडलः अतएवसंप्रसन्नः बाह्यविषयसंपर्कजनितकालुष्यशून्यः स्वप्नं न पश्यतीति।एतत्स्वप्नादर्शनं सुषुप्तिरितियावत् । तदा आसुनाडीषु प्रविष्टो भवति-पुरीतद्गतब्रह्मगमनाय नाडीषु प्रविष्टो भवति । नाड्योवाद्विसप्ततितहस्राणिहृदयात्पुरीततमभिप्रतिष्ठंते आभिः प्रत्यवसृप्य पुरीतति शेत इति श्रुत्यंतरात् नाडीपुरीतद्ब्रह्मणां समुच्चयेन सुषुप्तिस्थानत्वस्य । "तदभावोनाडीषु तच्छुतेरात्मनि । ३ । २ । ७ ।" इत्यत्रस्थितत्वात्तासामपि सुषुप्तिस्थानत्वंद्रष्टव्यम् ॥

तन्नकश्चनपाप्मास्पृशति ॥

सुषुप्तौ सतोपि कर्मणः फलजननसामर्थ्यं नास्तीत्यर्थः । तत्र कश्चन पाप्मा स्पृशतीत्यस्मिन्वाक्येनुष्ठानाशक्तिर्विवक्षितेति व्यासार्यवचनस्याप्ययमेवार्थः ॥

तत्र हेतुमाह ॥

## तेजसा हि तदा संपन्नो भवति ॥

सता सोम्य तदा संपन्नो भवतीति श्रुतेः । तेजश्शब्दः प्रकाश गुणयोगाद्ब्रह्मपरः । ब्रह्मणि संपत्तिर्नाम देहेंद्रियाधिष्ठातृत्वराहित्येन ब्रह्मण्यवस्थानम् । संपत्त्यधिकरणस्य करणत्वविवक्षया तृतीया निर्देशः ॥

## अथ यत्रैतदबलिमानं नीतो भवति ॥

अथ शब्दोऽर्थांतरप्रस्तावार्थः । अबलस्य भावः अबलिमाऽबलत्वम् । विरोधिकृतदौर्बल्यं नीतो भवतीत्येतद्यत्र यदेत्यर्थः । तदा दौर्बल्यंप्राप्तवानित्यर्थः ॥

## तमभित आसीना आहुर्जानासि मां जानासि मामिति ॥

तादृशदशा विशिष्टं परितोवर्तमाना बांधवाः मां जानासि मां जानासि किमित्याहुः । यदा एतासु नाडीषु स्थित इत्यर्थः ॥

## स यावदस्माच्छरीरादनुक्रांतो भवति तावज्जानाति । अथ यत्रैतच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते ॥

स्पष्टोर्थः॥ ( तद्यथ महापथा आतत उभौ ग्रामौ गच्छतीमं चामुं च एवमेवैता आदित्यस्य रश्मयः उभौ लोकौ गच्छंतीमं चामुं च अमुष्मादादित्यात्प्रतायंते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायंते अमुष्मिन्नादित्ये सृप्ता इतीति ) ॥

## सओमिति वाहोद्वामीयते ॥

सविद्वान् ॐतत्सदितिनिर्देशो ब्रह्मणस्त्रिविधः स्मृतः, तस्योदितिनामेति च प्रमाणप्रसिद्धं परमात्मनमाह कीर्तयति । कीर्तयन्नेव मीयते प्रमीयते च।मरणकाले तस्य भगवतो नामस्मरणं संभवति । यद्वा एतैरश्मिभिरुन्मीयते उन्नीयते । एको वाशब्दोवधारणार्थः ॥

## स यावत् क्षिपेन्मनस्तावदादित्यं गच्छति ॥

मनोवेगेनैव गच्छतीत्यर्थः । नचयावत् क्षिपेन्मनस्तावदादित्यं गच्छतीति त्वरावचनेनरश्म्यनुसारिणः मार्गस्यमार्गांतरवैलक्षण्य प्रतीतेर्मार्गभेदः शङ्क्यः । "अर्चिरादिना तत्प्रथितेः । ४ । ३ । १ ॥" इत्यधिकरणे नानाशाखासुतस्यैव मार्गस्यप्रथितेः प्रत्यभिज्ञानादर्चिरादिरेकएवमार्गः । अतोर्चिरादिनैष मार्गेण विद्वान्गच्छतीति समर्थितत्वात् । स यावत् क्षिपेदितित्वरावचनस्यकाश्मीरापेक्षयामगधान्क्षिप्रंगच्छंतीतिवत् गंतव्यस्वर्गाद्यपेक्षयादित्यगमनस्य-शैघ्र्येणाप्युपपत्तेर्नदोषः ॥

## एतद्वैखलुलोकद्वारंविदुषांप्रपदनंनिरोधोऽविदुषाम्।

विदुषां ब्रह्मलोकस्य प्रपदनं द्वारम् । प्रपद्यतेऽनेनेतिप्रपदनंप्राप्तिसाधनम् । यआदित्यः अविदुषांचनिरोधकः । अविद्वांसोहि सूर्यमंडलभेदासामर्थ्यान्नगंतुंशक्नुवन्तीत्यर्थः ॥

## तदेष श्लोकः ॥

तस्मिन्विषयेएषवक्ष्यमाणश्लोकः प्रवर्ततेइत्यर्थः ॥

## शतंचैकाचहृदयस्यनाड्यः तासां मूर्द्धानमभिनिस्सृतैका । तयोर्ध्वमापन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवंति ॥

मूर्धन्यनाड्यागच्छन्मुक्तिंप्राप्नोति । विष्वग्गतयइतरनाड्यस्तू-

त्क्रमणमात्रेभवन्ति, नत्वमृतसाधनीभूतोर्ध्वगताविर्त्यथः। यद्वाविष्व-ग्युक्रमणेअन्याउपयुज्यंत इत्यर्थः । एवंदहरविद्यांसमाप्यतदंगभूतां प्रत्यगात्मविद्यांप्रस्तौति ॥

य आत्माअपहतपाप्माविजरोविमृत्युर्विशोकोविजिघत्सोऽपिपासःसत्यकामःसत्यसंकल्पःसोन्वेष्टव्यःस-विजिज्ञासितव्यः । ससर्वांश्चलोकानाप्नोतिसर्वांश्चकामान् यस्तमात्मानमनुविद्यविजानातीतिहप्रजापति-रुवाच ॥

अनुविद्येतिवाक्यार्थज्ञानमुच्यते । विजानातीतिध्यानमिति लघु-सिद्धांतेभाषितम् ॥

तद्धोभयेदेवाअसुराअनुबुबुधिरे ॥

प्रजापतिवचनमैतिह्यरूपेणदेवाअसुराउभयेपिश्रुतवन्तइत्यर्थः ॥

तेहोचुर्हंततमात्मानमन्विच्छामोयमात्मानमन्विष्यसर्वांश्चलोकानाप्नोतिसर्वांश्चकामानिति ॥

तमन्विच्छामः श्रवणमननाभ्यामवगच्छामइत्यर्थः ॥

इंद्रोहवैदेवानामभिप्रवव्राजविरोचनोऽसुराणाम् ॥

देवानांमध्येइंद्रश्चासुराणांमध्येविरोचनश्चप्रजापतिसमीपंगंतुंप्र-स्थितौ ॥

तौहासंविदानावेवसमित्पाणीप्रजापतिसमीप (स-काश ) माजग्मतुः ॥

असंविदानौपरस्परासूययापरस्परसंमंत्रणमकुर्वंतावित्यर्थः । शि-ष्टंस्पष्टम् ॥

तौहद्वात्रिंशतंवर्षाणिब्रह्मचर्यमूषतुः ॥

शुश्रूषापरौभूत्वाब्रह्मचर्यंचेरतुः।

तौहप्रजापतिरुवाच किमिच्छंतावववास्तमिति ॥

किंप्रयोजनमुद्दिश्योषितवंतावित्यर्थः ॥

तौहोचतुः य आत्माअपहतपाप्माविजरोविमृत्युर्विशोकोविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोन्वेष्टव्यः सविजिज्ञासितव्यः।ससर्वांश्चलोकानाप्नोति सर्वांश्चकामान्यस्तमात्मानमनुविद्यविजानातीतिहभगवतोवचोवेदयंतेतदिच्छंतावववास्तमिति ॥

तमिच्छंतावावामुषितवंतावित्यर्थः। अवास्तमितिपुरुषव्यत्ययश्छांदसः ॥

तौहप्रजापतिरुवाच । यएषोक्षिणिपुरुषोदृश्यते, एषआत्मेतिहोवाच । एतदमृतमभयमेतद्ब्रह्मेति ॥

अत्रएषोक्षिणिपुरुषोदृश्यतइतिनहाक्षिपुरुषः परमात्मा एतंत्वेव ते भूयोनुव्याख्यास्यामीत्युपक्रम्यस्वप्नाद्यवस्थाविधानात्। नचेहजीवस्याक्षिणिस्थितिरुपदिश्यते । अपित्वक्षिविकाराज्जीवस्यस्थितिगतीनिश्चीयेते । अतोक्ष्णोर्जीवस्थितिगतिसूचकत्वादक्षिणिदृश्यतइत्युक्तं । कर्मणः सामर्थ्यसूचकत्वाभिप्रायेणास्यास्मिन्कर्मणिसामर्थ्यंदृष्टमितिवत् । ततश्चगृहेस्थित्वानिर्गच्छन्पुरुषः यथा गृहादन्यः एवंशरीरेस्थितिगतिमानात्मा शरीरादन्यइत्युक्तंभवति। अमृतमितिनिरतिशयसुखरूपत्वम् अभयमितिदुःखासंभिन्नत्वं ब्रह्मेत्यसंकुचितज्ञानतयाब्रह्मत्वंचोक्तमितिव्यासार्यैरुक्तम् ॥

अथयोयंभगवोप्सुपरिख्यायतेयश्चायमादर्शेकतमएषइति ॥

एवंप्रत्यगात्मनिप्रजापतिनोपदिष्टेच्छायापुरुषआत्मेत्युपदिष्टइतिभ्रान्त्यास्वगृहीतच्छायापुरुषेआत्मत्वदृढीकरणायजलादर्शादि-

प्रतिबिंबोप्यक्षिप्रतिबिंबाभिन्नआत्मैवउततद्भिन्नोनात्मेत्यभिप्रायेणपप्रच्छतुरित्यर्थः । एवंताभ्यांपृष्टस्तयोर्भ्रांन्तिमनिराकुर्वन्नेवाह ॥

एषउएवैषुसर्वेष्वंतेषुपरिख्यायतइतिसहोवाच ॥

यश्चक्षुषिदृश्यत्वेनमयोक्तः सआत्मासर्वांतरोजलादिष्वपिनभिद्यतइत्युत्तरंददावित्यर्थः । शिष्यभ्रांतिमनिराकृत्यतद्भ्रान्तिदृढीकरणायेत्थमुत्तरंददतआचार्यस्यायमभिप्रायः । सुरासुरेन्द्राविन्द्रविरोचनौस्वात्मन्यध्यारोपितपांडित्यमहत्वातिशयौ । तथैवजगतिप्रसिद्धौचतद्यदियुवांभ्रांतावितिब्रूयांतदाचित्तावसादात्पुनः प्रश्नग्रहणधारणेषुभग्नोत्साहौस्याताम् । अतोयथाश्रुतप्रश्नमात्रस्योत्तरमिदानींवक्तव्यम् । अनेनचोत्तरेणपूर्वोत्पन्नप्रतिबिंबात्मभ्रमोदृढीभवतिचेद्भवतु । दृढीभूतोपिभ्रमः उदशरावनिरीक्षणनियोजनोपायेनापनेष्यतइति । अतएवतद्भ्रमापनयनार्थमेवोदशरावआत्मानमवेक्ष्ययदात्मनोनविजानीथस्तन्मेब्रूतमितिउदशरावावेक्षणेतौनियुयोज । अत्रव्यासार्यैरेतादृशाभिप्रायपरिकल्पनस्यातिक्लिष्टत्वाद्योयंभगवोप्सुपरिख्यायतेयश्चायमादर्शेकतमएषइतिएषउएवैषु सर्वेष्वंतेषुपरिख्यायतइत्येतावानपिप्रश्नएव । प्रश्नमध्यगतइतिशब्दः प्रश्नांतेनिवेशयितव्यः । इति होवाचेत्येतदुत्तरस्यास्योदशरावंवाक्यस्यशेषभूतम् । उदशरावआत्मानमवेक्ष्ययदात्मनोनविजानीथस्तन्मेब्रूतमितिहोवाचेत्युत्तरेणान्वयः । तत्रएकइतिशब्दः समाप्तिद्योतकः अन्यस्तुप्रकारवचनः । अथवाकतमएषइतीत्यत्रइतिशब्दोवक्ष्यमाणवचनः । इत्येवंनेतिशब्दद्वयवैयर्थ्यमभिप्रेत्यप्रजापतिहृदयानभिज्ञानाच्छायापुरुषउपदिष्टइतिमत्वापुनःपप्रच्छतुः । योयंभगवोप्सुपरिख्यायतइत्यादिना सर्वेष्वंतेषुनेत्रादिस्थानेषुपरिख्यायतेकतमएषइत्यर्थ इत्युक्तम् । चक्षुरादिप्रतिबिंबएवात्मेतिदार्ढ्यार्थंपुनरपिपप्रच्छतुरितिभावः । जलादिस्थानेषुयोह-

श्यतेसनेत्रेदृश्यमानएषएवाकिंमुतान्यःकतमएषइतिव्यासार्याणाम-भिप्रायः ॥

उदशरावआत्मानमवेक्ष्ययदात्मनोनविजानीथः त-न्मेप्रब्रूतमिति ॥

उदकपूर्णेशरावेआत्मानंदृष्ट्वाआत्मसंबंधिनमनुपपन्नतयाभासमानंसम्यगनवगतमंशंयुवांवदतमित्युक्तवान् ॥

तौहोदशरावेअवेक्षांचक्राते ॥

तौहप्रतिबिंबमवलोकितवंतौ। अवलोक्यापिदोषास्फुरणात्तूष्णीमुषितवंतौ। तयोरनुपपत्तिस्फूर्तिंज्ञात्वाकिंपश्यथइतिस्वयमेवप्रजापतिरुवाचेत्याह ॥

तौहप्रजापतिरुवाचकिंपश्यथइति । तौहोचतुः । सर्वमेवेदमावांभगवआत्मानंपश्याव आलोमभ्यआ-नखेभ्यःप्रतिरूपमिति ॥

इदंप्रतिरूपमात्मानं पश्यावइति प्रतिबिंबात्मभ्रममेवोद्घाटि-तवंतौ ॥

तौहप्रजापतिरुवाचसाध्वलंकृतौसुवसनौपरिष्कृतौ-भूत्वाउदशरावेऽवेक्षेथामिति । तौहसाध्वलंकृतौसुवस-नौपरिष्कृतौभूत्वोदशरावेअवेक्षांचक्राते । तौहप्रजाप-तिरुवाच । किंपश्यथइति । तौहोचतुः । यथैवेदमावां-भगवः साध्वलंकृतौसुवसनौपरिष्कृतौस्वएवमेवेमौभ-गवःसाध्वलंकृतौसुवसनौपरिष्कृताविति ॥

आवांसाध्वलंकृतौसुवसनौपरिष्कृतौस्वःभवावइतीदंयथैवतथैव-इमावपिप्रतिबिंबौसाध्वलंकारादियुक्तावितिप्रत्यूचतुरित्यर्थः। अत्रो-दशरावावेक्षणालंकृतदेहप्रतिबिंबनिरीक्षणयोर्नियुंजानस्यप्रजापतेर-

यमभिसन्धिः । आगमापायशालीद्वात्रिंशद्वर्षब्रह्मचर्यदीर्घीभूतकेश-नखवस्त्रालंकारादिलक्षणदोषगुणयुक्तव्यवस्थितदेहानुकारिदोषगु-णवत्त्वाद्देहवत्तत्प्रतिबिंबोप्यनात्मानिरतिशयसुखत्वदुःखासंभिन्नत्व-लक्षणामृतत्वाभयत्वशून्यइतिजानीयातामिति । एवंद्विविधनियो-जनेप्यप्रक्षीणकल्मषतयादोषादर्शनेनप्रतिबिंबात्मभ्रमोनापनीतः । ततःप्रजापतिर्भ्रांतिनिवारणार्थंमयाकृतस्यद्विविधप्रतिबिंबदर्शनस्या-भिप्रायमिमावप्रक्षीणकल्मषत्वान्नावगच्छतः । प्रत्यक्षंचयुवांभ्रांता वितिवक्तुमप्यनर्हौ । तदिदानीमेतदीयहृदयानुरोधेनप्रतिबिंबमेव-निर्दिश्यसर्वांतरंपरमात्मानंमनसिनिधायएषआत्मेत्युपदेशेनतयोरा कांक्षांनिवर्तयिष्यामिकालेनकल्मषेप्रक्षीणेमद्वचनसंदर्भस्यसर्वस्या-प्यभिप्रायंस्वयमेवावगमिष्यतः । विचिकित्समानौ वा मत्समीपमा-गमिष्यतइतिमत्वा ॥

एषआत्मेतिहोवाच । एतदमृतमभयमेतद्ब्रह्मेति ॥

स्पष्टोर्थः ॥

तौहशांतहृदयौप्रवव्रजतुः ॥

शांतहृदयौनिवृत्ताकांक्षावित्यर्थः ॥

तौहान्वीक्ष्यप्रजापतिरुवाच ॥

एवंप्रतिनिवृत्तयोःप्रजापतिर्भ्रांतिगृहीतार्थश्रद्धयेमौविनष्टौमाभू-तामिदमपिमद्वचनंयआत्मेतिपूर्ववचनवत्कर्णाकर्णिकयागिराशृणु-तामित्यभिप्रेत्योवाचेत्यर्थः ॥

अनुपलभ्यात्मानमननुविद्यव्रजतोयतरएतदुपनि-षदोभविष्यंतिदेवावाअसुरावातेपराभविष्यंतीति ॥

एताविंद्रविरोचनावात्मस्वरूपंश्रवणमननाभ्यामज्ञात्वागच्छतः यतरेयेदेवावाअसुरावाएतदुपनिषदो भविष्यंति । उपनिषच्छन्द-

उपदेशपरः । अनयोरुपदेशाद्भ्रांतिगृहीतार्थविषयकनिश्चयायेऽभिभविष्यंतितेपराभविष्यंति । नित्यसंसारिणोभविष्यंतीत्यर्थः ॥

सहशांतहृदयएवविरोचनोसुराना ( न् ) जगामतेभ्योहैतामुपनिषदंप्रोवाच ॥

विरोचनस्तुप्राजापत्यस्यद्विविधदेहच्छायादर्शनानियोगस्यदेहानुकारित्वाच्छायायादेहएवात्मेतिसूचनेतात्पर्यम् । अलंकृतदेहच्छायांनिर्दिश्यैषआत्मेत्युपदेशस्यनीलानीलयोरादर्शेदृश्यमानयोर्वाससोर्यन्नीलंतन्महार्घमितिवचनस्य च्छायानिमित्तेवाससीवालंकृतदेहेतात्पर्यमितिमन्वानोदेहएवात्मालंकारादिभिः परिचरणीयइतिनिश्चित्यराज्यंप्राप्यासुरेभ्यस्तथैवोपादिशादित्यर्थः ॥

आत्मैवेहमहय्यआत्मापरिचर्यआत्मानमेवेहमहयन्नात्मानंपरिचरन्नुभौलोकाववाप्नोतीमंचामुंचेति ॥

आत्मैवदेहएवमहय्यः पूज्यइत्यर्थः । उभौलोकावितिसर्वलोकसुखानुभवोपिशरीरगतएवेतिभावः।ससंप्रदायोद्याप्यनुवर्ततइत्याह ॥

तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुः आसुरो बतेति असुराणां ह्येषोपनिषत् ॥

यस्मादसुरेभ्यइयमुपनिषत् प्रवृत्ता तस्माद्यागदानश्रद्धावैधुर्यहेतुभूतनास्तिक्यबुद्धिरसुराणामेवहि । अतएतादृशंपुरुषंजनाअसुरमाहुः ॥

प्रेतस्यशरीरंभिक्षयावसनेनालंकारेणेति संस्कुर्वंति एतेनह्यमुंलोकंजेष्यंतोमन्यंते ॥

यतएवदेहस्यैवात्मतयापरिचरणीयत्वम् अतएवप्रेतस्यमृतस्यशरीरंभिक्षित्वावस्त्रालंकारादिभिः पूजयंति । कुणपसंस्कारेणैवपरलोकजयंमन्यमानाइत्यर्थः । ततः प्रतिबिंबस्यबिंबदोषानुविधायित्वदोषदर्शनेनप्रत्यागतायपुनरपिद्वात्रिंशद्वर्षाण्युषितवतेमघवते ॥

यएषस्वप्नेमहीयमानश्चरतिएषआत्मेतिहोवाचेति ॥

स्वप्नावस्थस्यजीवस्योपदेशः । अनन्तरम् ॥

घ्नंतित्वेवैनं विच्छादयंतीवाप्रियवेत्तेवभवत्यपिरोदितीवनाहमत्रभोग्यंपश्यामीति ॥

हन्यमानत्वद्राव्यमाणत्वबन्धुमरणाद्यप्रियद्रष्टृत्वादिदोषदर्शनेनप्रतिनिवृत्तायद्वात्रिंशद्वर्षाण्युषितवते ॥

“ तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नंनविजानात्येषआत्मेति होवाच ॥ ” इति ॥

सुषुप्त्यवस्थजीवस्योपदेशः ॥

नाहखल्वयमेवᳪंसंप्रत्यात्मानंजानात्ययमहमस्मीतिनोएवेमानिभूतानिविनाशमेवापीतोभवति नाहमत्रभोग्यंपश्यामीति ॥

सुषुप्तौस्वपरज्ञानशून्यतयामरणतुल्यतादोषंदृष्ट्वाप्रतिनिवृत्तायपंचवर्षाण्युषितवतेउपदेशयोग्यायजाग्रत्स्वप्नसुषुप्त्यवस्थात्रयातीतंमुक्तात्मस्वरूपमाह ॥

मघवन्मर्त्यंवाइदᳪंशरीरमात्तंमृत्युनातदस्यामृतस्याशरीरस्यात्मनोधिष्ठानम् ॥

हेमघवन् इदंशरीरमेवहिमरणधर्मि नकेवलंमरणधर्मित्वमात्रम् । अपितुतव्द्याप्तंच।सततविनाशशीलमितियावत्।इदंचशरीरेहेयत्वानुसंधानार्थमुक्तम् । एवंभूतंतदिदंशरीरंकर्मकृतशरीरंकर्मकृतशरीररराहित्यलक्षणामृतत्वस्वरूपस्यात्मनोभोगाधिष्ठानम् । कर्मवशेनजीवेनभोगार्थंपरिगृहीतमित्यर्थः।ततश्चाशरीरत्वमेवस्वरूपम्।सैवामृतत्वलक्षणामुक्तिः । सशरीरत्वमेवतदभावइत्युक्तं भवति ॥ ननुपुरुषार्थ

स्यहिमुक्तिरूपत्वंवक्तव्यम्।नह्यशरीरत्वंपुरुषार्थः।अपितुदुःखाभावः। ततश्चतस्यैवामृतत्वरूपत्वमुचितं नत्वशरीरत्वस्येत्यत्राह ॥

नहवैसशरीरस्यसतः प्रियाप्रिययोरपहतिरस्ति ॥

कर्मारब्धशरीरयोगिनः तदनुगुणसुखदुःखयोगस्यावश्यंभावित्वात्कर्मारब्धदेहसंबंधाभावस्य पुरुषार्थतयामुक्तिरूपत्वमुपपद्यतइतिभावः। व्यतिरेकं दर्शयति ॥

अशरीरंवावसंतंनप्रियाप्रियेस्पृशतः ॥

वावशब्दः प्रसिद्धाववधारणेवा । ततश्चावस्थात्रयराहित्यलक्षणस्वरूपमेवमुक्तिरित्यर्थः । शिष्टंस्पष्टम् ॥

अशरीरोवायुः ॥

शिरःपाण्यादिलक्षणशरीरशून्योवायुरित्यर्थः ॥

अभ्रंविद्युत्स्तनयित्नुरशरीराण्येतानि ॥

अभ्रादीनिचाशरीराणीत्यर्थः । अब्भ्रं भूत्वामेघो भवतीत्यादिवत् । अब्भ्रस्तनयित्न्वोरवस्थाभेदेन भेदोद्रष्टव्यः । अशरीराणांच प्रियाप्रियानन्वयो दृष्टइतिभावः ॥

तद्यथैतान्यमुष्मादाकाशात्समुत्थायपरं ज्योतिरुपसंपद्यस्वेन रूपेणाभिनिष्पद्यंते । एवमेवैषसंप्रसादोस्माच्छरीरात्समुत्थायपरं ज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यते ॥

अत्र व्यासार्यैस्तुवाय्वादीनामाकाशात्समुत्थानं नाम स्वकार्यकरणायोर्ध्वदेशे अभिवृद्धिः । परशब्दो वाय्वादीनां कारणावस्थावाची । ज्योतिश्शब्दः स्वकारणानां कार्योत्पादनद्वारेण तदभिव्यक्तिहेतुतया प्रयुक्तः । वाय्वादीनिच कारणद्रव्यमुपगत्य कार्यावस्थां हित्वा कारणसदृशेन रूपेण विशिष्टानि भवन्ति ।

वायुर्हि आवहप्रवहादिरूपेणसप्तविधत्वं हित्वा वायुत्वमात्रेणावतिष्ठते। विद्युच्च विद्युत्त्वं हित्वा तेजस्त्वेन। अभ्रस्तनयित्नूचाभ्रत्वादिप्रहाणेन स्वकारणरूपेण । एवं जीवोपि मार्गविशेषेण देशविशेषविशिष्टं परं ब्रह्म प्राप्य संसार्यवस्थाप्रहाणेन परमात्मतुल्यरूपेणाविर्भवतीत्यर्थः । एवंसत्येव दृष्टांतदार्ष्टांतिकवाक्यसामंजस्यं भवतीति वर्णितम् ॥

## सउत्तमः पुरुषः सतत्रपर्यैति ॥

स उपसंपदनीय उत्तमः पुरुष इत्यर्थः । उत्तमः पुरुषस्त्वन्यइति भगवतएवोत्तमपुरुषत्वेनोपसंपदनकर्त्तर्युत्तमपुरुषत्वस्य बाधितत्वात् । सतत्रपर्यैतीत्युत्तरवाक्यस्वारस्यभंगप्रसंगाच्च । सउपसंपत्ता परमात्मनिपर्यैति तं परितोनुभवति । यद्वानुसंचरति "कामरूप्यनुसंचरन् यत्रयत्रधाता गच्छति" इति श्रुत्यंतरात् ॥

## जक्षत् क्रीडन् रममाणः स्त्रीभिर्वायानैर्वाज्ञातिभिर्वा ॥

यथेष्टं भोगानवाप्नोतीत्यर्थः ॥

## नोपजनंस्मरन्निदꣳशरीरम् ॥

स्त्रीपुंसयोरन्योन्योपगमेन जातमित्युपजनत्वं शरीरस्य । तेन चापुरुषार्थत्वमुच्यते । अथवोपजनं जनानां बंधुजनानां समीपे शयितं कुणपमित्यर्थः । यद्यपि मुक्तस्स सर्वज्ञत्वात् त्यक्तमपि शरीरमनुभवत्येव । तथाप्यब्रह्मात्मकतया दुःखस्वरूपत्वेनानुभूतं शरीरं तत्र मुक्तदशायां तथानानुभवतीत्यर्थः । आत्मनोऽशरीरस्वभावत्वे प्राक्छरीरसंबंधः किंनिबंधन इत्यत्राह ॥

## स यथा प्रयोग्य आचरणे युक्तएवमेवायमस्मिन्छरीरेप्राणोयुक्तः ॥

यथा आचरणेशकटेप्रयोग्यो युग्यः अश्वोबलीवर्दोवा पाशेनयु-

क्तोभवति एवमेवायंप्राणसहचारीप्रत्यगात्मासंसारदशायांकर्मपाशवशेनयुक्तोभवति । अनेनयुग्यशकटदृष्टांतेनदेहात्मनोर्व्यतिरेकोदृढीकृतो भवति ॥

अथयत्रैतदाकाशमनुविषण्णंचक्षुः सचाक्षुषःपुरुषोदर्शनायचक्षुः ॥

आकाशं प्रकाशमानालोकादि अथवाप्रकाश्यमानत्वाद्वा आकाशंरूपम् । ततश्चायमर्थः । यत्रयस्मिन्नुपकरणत्वेनानुविषण्णं निबद्धंचक्षुः आकाशमालोकंरूपंवाप्रकाशयतीतिशेषः। यद्वा आकाशंरूपादिप्रकाशकंचक्षुरित्यर्थः । सचाक्षुषः चक्षुरुपकरणकः पुरुष आत्मेत्यर्थः । चक्षुरुपकरणकमुद्दिश्यपुरुषशब्देनात्मत्वंविधीयते । चक्षुस्तुदर्शनकरणमात्रम् । ततश्चक्षुरादीनांरूपादीनामात्मनश्चकरणत्वज्ञेयत्वज्ञातृत्वप्रदर्शनमुखेनशरीरेंद्रियेभ्योव्यतिरेक उपपादितोभवति ॥

अथयोवेदेदंजिघ्राणीतिसआत्मागंधायघ्राणम् ॥

गंधग्रहणकरणंघ्राणम् । ज्ञातात्वात्मेत्यर्थः । अनेनघ्राणेंद्रियव्यतिरेकयुक्तोभवति ॥

अथयोवेदेदमभिव्याहराणीतिसआत्मा।अभिव्याहारायवाक् ।अथयोवेदेदंश्रृणवानीतिसआत्मा।श्रवणायश्रोत्रम् । अथयोवेदेदंमन्वानीतिसआत्मा । मनोस्यदिव्यंचक्षुः।सवाएषएतेनदिव्येनचक्षुषामनसैतान्कामान्पश्यन्रमते यएतेब्रह्मलोके ॥

विधूतकर्मनिमित्तशरीरेंद्रियःपुरुषः मनश्शब्दाभिहितेनदिव्येनस्वाभाविकेनज्ञानेनसर्वान्कामाननुभवन्मोदतइत्यर्थः । शिष्टंस्पष्टम्॥

**तंवाएतंदेवाआत्मानमुपासतेतेषांसर्वेचलोकाआत्ताः सर्वेचकामाः ॥**

एतादृशात्मस्वरूपस्य मघवते उपदिष्टत्वाद्देवाःसर्वेमघवतएतमात्मानमुपश्रुत्यतमेवोपासते । अतस्तेषांसर्वलोकसर्वकामावाप्त्युपलक्षितब्रह्मानुभवोभवति । असुराणांतुनतथेतिभावः । अद्यत्वेपि तमुपासीनानांतत्प्राप्तिर्भवतीत्याह ॥

**सर्वांश्चलोकानाप्नोतिसर्वांश्चकामान्यस्तमात्मानमनुविद्यविजानाति ॥**

अद्यत्वेपिमनुष्याणामपितमात्मानमुपासीनानांसर्वलोकसर्वकामावाप्तिर्भवतीत्यर्थः । अत्रकिंप्रमाणमित्यत्राह ॥

**इतिहप्रजापतिरुवाचेति ॥**

द्विरुक्तिर्विद्यासमाप्त्यर्था । अत्रप्रत्यगात्मविद्यायाब्रह्मविद्यांगत्वेनांगीभूतब्रह्मविद्याफलमेवतदंगप्रत्यगात्मविद्यायास्तुत्यर्थंनिर्दिश्यत इतिद्रष्टव्यम् । उक्तंचभगवताभाष्यकृता प्रजापतिवाक्येमुक्तात्मस्वरूपयाथात्म्यविज्ञानंदहरविद्योपयोगितयोक्तंब्रह्मप्रेप्सोर्हिजीवात्मनः स्वस्वरूपंचज्ञातव्यमेव स्वयमपिकल्याणगुणएवसन्ननवधिकातिशयासंख्येयकल्याणगुणगणंपरंब्रह्मानुभविष्यतीतिब्रह्मोपासनफलांतर्गतत्वात् । सर्वांश्चलोकानाप्नोतिसर्वांश्च कामानितिप्रजापतिवाक्येकीर्त्यमानंफलंदहरविद्याफलमेवेति ॥ ननुप्रजापतिविद्यायादहरविद्यांगत्वेदहरब्रह्मविद्याधिकृतायैवोपदेष्टव्यास्यात् । उपकोसलविद्यांगभूताग्निविद्यावत्–प्रकृतेचब्रह्मविद्याविधुरायेन्द्रायोपदिश्यमानायाः प्रत्यगात्मविषयकप्रजापतिविद्यायाः कथं विद्यान्तरशेषत्वमितिचेन्न ॥ प्रजापतिवाक्यस्यैषसंप्रसादइति दहरविद्यावाक्यांतर्गतसंप्रसादशब्दार्थशोधनार्थंप्रवृत्ततयातदेकवाक्यत्वेनतादर्थ्यैसिद्धेइन्द्र-

स्यापिपश्चाद्दहरविद्योपदिष्टेत्येवावगंतव्यत्वेनादोषात् ॥ ननुप्रजापतिविद्यायाःप्रकरणाद्दहरविद्याशेषत्वेसर्वब्रह्मविद्याशेषत्वंनस्यात्। विद्यांतरशेषत्वेप्रमाणाभावात् । नचेष्टापत्तिः।"आत्मेतितूपगच्छन्ति ग्राहयंति च ।४। १।३॥" इत्यधिकरणसिद्धंजीवोपास्यत्वमंगीकृत्य-किंकर्तृत्वादिविशिष्टंसांसारिकस्वरूपमनुसंधेयमुतप्रजापतिवाक्योदितापहतपाप्मत्वादिलक्षणः सांसारिकरूपव्यतिरेकोवेतिविशये कर्तृत्वादिविशिष्टमेवरूपमनुसंधेयम्। शरीरेवर्तमानस्योपासितुरात्मनस्तथाभावादित्येकेमन्यंतइतिगुणोपसंहारपादे "एकआत्मनः शरीरे भावात् । ३ । ३ । ५३ ॥" इतिसूत्रेणपूर्वपक्षंकृत्वाप्रजापतिवाक्योदितापहतपाप्मत्वादिलक्षणःसांसारिकरूपव्यतिरेकएवानुसंधेयः । तथोपासनेसत्येवतत्क्रतुन्यायेनतादृशात्मस्वरूपरूपफलप्राप्तेर्भावादित्यादिना "व्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत्।३।३।५४॥" इतिसूत्रेण सिद्धांतितत्वादितिचेन्न ॥ यथाविद्याविशेषप्रकरणश्रुतानांसत्यत्वज्ञानत्वादिस्वरूपनिरूपकधर्माणाम् " आनन्दादयः प्रधानस्य । ३ । ३ । ११ ॥ " इत्यधिकरणोक्तन्यायेनसर्वब्रह्मविद्यापेक्षितब्रह्मस्वरूपप्रतीत्युपयोगितयासामर्थ्यरूपाल्लिंगात्प्रकरणभंगेनदहरविद्यांगत्वेपिसर्वब्रह्मविद्यासाधारण्यमाश्रीयते। यथा वा"तमेतंवेदानुवचनेनब्राह्मणाविविदिषन्ति"इति विद्याविशेषप्रकरण श्रुतानांवेदानुवचनादीनां सर्वविद्यापेक्षितचित्तनैर्मल्योपयोगित्वलक्षणसामर्थ्यरूपलिंगवशेनसर्वविद्यासाधारण्यमेवमिहापिब्रह्मप्राप्तिपूर्वकापहतपाप्मत्वादिगुणाष्टकविशिष्टस्वात्माविर्भावलक्षणमोक्षरूपफलस्यतत्क्रतुन्यायेनतादृशस्वात्मोपासनसाध्यत्वेनप्रजापतिवाक्योदितप्रत्यगात्मविद्यायाः सर्वविद्यापेक्षितत्वात् ॥

## प्रजापतेः सभांवेश्मप्रपद्ये ॥

प्रजापतेः परमात्मनः सभास्थानंवेश्मप्रपद्ये। प्रभुविमितंहिरण्म

यमितिदहरविद्यायांनिर्दिष्टंवेश्मप्रपद्यइत्यर्थः। नचात्रप्रजापतिशब्दः कार्यभूतहिरण्यगर्भविषयः।"नचकार्येप्रत्यभिसंधिः।४।३।१४॥"इति सूत्रकृतैवनिरस्तत्वात्। भाष्यकृताचनचकार्येप्रत्यभिसंधिः। कार्यं हिरण्यगर्भं।अपितुपरस्मिन्नेवब्रह्मणि यशोहंभवामिब्राह्मणानामिति तस्याभिसंधातुः सर्वाविद्याविमोकपूर्वकसर्वात्मभावाभिसंधानात्। अश्वइवरोमाणिविधूयपापंचंद्रइवराहोर्मुखात्प्रमुच्यधूत्वाशरीरमकृतंकृतात्माब्रह्मलोकमभिसंभवामीत्यभिसंभाव्यब्रह्मलोकस्याकृतत्वश्रवणात्। सर्वबंधविनिर्मोकस्यचसाक्षाच्छ्रवणादितिभाषितम्॥

**यशोहंभवामिब्राह्मणानाम्।यशोराज्ञाम्।यशोविशाम्॥**

अत्रयशश्शब्देनतत्साधनमात्मोच्यते।ब्राह्मणादीनामात्मास्मीत्यर्थः। अत्राहमितिशब्दः स्वांतर्यामिपरमात्मपरः॥

**"तद्धैतद्ब्रह्माप्रजापतयउवाच॥" इत्यादि॥**

एतद्ब्रह्मज्ञानम्। ब्रह्माहिरण्यगर्भः। प्रजापतयेकाश्यपाय। शिष्टंस्वष्टम्। विद्यांगभूततयाकर्मानुष्ठातव्यमित्येतत्प्रस्तौति॥

**आचार्यकुलाद्वेदमधीत्ययथाविधानंगुरोः कर्मातिशेषेण॥**

यथाविधानंविधिमनतिक्रम्य गुरोः कर्मातिशेषेणकर्माविशिष्टकालेन गुरुशुश्रूषानवरुद्धेनकालेनाधीत्येतियोजना। "व्यासार्यैस्तुपुरुषार्थाधिकरणे ३।४।१॥" अतिशेषेण निःशेषमित्यर्थ इतिव्याख्यातम्। तेषामयमाशयः। ब्रह्मचारीवेदमधीत्योपायनान्याहृत्यगुर्वनुज्ञातोदारान्कुर्वीत। विद्यांतेगुरुरर्थेननिमंत्र्यस्ततः कृतानुज्ञानस्यवास्नानमित्यादिस्मृत्यनुसारादाचार्यायप्रियंधनमाहृत्यप्रजातंतुंमाव्यवच्छेत्सीरित्यादिश्रुत्यनुसाराच्च गुरोर्यथाविधानमाचार्यस्यनियमनमनतिलंघ्यकर्तव्यं कर्मातिशेषेण। अतिमर्यादमित्यादावतेर्मर्यादाभावेवृत्तेर्दर्शनादतिरर्थाभावेवर्तते। ततश्चातिशेषेणाभिस-

मावृत्त्यनिर्वर्त्यैत्येवान्वयः। नत्वतिशेषेणेत्यस्याधीत्येतिपूर्वेणान्वयः। तस्यव्यवहितत्वान्निराकांक्षत्वाच्च । नचगुरोः कर्मशेषेणजपेदिति गौतमस्मृत्यैकरूप्यात् कर्मातिशेषशब्दस्यापिकर्मातिशिष्टकाल-परत्वंवक्तव्यमितिवाच्यम्। शेषातिशेषशब्दयोर्भिन्नार्थत्वेनतत्प्रत्य-भिज्ञाभावादिति ॥

अभिसमावृत्यकुटुंबेशुचौदेशेस्वाध्यायमधीयानः॥

अभिसमावृत्यसमावर्तनंकृत्वागुरुकुलान्निवृत्येत्यर्थः। न्यायतो-दारानाहृत्यकुटुंबेस्थित्वागार्हस्थ्यविहितेकर्मणिनिष्ठितइत्यर्थः । शुचौदेशेस्वाध्यायमधीयानः। स्वाध्यायमितिनित्यकर्मणामप्युपल-क्षणम् ॥

धार्मिकान्विदधत् ॥

पुत्रशिष्यादीन्धर्मेनियुंजानः ॥

आत्मनिसर्वेन्द्रियाणिसंप्रतिष्ठाप्याहिंसन्सर्वभूता-न्यन्यत्रतीर्थेभ्यः ॥

अनात्मविषयेभ्यःइन्द्रियाणिनिगृह्यशास्त्रीयहिंसाव्यतिरिक्तांहिं-सामकुर्वाणइत्यर्थः॥

सखल्वेवंवर्तयन्यावदायुषंब्रह्मलोकमभिसंपद्यते। न च पुनरावर्तते नचपुनरावर्तते ॥

स्पष्टोर्थः ॥

---

मध्वादिष्वसंभवादनधिकारंजैमिनिः।१।३।३०॥

छान्दोग्येतृतीयाध्यायारंभेमधुविद्याप्रस्तूयते ॥

असौवाआदित्योदेवमधु ॥

वस्वादीनांदेवानामामोदहेतुत्वान्मधु । अत्रमधुत्वदृष्टिःकर्तव्ये त्यर्थः। मधुत्वोपयोगिनींदृष्टिंसंपादयति ॥

तस्यद्यौरेवतिरश्चीनवंशः ॥

तस्यऽऽदित्याख्यमधुनोद्युलोकएवाधारभूतस्तिर्यक्प्रसारितोवंशः ॥

अंतरिक्षमपूपः ॥

अंतरिक्षंमध्वपूपः । मध्वाश्रयापूपोहितिरश्चीनवंशलग्नः सन्-लंबते एवमंतरिक्षमपिद्युलोकलग्नंलंबतइवभातीत्यतोमध्वपूपत्वम् ॥

मरीचयः पुत्राः ॥

मरीचिशब्देनमरीचिस्थास्सावित्राकृष्टाभौम्यआपउच्यते । ता पुत्राइवपुत्राः भ्रमरबीजभूतामध्वपूपच्छिद्रस्थाःसूक्ष्मकीटाइत्यर्थः ॥

तस्ययेप्रांचोरश्मयः ॥

तस्यादित्यस्ययेप्रांचोरश्मयः ॥

तएवास्यप्राच्योमधुनाड्यः ॥

ताएवप्राग्दिगवच्छिन्नमधुनाड्योमधुच्छिद्राणि ॥

ऋचएवमधुकृतः ॥

ऋङ्मंत्राएवभ्रमराः ॥

ऋग्वेदएवपुष्पम् ॥

ऋग्वेदविहितंकर्मपुष्पस्थानीयम् ॥

ताअमृताआपः ॥

ताः कर्मणिप्रयुक्ताः सोमाज्यपयोरूपाआपः । अग्नौप्रक्षिप्ताः पाकादिभिर्निर्वृत्ताअमृताः अत्यंतरसवत्योभवंति ॥

तावाएताऋच एतमृग्वेदमभ्यतपन्ह ॥

तावाएताऋचः भ्रमरस्थानीयाः पुष्पेभ्योरसमाददानाभ्रमराइ-वैतदृग्वेदविहितंकर्मपुष्पस्थानीयमभ्यतपन् अभितापंकृतवत्यइव ॥

तस्याभितप्तस्ययशस्तेजइन्द्रियंवीर्यमन्नाद्यंरसोऽ-जायत ॥

यशस्तेज इन्द्रियवीर्यान्नाद्यलक्षणो रसोऽजायतेत्यर्थः । ऋग्भिर्मंत्रैः स्तोत्रशस्त्राद्यंगभावमुपगतैः क्रियमाणं कर्म मधुनिर्वर्तकंसोमाज्यादिरसंमुंचति पुष्पमिव भ्रमरैराचूष्यमाणम् । तेनचयशस्तेज इंद्रियवीर्यादिलक्षणं फलमुत्पन्नंभवति ॥

तद्व्यक्षरत् ॥

तद्यशआदिलक्षणं फलं विशेषेणागमत् ॥

तदादित्यमभितोश्रयत् ॥

गत्वाचादित्यमभितः श्रितवादित्यर्थः ॥

तद्वा एतद्यदेतदादित्यस्यरोहितᳫं रूपम् ॥

आदित्ये प्रत्यक्षतः परिदृश्यमानं यद्रूपं तत्कर्म निर्वर्त्त्यं यशस्तेजआदिलक्षणफलरूपमित्यर्थः । रोहिते रूपे तद्बुद्धिः कर्तव्येति यावत् ॥

अथयेस्य दक्षिणारश्मयस्ता एवास्य दक्षिणामधुनाड्यः । यजूंष्येव मधुकृतो यजुर्वेद एवपुष्पंता अमृताआपः । तानिवा एतानि यजूंष्येतं यजुर्वेदमभ्यतपन्।तस्याभितप्तस्ययशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोजायत । तद्व्यक्षरत्तदादित्यमभितोश्रयत्तद्वा एतद्यदेतदादित्यस्य शुक्लᳫंरूपम । अथयेस्य प्रत्यंचोरश्मयः ताएवास्य प्रतीच्यो मधुनाड्यः सामान्येव मधुकृतःसामवेद एवपुष्पंताअमृता आपःतानिवा एतानि सामान्येतᳫंसामवेदमभ्यतपन् । तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोजायत । तद्व्यक्षरत्तदादित्यमभितोश्रयत्तद्वा एतद्यदेतदादित्यस्य

कृष्णंरूपम् । अथ येस्योदंचोरश्मयः ताएवास्योदीच्यो मधुनाड्यः । अथर्वांगिरसएवमधुकृतः ॥

अथर्वणांगिरसाच दृष्टा अथर्वांगिरसः ॥

इतिहासपुराणं पुष्पम् ॥

इतिहासपुराणविहितकर्मस्वथर्वांगिरसां विनियोगादृग्वेदादिवत् पुष्पत्वोक्तिरितिद्रष्टव्यम् ॥

ताअमृता आपस्ते वाएतेऽथर्वांगिरस एतदितिहासपुराणमभ्यतपन् । तस्याभितप्तस्ययशस्तेज इन्द्रियंवीर्यमन्नाद्यंरसोजायत । तद्व्यक्षरत्तदादित्यमभितोश्रयत् तद्वाएतद्यदेतदादित्यस्यपरं(रः)कृष्णंरूपम्॥

अतिशयितं कृष्णंरूपमित्यर्थः ॥

अथयेस्योर्ध्वारश्मयस्ताएवास्योर्ध्वा मधुनाड्यो गुह्या एव देशामधुकृतः ॥

ब्रह्मविषयकोपनिषद्रहस्योपदेशाइत्यर्थः ॥

ब्रह्मैवपुष्पं ताअमृताआपः । तेवाएतेगुह्या आदेशाः एतद्ब्रह्माभ्यतपन् । तस्याभितप्तस्य यशस्तेज इन्द्रियंवीर्यमन्नाद्यंरसोऽजायत । तद्व्यक्षरत्तदादित्यमभितो श्रयतद्वाएतद्यदेतदादित्यस्यमध्येक्षोभतइव ॥

समाहितदृष्टिभिर्वीक्ष्यमाणं मध्ये चलतीवस्फुरतीत्यर्थः ॥

तेवाएते रसानांरसा वेदाहिरसास्तेषामेते रसास्तानिवाएतान्यमृतानाममृतानि वेदाह्यमृतास्तेषामेतान्यमृतानि ॥

लोकसारभूतर्ग्वेदादिप्रतिपाद्यकर्मनिष्पाद्यत्वात् रोहितादिरूपा

णामतिरसत्वम् । तथा वेदेभ्योपीष्टतत्साध्य ( धन ) प्रतिपादकतया भोग्यभूततयाऽमृतेभ्योरोहितादिरूपाणां तत्प्रतिपाद्यकर्मनिष्पाद्यानामतिभोग्यत्वादमृतादप्यमृतत्वमित्यर्थः ॥ अयमत्रनिर्गलितोर्थः॥ प्रागाद्यूर्ध्वदेशांतःस्थितरश्मिनाडीतस्तत्तद्वेदोक्तकर्मकुसुमेभ्यस्तत्तद्वैदिकमंत्रमधुकरैरादित्यमंडलमानीतानिसोमाज्यपयःप्रभृतिद्रव्यनिष्पन्नानियशस्तेजोवीर्यमिंद्रियमित्येवमात्मकानिलोहितंशुक्लंकृष्णंपरंकृष्णंमध्येक्षोभतइवेत्युक्तानिरोहितादीनिपंचामृतानि आदित्यमध्वाश्रयाणीति।एषांपंचानाममृतानांवसुरुद्रादित्यमरुत्साध्यगणभोग्यत्वंतदुपासीनानांवसुत्वादिप्राप्तिपूर्वकब्रह्मप्राप्तिरितिप्रतिपादयति।

## तद्यत्प्रथमममृतंतद्वसवउपजीवंत्यग्निनामुखेन ॥

अग्निमुखेनवसवोरोहितरूपलक्षणममृतमुपजीवन्तीत्यर्थः। उपजीवनंभक्षणमितिशंकांप्रतिषेधति ॥

## नवैदेवाअश्नंतिनपिबन्ति ॥

चंद्रमिवेतिभावः। पुनःकथमुपजीवनमित्यत्राह ॥

## एतदेवामृतंदृष्ट्वातृप्यंति ॥

यशस्तेजआदिलक्षणंरोहितंरूपंसर्वैः करणैरुपलभ्यतृप्यंतीत्यर्थः।

## एतदेवरूपमभिसंविशन्ति ॥

एतदेवरूपमभिलक्ष्यानुभूयेतियावत्। संविशन्तिभोगानंतरमुदासीनाभवंतीत्यर्थः ॥

## एतस्माद्रूपादुद्यन्ति ॥

प्राप्तेभोगकालेइतिशेषः। सर्वत्रैतस्माद्रूपादितिल्यब्लोपेपंचमी। एतद्रूपानुभवमुद्दिश्योद्यन्ति सोत्साहाभवंतीत्यर्थः॥

## सयएतदेवममृतंवेद ॥

अनेनप्रकारेणवसुतृप्त्याधायकदर्शनगोचरत्वलक्षणवसूपजीव्यत्वादिनारोहितामृतंयोवेद ॥

सवसूनामेवैकोभूत्वाग्निनैवमुखेन एतेदवामृतंदृष्ट्वातृप्यति । सएतदेवरूपमभिसंविशत्येतस्माद्रूपादुदेति ॥

तत्क्रतुन्यायेनतदुपासीनोपिवसुत्वंप्राप्यतथैवभवतीत्यर्थः ॥ कियंतंकालमित्यत्राह ॥

सयावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेवतावदाधिपत्यꣳस्वाराज्यंपर्येता ॥

आदित्यस्यप्राच्यांदिश्युदयः प्रतीच्यामस्तमयश्चयावंतंकालमनुवर्तंतेतावंतंकालंवसूनां यदाधिपत्यंयदप्रतिहतसंकल्पत्वलक्षणंस्वाराज्यंचतत्पर्येता परितोगंताऽनुभवतीत्यर्थः ॥

अथयद्द्वितीयममृंततद्रुद्राउपजीवन्तींद्रेण मुखेननवैदेवाअश्नंतिनपिबन्त्येतदेवामृतं दृष्ट्वातृप्यंत्येतदेवरूपमभिसंविशंत्येतस्माद्रूपादुद्यंति । स यएतदेवममृतंवेदरुद्राणामेवैकोभूत्वाइन्द्रेणैवमुखेनैतदेवामृतं दृष्ट्वा तृप्यति सएतदेवरूपमभिसंविशत्येतस्माद्रूपादुदेति । सयावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणतउदेतोत्तरतोस्तमेता रुद्राणामेवतावदाधिपत्यंस्वाराज्यंपर्येता ॥

पुरस्तादुदयपश्चादस्तमयापेक्षयाद्विगुणंकालंदक्षिणतउदयमुत्तरतोस्तमयंचकल्पयित्वाश्रुतिर्ब्रवीतिनात्रकथंताकार्या । शिष्टंस्पष्टम् ॥

अथयत्तृतीयममृतंतदादित्याउपजीवन्ति वरुणेनमुखेननवैदेवाअश्नंतिनपिबंत्येतदेवामृतंदृष्ट्वातृप्यन्तितएतदेवरूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति । सयएत-

देवममृतंवेदादित्यानामेवैकोभूत्वावरुणेनैवमुखेनैतदे वामृतंदृष्ट्वातृप्यतिसएतदेवरूपमभिसंविशत्येतस्माद्रू पादुदेतिसयावदादित्योदक्षिणतउदेतोत्तरतोस्तमेता- द्विस्तावत् पश्चादुदेता पुरस्तादस्तमेता आदित्यानामे- वतावदाधिपत्यंस्वाराज्यंपर्यैता ॥ अथयच्चतुर्थममृतंत न्मरुतउपजीवन्तिसोमेनमुखेननवैदेवा अश्नं तिनपिबं- त्येतदेवामृतंदृष्ट्वातृप्यंति । तएतदेवरूपमभिसंविशं त्येतस्माद्रूपादुद्यंतिसयएतदेवममृतंवेद मरुतामेवैको- भूत्वासोमेनैवमुखेनैतदेवामृतंदृष्ट्वातृप्यतिसएतदेवरू- पमभिसंविशत्येतस्माद्रूपादुदेति सयावदादित्यः पश्चा- दुदेता पुरस्ता दस्तमेता द्विस्तावदुत्तरतउदेता दक्षिण तोस्तमेता मरुतामेवतावदाधिपत्यंःस्वाराज्यंपर्यैता । अथयत्पंचमममृतंतत्साध्याउपजीवन्ति ब्रह्मणामुखे- ननवैदेवाअश्नन्तिनपिबंत्येतदेवामृतंदृष्ट्वातृप्यन्ति तए तदेवरूपमभिसंविशंत्येतस्माद्रूपादुद्यंति सयएतदेवा- ममृतंवेदसाध्यानामेवैकोभूत्वाब्रह्मणैवमुखेनैतदेवामृ- तंदृष्ट्वातृप्यतिसएतदेवरूपमभिसंविशत्येतस्माद्रूपादु देति । सयावदादित्यउत्तरतउदेता दक्षिणतोस्तमेता द्विस्तावदूर्ध्वउदेता अर्वागस्तमेता साध्यानामेवताव दाधिपत्यंस्वाराज्यंपर्यैता ॥

वसुरुद्रादित्यमरुत्साध्यगणभोग्यरोहितादिपञ्चरूपात्मकपंचामृ- ताश्रयदेवमधुत्वरूपितज्योतिर्मंडलाख्यरूपयुक्तस्योदयास्तमया-

दिकृत्यविशिष्टस्यादित्यनामकस्यादित्यशरीरककार्यावस्थब्रह्मण-उपासनमुपदिश्यनामरूपकृत्यादिरहितकार्यावस्थारहितादित्यजीवशरीरकब्रह्मोपासनंदर्शयति ॥

अथततऊर्ध्वंउदेत्यनैवोदेता नास्तमेता ॥

अथब्रह्मदिवसरूपस्यकल्पस्यसमाप्त्यनंतरंततऊर्ध्वंउदेत्यउदयास्तमयकृत्यप्राण्यनुग्रहरहितइत्यर्थः । उदयास्तशून्यः ॥

नैवोदेतानास्तमेताएकलएवमध्येस्थाता ॥

एकस्वभावएवोदासीनतयावर्ततइत्यर्थः । अत्राहभाष्यकायकारणावस्थब्रह्मोपासनंविधीयते । असौवादित्योदेवमध्वित्यारभ्याथततऊर्ध्वंउदेत्येत्यतः प्रागादित्यवस्वादिकार्यविशेषावस्थब्रह्मोपासनमुपदिश्यते । अथततऊर्ध्वंउदेत्येत्यादिनाऽऽदित्यांतरात्मतयावस्थितंकारणावस्थमेवब्रह्मोपदिश्यतइत्युक्तम् । तत्राथततऊर्ध्वंउदेत्येत्यस्यमुक्तावस्थादित्यांतर्यामिब्रह्मोपासनपरत्वेथशब्दादिस्वारस्यात्कारणावस्थमितिभाष्यस्याकार्यावस्थंमुक्तावस्थमित्यर्थएवोचितः । नत्वादित्यभावप्राप्तिपूर्वावस्थम् ।व्यासार्यैस्तुभाष्यस्वारस्यमवलंब्यादित्यनामरूपभाक्त्वावस्थापूर्वभाव्यवस्थैव अथततऊर्ध्वंउदेत्येत्यादिसंदर्भेणप्रतिपाद्यतइतिवर्णितम् । तेषामयमाशयः ।अथशब्दोननिर्दिष्टानंतर्यार्थः । अपित्वर्थांतरप्रस्तावार्थः । अथततऊर्ध्वंउदेत्यनैवोदेतानास्तमेता एकलएवमध्येस्थातेत्यस्याप्युदयास्तमयतत्कार्यशून्यत्वमर्थः । तच्चादित्यभावपूर्वावस्थायांकल्पादौसंभवतीति ॥

तदेषश्लोकः ॥

तस्मिन्विषयेदेवान्प्रतिकेनचिद्योगिनागीतश्लोकः ॥

नवैतत्रसनिम्लोचनोदियायकदाचन। देवास्तेना-
हंसत्येनमाविराधिषिब्रह्मणेति ॥

हेदेवास्तस्मिन्नादित्यभावमुक्तिकालेसमुक्तादित्यांतर्यामिपरमात्मा नास्तमितोनोदितश्चतेनसत्येनब्रह्मणाऽहंमाविराधिषिविरोधंनगच्छामि। अप्राप्तिंनगच्छामीतियावत् ॥

नहवाअस्माउदेतिननिम्लोचतिसकृद्दिवाहैवास्मै-
भवति यएतामेवंब्रह्मोपनिषदं वेद ॥

यएतांमधुविद्यारूपांब्रह्मोपनिषदंब्रह्मविद्यांवेदानुतिष्ठत्यस्मैब्रह्मविदेआदित्योनोदेतिनास्तमेति। आदित्योदयास्तमयाभ्यांनांकिंचित्तस्यप्रयोजनमित्यर्थः ॥ सकृद्दिवाहैवास्मैभवति ॥ अस्मैब्रह्मविदेसकृद्दिवैवभवतिसकृदुदितमवहेरभवति ॥ सदैवाहर्भववतीत्यर्थः। संततंसर्वविषयकसाक्षात्कारोस्यभवतीत्यर्थः। मधुविद्यासंप्रदायमाह ॥

तद्धैतद्ब्रह्माप्रजापतयउवाचप्रजापतिर्मनवेमनुः प्रजाभ्यः ॥

तद्धैतन्मधुविज्ञानमित्यर्थः ॥

तद्धैतदुद्दालकायारुणयेज्येष्ठायपुत्रायपिताब्रह्मप्रोवाच ॥

तद्धैतद्ब्रह्मउद्दालकाय पिताप्रोक्तवान् ॥

इदंवावतज्ज्येष्ठायपुत्रायपिताब्रह्मप्रब्रूयात् प्रणाय्याय वांतेवासिने ॥

तस्माद्धेतोः इदंब्रह्मविज्ञानंज्येष्ठायपुत्रायवाब्रूयात्, योग्यायाशिष्यायवाप्रब्रूयात्। नान्यस्मै। प्रणाय्योऽसंमतावितिनिष्कामार्थेप्रणाय्यशब्दस्यनिपातितत्वात् ॥

यद्यप्यस्माइमामद्भिः परिगृहीतां धनस्यपूर्णांदद्या देतदेवततो भूयइत्येतदेवततो भूयइति ॥

समुद्रावृतां भोगोपकरणैः पूर्णामिमां पृथिवीं यद्यप्यस्मै आचार्यायदद्यात् । तदपेक्षयाप्येतद्विज्ञानमेवाधिकम् । नैतस्यानुरूपो निष्क्रयोस्तीत्यर्थः । द्विरुक्तिर्विद्यासमाप्त्यर्था ॥

शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि । १ । ३ । ३३ ॥

छांदोग्ये चतुर्थाध्यायारम्भे ॥

जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस ॥

जनश्रुतस्या ( तेर ) पत्यंजानश्रुतिः । हशब्दः प्रसिद्धौ ॥ पुत्रसंज्ञस्यपुत्रःपौत्रः । तस्यापत्यं पौत्रायणः । श्रद्धापुरःसरंदेयमस्यसः श्रद्धादेयः । अर्थिभ्योबहुदातुंशीलमस्यसबहुदायी । बह्वस्यगेहेन्नं पक्तव्यंसबहुपाक्यः, आस ॥

सहसर्वत आवसथान्मापयांचक्रेसर्वतएवमेऽन्नमत्स्यंतीति ॥

सहजानश्रुतिः सर्वत एत्यातिथयोममान्नं भोक्ष्यंत इत्यभिप्रायेणसर्वासु दिक्षुग्रामनगरमार्गारण्यादिषु पांथानामनाथानां शीतवातवर्षातपनिवारकान्नोदकशयनाच्छादनादिपूर्णाः शालाःकारितवानित्यर्थः ॥

अथह हंसानिशायामतिपेतुः ॥

एवंसतिकस्यां चिद्रात्रौकेचनमहात्मानोन्नदानादिगुणैस्तोषिताः हंसस्वरूपाः संतोराज्ञोदर्शनगोचरेआगताः ॥

तद्धैवंहꣳसोहꣳसमभ्युवाद ॥

तत्तस्मिन्काले तेषांहंसानां मध्येएकःपृष्ठतोगछन्हंसः अग्रेगामिनंकंचनहंसमुवाच ॥

भोभोहिभल्लाक्षभल्लाक्ष ॥

जानश्रुतेः पौत्रायणस्य समंदिवाज्योतिराततं तन्माप्रसाङ्क्षीस्तत्त्वा माप्रधाक्षीदिति। भोभोइतिसंबोध्य भल्लाक्षभल्लाक्षेत्यनेन विपरीतलक्षणायां मंदलोचनेतिसंभ्रमेणद्विवारंसंबोधनम् । समंदिवास्वर्गेण समं दिवसेन समंवा। एतस्यतेजः प्रसृतम्। तस्मिंस्तेजसिमासक्तोभूः। तत्तेजस्त्वांमादहेत् ॥

तमुहपरः प्रत्युवाच ॥

एतज्जानश्रुतेःप्रशंसारूपंवाक्यमुपश्रुत्यतदसहमानः परो हंसःप्रत्युवाच ॥

कमुअरएनमेतत्संतꣳसयुग्वानमिवरैक्कमात्थेति ॥

उइत्यनर्थकोनिपातः। अरेकंसंतंकेनमाहात्म्येनयुक्तमेनंजानश्रुतिंसशकटंरैक्कमिवैतत्प्रशंसावचनंब्रवीषि । रैक्कएवब्रह्मज्ञोमहाप्रभावः। अब्रह्मज्ञस्यास्यकितेजःकिंवामांदहेदितिभावः । एवमुक्तः पश्चात्पतन् हंसःपृच्छति ॥

योनुकथंसयुग्वारैक्कइति ॥

यउक्तःसकिंप्रकारकइत्यर्थः। इतरआह ॥

यथाकृतायविजितायअधरेयास्संयंत्येवमेनꣳसर्वं तदभिसमेति यत्किंचप्रजाःसाधुकुर्वंति ॥

यथालोकेकृतनामाअयःद्यूतसमयप्रसिद्धश्चतुरंकायः।तत्रविजितंजयोयस्यसः कृतायविजितःपुरुषः अथवाविजितंविजयः तस्माइत्यर्थः। तदर्थमितरेत्रिद्व्येकांकाः अधरेन्यूनाःअयाःसंयंतिसंगच्छंते-

अंतर्भवंति। चतुरंकेकृतायेएकांकद्व्यंकत्र्यंकानांशतंसहस्रेसंभवतीति न्यायेनविद्यमानत्वात् तत्रांतर्भवति। कृतांकविजयिनःएकांकादिजयोप्यस्तीतिभावः। एवमेवहिलोकेप्रजायच्छोभनंकर्मानुतिष्टंति तत्सर्वमेनंकृतायस्थानीयंरैक्कमभिसमेतिसंगच्छते। तत्कर्मणिसकलंशोभनकर्मांतर्गतमितियावत्॥

## यस्तद्वेदयत्सवेद॥

सरैक्कः यद्वेदतदेवान्योपि। यःकश्चिद्वेदतज्ज्ञातमेवान्येजानंति। तज्ज्ञानेसर्वज्ञानमंतर्गतमित्यर्थः॥

## समयैतदुक्तः॥

सतादृशोरैक्कोमयैतेनसयुग्वानमिवरैक्कमात्थेत्यनेनोक्तइत्यर्थः। वेदांताचार्यैस्तत्त्वटीकायामस्यार्थस्यप्रतिपादितत्वात्। उक्तंचभगवताभाष्यकृतालोकेयत्किंचित्साध्वनुष्ठितंकर्मयच्चसर्वंचेतनगतंविज्ञानंतदुभयंयदीयज्ञानकर्मांतर्गतंसरैक्कइत्याहेति॥ यद्यपिव्यासार्यैर्लघुसिद्धांते "आवृत्तिरसकृदुपदेशात्। ४।१।१॥" इत्यत्रचयस्तद्वेदयोवेदितायत्सवेदयद्वेद्यं समयैतदुक्तः।सवेदितारैक्कस्तद्वेद्यंब्रह्मचोभयंमयोक्तमित्यर्थइत्युक्तम्। तदप्येतत्परमेवद्रष्टव्यम्। नतुप्रतीयमानार्थपरम्।यस्तद्वेदयत्सवेदेतिवाक्यात्प्राचीनेयथाकृतायविजितायाधरेयाःसंयंति एवमेनंसर्वंतदभिसमेतियत्किंचप्रजाःसाधुकुर्वंतीतिवाक्येब्रह्मप्रसक्तेरेवाभावेनवेदितावेद्यंचतत्रोपदिष्टमित्यर्थस्यासंभवेनयस्तद्वेदयत्सवेदेतिवाक्येनप्रतिपादनासंभवाद्भाष्यविरोधाच्चेतिद्रष्टव्यम्॥

## तदुहजानश्रुतिःपौत्रायणउपशुश्राव॥

तद्ब्रह्मज्ञानरहिततयाऽऽत्मनिन्दागर्भंतद्वत्तयाचरैक्कप्रशंसारूपंवाक्यंशुश्राव॥

## सहसंजिहानएवक्षत्तारमुवाच॥

सहकथमपिनिशामतिवाह्यतल्पंत्यजन्नेवक्षत्तारमुक्तवान्। "वैश्या-

द्ब्राह्मणकन्यायांक्षत्तानामप्रजायते ॥ जीविकावृत्तिरेतस्यराजांतःपुरर क्षणम्" इत्युक्तरीत्याराजांतःपुररक्षकःप्रतिलोमजातिविशेषःक्षत्ता ॥

अंगारेहसयुग्वानमिवरैक्कमात्थेति ॥ योनुकथँसयुग्वारैक्कइतियथाकृतायविजितायाथरेयाःसंयंति । एवमेनँसर्वंतदभिसमेतियत्किंचप्रजाःसाधुकुर्वंतियस्तद्वेद यत्सवेदसमयैदुक्तइति ॥

अरेअंगवत्सेतिक्षत्तारंराजासंबोध्यरात्रावेवंहंसयोः सल्लापः समजनि इतिरैक्कस्यचिह्नमुक्तवानित्यर्थः ॥

सहक्षत्तान्विष्यनाविदमितिप्रत्येयाय ॥

सचक्षत्ताशकटलक्षणरैक्कचिह्नंस्मरन्ग्रामनगरादिकमन्विष्यनाज्ञासिषमितिप्रत्यागतवान् ॥

तँहोवाचयत्रारेब्राह्मणस्यान्वेषणातदेनमृच्छेति ॥

अरेब्राह्मणस्यब्रह्मविदोयत्रविविक्तेषुनदीपुलिनारामादिषुमार्गणंयुक्तंतत्रगत्वामार्गणंकुर्वित्युवाचेत्यर्थः ॥

सोधस्ताच्छकटस्यपामानंकषमाणमुपोपविवेश ॥

विजनेकस्मिंश्चिद्देशेशकटस्याधस्तात्पामानंकंडूयमानं रैक्कमेत्यदृष्ट्वासमीपेगत्वाविनयेनोपविष्टवान् ॥

तँहाभ्युवादत्वंनुभगवःसयुग्वारैक्कइत्यहंह्यरा३इतिहप्रतिजज्ञेसहक्षत्ताऽविदामितिप्रत्येयाय ॥

हेभगवस्त्वंवारैक्क इतिपृष्टो रैक्कोहमेवेतिप्रत्युवाच । तच्छुत्वाऽऽज्ञासिषामितिप्रत्यागतः ॥

तदुहजानश्रुतिः पौत्रायणः षट्छतानिगवांनिष्कमश्वतरीरथंतदादायप्रतिचक्रमे ॥

ततोजानश्रुतिः गवांषट्छतानिनिष्कंकंठाभरणम् । अश्वतरीयुक्तंरथंतदादायगृहीत्वारैक्कंप्रतिगतवान् ॥

त ँ हाभ्युवादरैक्केमानिषट्छतानिगवामयंनिष्कोयमश्वतरीरथोनुमएतांभगवोदेवता ँ शाधियांदेवतामुपास्सेइति ॥

हेरैक्कएतत्सर्वमानीतंतद्गृहाण । त्वंयांदेवतामुपास्सेतां देवतांमे-अनुशाधिविविच्यज्ञापयेतिप्रार्थयामास ॥

तमुहपरः प्रत्युवाचाहहारेत्वाशूद्रतवैवसहगोभिरस्त्विति ॥

अहइत्याश्चर्यं । स्वयोगमहिमविदितलोकत्रयोजानश्रुतेर्ब्रह्मज्ञानविधुरतानिमित्तानादरगर्भहंसवाक्यश्रवणेनशोकाविष्टतांतदनंतरमेवब्रह्मजिज्ञासयोद्योगंचविदित्वाऽस्यब्रह्मविद्यायोग्यतामभिज्ञायसत्यामपियोग्यतायांचिरकालसेवांविनाऽर्थप्रदानेनशुश्रूषमाणस्यास्ययावच्छक्तिप्रदानेनब्रह्मविद्याप्रतिष्ठिताभवतीतिमत्वातमनुगृह्णन्तस्यशोकाविष्टतामुउपदेशयोग्यताख्यापिव ब्रह्मजिज्ञासादार्ढ्यसिद्ध्यर्थंस्वयोगमहिमसाक्षात्कृतसकलवृत्तांतत्वलक्षणस्वमहिमानंचशोचितृत्वप्रवृतिनिमित्तशूद्रशब्दामंत्रणेनख्यापयन् हारसहितरथः तवैवगोभिः सहास्तु । कलत्रहीनस्यग्रामगृहादिशून्यस्यममगोरथादिरक्षणेकाशक्तिः, मत्प्रयोजनापर्यवसाय्यल्पधनदानेनकथंतवब्रह्मविद्याप्रतिष्ठिताभवेदित्युवाचेत्यर्थः । स्फायितंचि० । २ । १७० ॥ इत्यादिनारक्प्रकरणपठितेन"शुचेर्दश्च उ० । २।१७६॥" इत्युणादि सूत्रेणरक्प्रत्ययेकृतेशुचेश्चकारस्यदकारेअमितम्योर्दीर्घश्चेतिपूर्वसूत्रानुवृत्तेनधातोरुकारस्य दीर्घादेशेनचशूद्रशब्दोनिष्पन्नोभवति ॥

तदुहपुनरेवजानश्रुतिः पौत्रायणः सहस्रंगवांनिष्क-

मश्वतरीरथंदुहितरंतदादायप्रतिचक्रमेत‍ंहाभ्युवाद-
रैक्वेदंसहस्रंगवामयंनिष्कोयमश्वतरीरथइयंचजाया-
अयंग्रामोयस्मिन्नास्सेअन्वेवमाभगवःशाधीति ॥

तदभिप्रायंजानन्रैक्वस्यपरिणयार्थं स्वकन्यामावासार्थंतत्रत्यं ग्रामंचोपहृत्यप्रार्थयामासेत्यर्थः ॥

तस्याहमुखमुपोद्गृह्णन्नुवाच ॥

तस्यमुखमुपायनरूपोपायमंगीकुर्वन्नुक्तवानित्यर्थः ॥

आजहारेमाः शूद्रानेनैवमुखेनालापयिष्यथाइति ॥

इमादक्षिणा आजहर्थ।अनेनैवोपायेनमां ब्रह्मोपदेशरूपं वाक्यमालापयिष्यसे ब्रह्मविद्योपदेष्टारं करिष्यसीत्यर्थः । थासःसेइत्येतदभावश्छांदसः। पुनरपिशूद्रेति संबोधनस्यपूर्ववत्प्रयोजनम् । अत्र शूद्रशब्दस्यन रूढ्यावर्णविशेषोर्थः। चतुर्थवर्णस्यब्रह्मविद्यायामनधिकारादितिद्रष्टव्यम् ॥

तेहैतेरैक्वपर्णानाममहावृक्षेषुयत्रास्माउवास ॥

यत्रग्रामेषु रैक्वउवासतेषु महावृक्षाख्यदेशेषुरैक्वपर्णाइतिप्रसिद्धास्तान्ग्रामांश्चास्मैददावित्यर्थः ॥

स तस्मैहोवाच ॥

तत्सर्वंदत्तवते जानश्रुतयेरैक्वः स्वोपास्यांदेवतामुपदिदेशेत्यर्थः॥

वायुर्वावसंवर्गः ॥

संवर्जनं सम्यग्ग्रहणम्। एकीकृत्यग्रहणमित्यर्थः । संवर्गत्वगुणकोवायुर्ध्येयइतियावत्। संवर्गत्वमेवोपपादयति ॥

यदावाअग्निरुद्वायति वायुमेवाप्येति यदासूर्योस्तमेति वायुमेवाप्येति यदाचंद्रोस्तमेतिवायुमेवा-

प्येति यदाआपउच्छुष्यंति वायुमेवापियंतिवायुर्ह्येवै-तान्सर्वान्संवृंक्तेइत्यधिदैवतम् ॥

प्रक्रमेहिएनं सर्वंतदभिसमेतीत्यादिब्रह्मविद्याप्रशंसावगमात् वक्ष्यमाणलिंगानुपपत्तेश्च वायुशब्देनवायुशरीरकः परमात्मोच्यते । संवृंक्तेएकीकृत्यगृह्णातीत्यर्थः । इत्यधिदैवतम् । एवंदेवेषुसंवर्गोयमित्यर्थः । अध्यात्मं प्राणः संवर्गइत्याह ॥

अथाध्यात्मंप्राणोवावसंवर्गः सयदास्वपिति ॥

सपुरुषोयस्मिन्कालेस्वपितीत्यर्थः ॥

प्राणमेववागप्येतिप्राणंचक्षुःप्राणꣳश्रोत्रंप्राणंमनः प्राणोह्येवैतान्सर्वान्संवृङ्क्तेइति ॥

अत्रापिप्राणशब्दस्तच्छरीरकपरमात्मपरोद्रष्टव्यः । उक्तमर्थमुपसंहरति ॥

तौवाएतौद्वौसंवर्गौ वायुरेवदेवेषुप्राणः प्राणेषु ॥

स्पष्टोर्थः ॥

संवर्गविद्यास्तुत्यर्थमाख्यायिकेयमारभ्यते ॥

अथहशौनकंचकापेयमभिप्रतारिणंच काक्षसेनिं परिविष्यमाणौब्रह्मचारीबिभिक्षे ॥

कपिगोत्रं शुनकसुतं कक्षसेनसुतमभिप्रतारिनामानंचतौद्वौसूपकारैः परिविष्यमाणौभोजनायोपविष्टौकश्चित्संवर्गोपासको ब्रह्मचारी भिक्षितवान् ॥

तस्माउह नददतुः ॥

अयं ब्रह्मचारीसंवर्गविद्यानिष्ठोदुरभिमानी यद्वक्ष्यतितच्छ्रोष्यावइतिबुद्ध्याभिक्षांनदत्तवंतौ ॥

सहोवाच ॥

स ब्रह्मचार्युवाच ॥

महात्मनश्चतुरोदेवएकः कःसोजगारभुवनस्यगोपाः।तंकापेय नाभिपश्यंतिमर्त्याःअभिप्रतारिन्बहुधावसंतम् ॥

अधिदैवतम् । महात्मनः अग्न्यादित्यचंद्रजलरूपान्।अध्यात्मम्। वाक्चक्षुश्श्रोत्रमनोरूपान् चतुस्संख्याकान्देवान्सर्वलोकस्यगोप्तासः एकएववायुःप्राणरूपीकःप्रजापतिःजगारसंहृतवान् । हेकापेयाभि प्रतारिणौ एवंभूतं प्रजापतिंबहुरूपतयावसंतंमर्त्यामरणधर्माणः अविद्यामोहिताःसंतोनजानन्तीत्यर्थः । गोपाः गुपूरक्षणेअसुन्प्रत्ययांतः ॥

यस्मैवाएतदन्नंतस्माएतन्नदत्तमिति ॥

जगत्सर्वंयस्यसंवर्गस्यप्रजापतेरन्नंतस्मैभिक्षमाणायमह्यमन्नंनदत्तम् । अतः केपिनजानंतीत्युक्तोपासनदार्ढ्यायोक्तोपास्यैक्यबुद्ध्याभिक्षमाणायस्वस्मैअप्रदानमेवस्वोपास्यदेवतायाअप्रदानंमत्वातस्मैएतन्नदत्तमितितौनिंदितवानित्यर्थः ॥

तदुहशौनकः कापेयः प्रतिमन्वानः प्रत्येयाय ॥

कापेयः शौनकःतत्प्रतिमन्वानः मनसाऽऽलोचयन् तत्समीपंप्रत्यागत्योवाच ॥

आत्मादेवानांजनिताप्रजानांहिरण्यदंष्ट्रोबभसोऽनसूरिः।महांतमस्यमहिमानमाहुरनद्यमानोयदनन्नमत्तीतिवैवयंब्रह्मचारिन्नेदमुपास्महेदत्तास्मैभिक्षामिति ॥

देवानांनियंता प्रजानामुत्पादकः। कमनीयदंष्ट्रायुक्तः हिरण्यविदारकदंष्ट्रायुक्तइतिवा । बभसोभक्षणशीलः । असुरसंहारकइतियावत् । अनसूरिरविपश्चिन्नभवतीत्यनसूरिः । विपश्चिदितियावत् । अस्यच-

श्रीनृसिंहस्यपरमात्मनः महिमानंमहांतमाहुः । यत्स्वयमन्यैरनाश्यमानः अनन्नं वागादिकमत्ति नाशयति एवंभूतः परमात्मैवसंवर्गः । नत्वदुक्तः प्रजापतिरित्यर्थः।अतोवयंनत्वदुक्तप्रजापतिरूपंसंवर्गमुपास्महे । अपितुपरमात्मानमेव । अतस्त्वंसंवर्गनयथावज्ज्ञानासीत्युक्त्वातस्मैभिक्षांप्रयच्छतेतिपरिचारकानाहतुरित्यर्थः । अनेनसंवर्गविद्यायाः वायुप्राणशरीरकपरमात्मपरत्वमाविष्कृतंभवतीति ॥

## तस्माउहददुः ॥

तस्मैब्रह्मचारिणेपरिचारकाभिक्षांददुरित्यर्थः । संवर्गविद्यास्तुतयेतत्संबंधिपदार्थान् कृतायत्वेनविराट्त्वेनान्नत्वेनान्नादित्वेनचस्तौति ॥

## तेवाएतेपंचान्येपंचान्येदशसंतस्तत्कृतम् ॥

अधिदैवतमग्न्यादित्यचन्द्रजलरूपाःपदार्थाः अपियंतश्चत्वारः । अपीयमानोवायुरेकइतिपंच।अध्यात्मंवागाद्याअपीयंतश्चत्वारः।अपीयमानः प्राणएकइतिपंच। आहत्यदशत्वसंख्यांप्राप्ताः संतः कृतायतां भजंते । कृतसंज्ञकेतस्मिन्नयेचतुरंकायत्र्यंकायद्व्यंकायैकांकायानामनुप्रविष्टतयादशांकत्वमेकस्यद्वयोस्त्रयाणांचतुर्णांचसमावेशेदशत्वसंख्यासंभवादितिभावः ॥

## तस्मात्सर्वासुदिक्ष्वन्नमेवदशकृतम् ॥

तस्माद्धेतोः संवर्गविद्योपास्यंदशत्वसंख्यायुक्ततयाकृतायरूपंसद् दशसुदिक्षुविद्यमानमन्नमेवभवति । दशाक्षराविराडन्नंविराडितिश्रुतेः ॥

## सैषाविराडन्नादी ॥

दशत्वसंख्याश्रयत्वाद्दशाक्षरा विराडितिविराट्छंदोभवति । अन्नमत्तीत्यन्नादी । कृतसंज्ञिकेअयेदशसंख्यायाभक्ष्यवदंतर्भूतत्वा

दशत्वसंख्यायाश्चविराट्त्वाद्विराजश्चान्नत्वाद्दशत्वसंख्यागर्भकृताय-स्थानीयसंवर्गविद्योपास्यान्नादित्वमप्यस्तीत्यर्थः ॥

तयेदꣳसर्वंदृष्टम् ॥

तयाविराजा उपासितया इदंसर्वंदशदिग्वर्तिपदार्थजातंदशत्वसंख्यासाम्याद्दृष्टंभवति । उपासितंभवतीत्यर्थः । तदुपासनस्य-फलमाह ॥

सर्वमस्येदंदृष्टंभवत्यन्नादोभवतियएवंवेदयएवंवेद ॥

एतदुपासकस्यसार्वज्ञंब्रह्मलक्षणान्नानुभवश्चभवतीत्यर्थः । विद्या-समाप्तिद्योतकंद्विर्वचनम् । व्यासार्यैस्तु "छन्दोभिधानान्नेति०।१।१। २८ ॥" इतिसूत्रेअन्नादितिपाठमाश्रित्यान्नंचतदत्तिचेत्यन्नादितिभो-क्तृत्वभोग्यत्वाश्रयपरमात्मपरतयाव्याख्यातम् ॥

---

सुषुप्त्युत्क्रांत्योर्भेदेन । १ । ३ । ४३ ॥ नसंख्योपसं-ग्रहादपिनानाभावादतिरेकाच्च । १ । ४ । १० ॥ संध्ये सृष्टिराहहि । ३ । २ । १ ॥ प्रतिषेधादितिचेन्नशारीरा-त् । ४ । २ । १२ ॥

एतद्विषयवाक्यार्थनिर्णयायबृहदारण्यकषष्ठाध्यायगतवाक्यान्य-त्यंतोपयुक्तानिव्याख्यायंते ॥

अस्तमितआदित्येयाज्ञवल्क्यचंद्रमस्यस्तमितेशांतेग्नौशांतायांवाचिकिंज्योतिरेवायंपुरुषइत्यात्मैवास्य ज्योतिर्भवतीत्यात्मनैवायंज्योतिषास्तेपल्ययतेकर्म-कुरुतेविपल्येतीति ॥

स्वप्नेबाह्येंद्रियाणामुपरतत्वादादित्यादिप्रकाशकाभावाच्चात्मैव-स्थितिगतिहेतुभूतप्रकाशकोभवतीत्यर्थः । आत्मैवास्यज्योतिरित्य-त्रात्मशब्दनिर्दिश्यमानंपुरुषस्वरूपंकिमितिपृच्छति ॥

कतमआत्मेति॥

हृत्कमलमध्यगतः प्राणशब्दितेंद्रियमध्यगःविज्ञानधर्मक इत्युत्तरमाह॥

योयंविज्ञानमयःप्राणेषुहृद्यंतज्योंतिःपुरुषः॥

अत्रविज्ञानमयइति प्राचुर्यार्थेमयटाऽऽत्मनोज्ञानव्यतिरेकउक्तः। प्राणेष्वितिसप्तमीनिर्देशादिंद्रियव्यतिरेकोपि सिद्धः। अत्र ज्योतिश्शब्दितात्मनोविज्ञानमयत्वोक्त्याधर्मभूतज्ञानद्वाराभासकत्वमादित्यादीनामिवप्रभाद्वाराज्योतिष्ट्वमितिभावः॥

ससमानःसन्नुभौलोकावनुसंचरतिध्यायतीवलेलायतीव॥

सजीवः अहंकारविमूढात्माकर्ताहमितिमन्यतइत्युक्तरीत्यापरायत्तकर्तृत्वेपिस्वातंत्र्यलक्षणकर्तृत्वाभिमानयुक्तःसन्लोकद्वयेपिसंचरति। ध्यायतीव चलतीव।परतंत्रप्रभौ प्रभुरिवेत्युक्तिवत्परायत्तकर्तृत्वाश्रयेध्यायतीवेतीवशब्दप्रयोगेनानुपपत्तिः। ततश्चलोकद्वयसंचारध्यानादेर्देहातिरेकउक्तोभवति॥ ननुस्वप्नेस्वयंज्योतिष्ट्वंकुतोभ्युपगंतव्यमिन्द्रियाणांप्रकाशकत्वादित्याशंक्याह॥

सयत्रप्रस्वपित्यस्यलोकस्यसर्वावतोमात्रामुपादायस्वयंनिहत्यस्वयंनिर्मायस्वेनभासास्वेनज्योतिषाप्रस्वपित्यत्रायंपुरुषःस्वयंज्योतिर्भवति॥

यदायंस्वप्नमनुभवतितदासर्वावतः सर्ववतःभोग्यभोगोपकरणादिसर्वयुक्तस्यजगतोमात्रा, मीयतेनेनेति मात्राप्रकाशकेंद्रियवर्गः तमुपादायस्वयमेवतमिंद्रियवर्गंनिहत्यनिश्चेष्टतामापाद्यनिर्व्यापारंकारयित्वास्वयंनिर्मायजीवस्यस्वाप्नपदार्थस्रष्टृत्वमदृष्टद्वाराद्रष्टव्यम् परैरपितथैवोक्तत्वात्॥ स्वेनभासेत्यस्यैवविवरणंस्वेनज्योतिषे-

ति । प्रस्वपिति स्वप्नमनुभवतीत्यर्थः । अत्रास्यांदशायांपुरुषःस्वयंज्योतिर्भवति प्रकाशकान्तराभावादित्यर्थः । यद्यपिस्वप्नपदार्थभानंधर्मसूतज्ञानेनैवनात्मज्योतिषा । तथाप्यादित्यादिप्रकाशकांतरस्थानाभिषिक्तआत्मैवेतिभावः । यद्यपिस्वप्नेआदित्यादिज्योतिस्सृष्टयभ्युपगमेप्रकाशकांतरव्यतिरेकोनवक्तुंशक्यः।तथापिलोकप्रसिद्धादित्यादिज्योतिरंतराभावाज्जाग्रदादिवैषम्यमस्तीतिद्रष्टव्यम् । नन्वत्मनैवायंज्योतिषास्तेकर्मकुरुतेइत्यादिनोपपद्यते । अर्थस्यैवाभावेनाऽऽसनकर्मकरणादीनामभावादित्याशंक्याह ॥

नतत्ररथानरथयोगानपंथानोभवंत्यथरथान्रथयोगान्पथःसृजते ॥

युज्यंतइतियोगाःरथयोगाअश्वादयः। रथरथाश्वमार्गादयःजाग्रद्दशानुभवयोग्यानसंति । अथतुतत्तत्पुरुषतत्तत्कालमात्रानुभाव्यानर्थान्परमात्मासृजते ॥

नतत्रानंदामुदःप्रमुदोभवंत्यथानंदान्मुदःप्रमुदःसृजते ॥

अनुकूलदर्शनजाप्रीतिरानंदः । स्वकीयत्वबुद्धिजाप्रीतिर्मुत् । विनियोगजन्याप्रीतिः प्रमुत् ॥

नतत्रवेशांताः पुष्करिण्यः स्रवंत्योभवंत्यथवेशांतान्पुष्करिण्यः स्रवंत्यः सृजते ॥

वेशंताः पल्वलानि।वेशांताइतिदीर्घश्छांदसः। पुष्करिण्योवाप्यः। स्रवंत्योनद्यः। पुष्करिणीः स्रवंतीः सृजतइत्यर्थः।अत्रवाछंदसीतिपूर्वसवर्णदीर्घाभावः ॥ ननुस्वप्नेदृग्यस्मिन्देशेयदारथंपश्यतितदानींतत्रस्थितोन्यस्तंनपश्यतितत्रतस्यान्यत्रनयनचिह्नानिवानाशचिह्नानिवानोपलभ्यंते । अतःकथमीदृशीस्वप्नार्थसृष्टिरुपपद्यतामित्यत्राह ॥

सहिकर्तेति ॥

सकलप्रपंचनाटकसूत्रधारः सर्वेश्वरः खलु तत्रकर्ता सकिंवाकर्तुं-नशक्नुयादितिहिशब्दाभिप्रायः ॥

तदेतेश्लोकाभवन्ति ॥

सुप्तमधिकृत्यैतेवक्ष्यमाणश्लोकाः प्रवृत्ताइत्यर्थः ॥

स्वप्नेनशारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति
शुक्रमादायपुनरेतिस्थानंहिरण्मयः पुरुषएकहꣳसः ॥

स्वप्नेनेतीत्थंभावेतृतीया।स्वप्नेनोपलक्षितस्सन्।शारीरमभिप्रहत्यशरीरीनष्टचेतामापाद्य असुप्तः अलुप्तप्रकाशएवसन्सुप्ताँल्लुप्तप्रकाशान्प्राणानभितश्चाकशीति । कशगतिशब्दयोरित्यस्माद्यङ्लुगंतादिदंरूपम्। पर्यटतीत्यर्थः। शुक्रंज्योतिष्मत्प्रकाशकम्। मनआदींद्रियवर्गमादायस्वप्नांतेपुनः स्वस्थानमेति। हिरण्मयःप्रकाशमयः। एकहंसः एकएवहंतिगच्छतीति एकहंसः ॥

प्राणेनरक्षन्नवरंकुलायंबहिष्कुलायादमृतश्चरित्वा ॥
सईयते अमृतोयत्रकामंहिरण्मयः पुरुषः एकꣳहसः ॥

अवरंनिकृष्टंस्थूलंशरीरंप्राणेनपंचवृत्तिप्राणेनरक्षन्प्राणस्यापिस्वप्नेजीवेनसहनिर्गमेसद्योमरणमेवस्यात् । अतः प्राणेनशरीरंरक्षन्कुलायाज्जाग्रच्छरीराद् बहिर्निर्गत्ययत्रकामं, काम्यतइतिकामं,यत्रभोग्यंतत्रसर्वत्रचरित्वा अमृतः अमरणधर्मा हिरण्मयः एकहंसः पुनरपिस्वस्थानमीयतेगच्छतीत्यर्थः। यद्वायत्रकामंतत्रईयतेगच्छतीत्यर्थः ॥

स्वप्नांतउच्चावचमीयमानोरूपाणिदेवः कुरुतेबहूनि।
उतेवस्त्रीभिःसहमोदमानोजक्षदुतेवापिभयानिपश्यन्॥

स्वप्नांतेस्वप्नमध्यइत्यर्थः । अंतशब्दोमध्यवचनः । उच्चावचं पुण्यपापलक्षणमुत्कृष्टापकृष्टंसंगच्छमानोदेवः जीवइत्यर्थः । बहूनिदेवादीनिरूपाणिभजतइत्यर्थः । उतशब्दोप्यर्थः । स्त्रीभिःसहमोदमानइवजक्षदिव । जक्षणंभक्षणंहसनंवा । जक्षभक्षहनयोरितिद्विधातुः । भयानिबिभेत्येभ्यइति । व्याघ्रादीनिपश्यन्निवापिभवतीत्यर्थः ॥

**आराममस्यपश्यंतिनतंपश्यतिकश्चनेति ॥**

अस्यजीवस्यारामसुपकरणभूतमुद्यानादिकं देहेंद्रियादिकंच सर्वेपिपश्यंति । तंदेहेंद्रियादिविविक्तमंतर्बहिस्संचरंतमपिनपश्यंतीतिलोकं प्रत्यनुक्रोशंदर्शयतिश्रुतिः । इतिमंत्रसमाप्तौ । लोकप्रसिद्धिरपितथेत्याह ॥

**तन्नायतंबोधयेदित्याहुर्दुर्भिषज्यंहास्मैभवति यमेषनप्रतिपद्यते ॥**

यतएवस्वप्नेइन्द्रियाण्युपहृत्य जीवोबहिर्निर्गच्छति । अतआयतंगाढंसुप्तम् । यमउपरमे, निष्ठा । अनुदात्तोपदेशेत्यनुनासिकलोपः । तंनबाधयेदित्याहुः चिकित्सकाः । तेहितत्रदोषंपश्यंतिदुर्भिषज्यं हास्मैभवतियमेषनप्रतिपद्यते । बहिर्निर्गत आत्मायमिंद्रियदेशंनप्रतिपद्यते।कदाचिद्व्यत्यासेनेंद्रियाणींद्रियांतरदेशेप्रवेशयेत्।तत्रांध्यबाधिर्यादिदोषप्राप्तौदुर्भिषज्यंहास्मैभवतिदुःखेनभिषक्कर्मास्मैदोषायभवति । अयंदोषोदुर्विचिकित्सएवस्यादित्यर्थः ॥

**सवाएषएतस्मिन्स्वप्नांतेरत्वाचरित्वादृष्ट्वैवपुण्यंपापंचपुनः प्रतिन्यायंप्रतियोन्याद्रवतिबुद्धांतायैव ॥**

स्वप्नांतेस्वप्नस्थानइत्यर्थः । अन्तशब्दःस्थानवचनः।"अंतःसमाप्तौस्थानेचनिर्णयेभ्यंतरेपिचेतिनैघण्टुकाः"।बुद्धांतो बोधस्थानंजागरणमितियावत् । स्वप्नस्थानेक्रीडित्वाचरित्वापुण्यपापफलमनुभूयपश्चा

द्यथान्यायंयथागतम् । अयनमायःगमनम् । योनिशब्दःस्थानवचनः । स्वप्नस्थानाद्यथागतंजाग्रत्स्थानमागच्छतीत्यर्थः ॥

तद्यथामहामत्स्यउभेकूलेअनुसंचरतिपूर्वंचापरंच एवमेवायंपुरुषएतावुभावंतावनुसंचरतिस्वप्नांतंचबु-द्धांतंच ॥

कूलद्वयसंचारिमत्स्यवज्जाग्रत्स्वप्नस्थानसंचरणशीलोभवतीत्य-र्थः । एवंस्थानद्वयसंचारंप्रदर्श्यसुषुप्तिदशांप्रकाशयति ॥

तद्यथास्मिन्नाकाशेश्येनोवासुपर्णोवाविपरिपत्यश्रां-तः संहत्यपक्षौसलँयायैवध्रियतेएवमेवायंपुरुषएतस्मा अंतायधावतियत्रसुप्तोनकंचनकामंकामयतेनकंचन-स्वप्नंपश्यति ॥

यथाआकाशेश्येनोवागरुडोवाविशेषेणविपरिपत्यपतनंकृत्वाश्रां-तः सन्पक्षौसंहत्य । लीयतेऽस्मिन्पक्षीनिलयः नीडः । समीचीननी-डायैवध्रियतेअवतिष्ठते । धृङ्अवस्थानइतिधातुः । एवमेवायंपुरुषः बुद्धांतस्वप्नांतसंचरणश्रांतोयत्रस्थानेसुप्तः न कामाद्युपगतः स्वप्नां-श्चान्यान्पदार्थांश्चनपश्यतितादृशायपूर्वोक्तस्थानद्वयकालुष्यरहितसु षुप्तिस्थानायधावतीत्यर्थः ॥ ननुक्वचित्स्वप्नादिदर्शनंक्वचित्तदभाव-इत्यत्रकिंविनिगमकमित्याशंकायांस्थानवैषम्यकृतमित्याह ॥

तावाअस्यैता हितानाम नाड्योयथाकेशः सहस्रधा भिन्नस्तावताणिम्नातिष्ठंतिशुक्लस्यनीलस्यापिंगलस्यह-रितस्यलोहितस्यपूर्णाः अथयत्रैनंघ्नंतीवजिनंतीवह-स्तीवविच्छाययतिगर्तमिवपतति ॥

यत्रस्थितमेनंकेचनघ्नंतोवजिनंतीवजयंतीवगजोविद्रावयतीवगर्त-

मिवपतननिमित्तंभाति। ताः केशसहस्रांशसूक्ष्मानानारूपान्नरसपूर्णाहितानामिकानाड्योभवंतीत्यर्थः ॥

**यदेवजाग्रद्भयंपश्यतितदत्राविद्ययामन्यते ॥**

यद्यज्जाग्रद्दशायांभयसाधनंपश्यति तत्सर्वमासुनाडीष्वविद्याकर्मवशान्मन्यतेप्रत्येतीत्यर्थः । हितानामकस्वप्नवहनाडीस्थितस्यकर्मसंबंधसत्त्वात् । भीषणस्वाप्नपदार्थप्रतिभानंसंभवतीतिभावः ॥

**अथयत्रदेवइवराजेवाहमेवेदंसर्वोस्मीतिमन्यतेसोस्यपरमोलोकः ॥**

सयथाकुमारोवामहाराजोवामहाब्राह्मणोवाअतिसीमानंदस्यगत्वाशयीतैवमेवैषएतच्छेतेइतिबालाकिब्राह्मणोक्तरीत्यायत्रस्थानेस्थितस्यदेववद्राजवच्चानंदानुभवः स्वव्यतिरिक्तानुकूलप्रतिकूलवस्त्वनुपलम्भः सोस्यजीवस्यपरमोलोकः मुख्याश्रयः। परत्मात्मेतिभावः ॥

**तद्वाअस्यैतदतिच्छन्दाअपहतपाप्माभयंरूपम् ॥**

तदेतत् । अस्यातिच्छंदाः । छंदश्शब्दइच्छावाची । अतिच्छंदमभिलाषातिगम् । अपहतपाप्म पापप्रतिभटम् । अभयंप्रियं प्राप्यंरूपं परमात्मैवेत्यर्थः । ततः किमित्यत्राह ॥

**तद्यथा प्रिययास्त्रिया संपरिष्वक्तोनबाह्यं किंचनवेद नांतरमेवमेवायंपुरुषः प्राज्ञेनात्मनासंपरिष्वक्तो न बाह्यंकिंचन वेद नांतरम् ॥**

यथाप्रियस्त्रीपरिष्वक्तस्यांतरदुःखादिपदार्थज्ञानंबाह्यपदार्थज्ञानं वानास्ति एवं परमप्रियेण प्राज्ञेनपरमात्मनापरिष्वक्तस्यबाह्याभ्यंतरज्ञानाभावउपपद्यते । अत्रचपरिष्वंगोनामलयएव । "स्वाप्य-

यात् । १ ।१।१०॥" इतिसूत्रेस्वमपीतोभवतीति भाष्ये वाक्यसमा-नार्थतयैतद्वाक्यस्योदाहृत्वात् । अथवाजाग्रत्स्वप्नभोगप्रदकर्मसंब-न्धविरोधिपरिष्वंगः संबंधविशेषः सुषुप्तिमात्रकालवर्तीतिद्रष्टव्यम् ॥

तद्वा अस्यै तदाप्तकाममात्मकाममकामꣳरूपं-शोकांतरम् ॥

तदेवप्राज्ञात्मलक्षणमवाप्तसमस्तकाममात्मव्यतिरिक्तकामना-शून्यम् शोकांतरं शोकबाह्यम् । अंतरशब्दो बहिर्योगवचनः । प्राप्यं रूपमित्यर्थः ॥

अत्रपिताऽपिताभवति माताऽमाता ॥

अत्रपरमात्मनि सुषुप्तिस्थानेलीनस्य पित्रादयोनसंति । तद्रूपस्य शरीरसंबंधघटककर्मसंबंधशून्यतया अशरीरस्यजनकाभावेन पि-त्रादेरभावादितिभावः ॥

लोकाअलोकाः ॥

तस्याश्रयशून्यत्वादितिभावः ॥

देवाअदेवाः ॥

अनुग्राहकशून्यत्वादितिभावः ॥

वेदाअवेदाः ॥

अननुशासनीयस्वरूपत्वादितिभावः ॥

अत्रस्तेनोऽस्तेनोभवति भ्रूणहाऽभ्रूणहा चंडालोऽचं-डालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमणः तापसो ऽतापसः ॥

परिशुद्धात्मस्वरूपेस्तेयादिकर्तृत्वाद्यसंभवादितिभावः । अत्र हेतुमाह ॥

अनन्वागतंपुण्येनानन्वागतंपापेन ॥

शरीरसंबंधघटकपुण्यपापासंस्पर्शनादिति भावः । ननुचरम-देहवियोगानंतरभावित्वात्सर्वकर्मप्रहाणस्य कथं सुषुप्तौकर्मसंबंधा-भावइत्याशंक्याह ॥

तीर्णोहितदासर्वाञ्छोकान्हृदयस्यभवति ॥

मनस्तापरूपफलाभावाद्विद्यमानानामपिकर्मणां फलप्रदानाभिमुख्याभावात् । कर्मणामसंबद्धप्रायत्वात् । शरीरसंबंधाभावेन तद-नुबन्धिमातापित्रादयोनसंतोत्यर्थः । ज्ञातृस्वरूपस्यसुषुप्तस्यात्मनो बाह्याभ्यंतरज्ञानाभावः किंनिबंधनइत्याशंक्याह ॥

यद्वैतन्नपश्यति पश्यन्वैतन्नपश्यति नहिद्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वान्नतुतद्द्वितीयमस्ति-ततोन्यद्विभक्तंयत्पश्येत् ॥

द्वैतंबाह्यमाभ्यंतरं वा स्वातिरिक्तं वस्तुसुषुप्तौ जीवोनपश्यतीतियत् । तत् पश्यन् वैनपश्यति । वैशब्दएवार्थः । पश्यतः दर्शनयोग्यज्ञानवतएवबाह्यांतरादर्शनमित्यर्थः । नन्वपश्यतः कथंपश्यत्त्व-मित्यत्राह। नहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यते अविनाशित्वादिति । ज्ञातुर्धर्मभूतज्ञानस्य नित्यत्वाद्विनाशोनास्तीत्यर्थः । तर्हिसुषुप्तौकथमदर्शनमितितत्राह । नतुतद्द्वितीयमस्तिततोन्यद्विभक्तंयत्पश्येदिति । अयमर्थः । ज्ञानस्वरूपाभावनिबंधनोबाह्यांतरद्वितीयज्ञानाभावोन भवति । अपितु ततोविभक्तस्यप्राज्ञात्मनः पृथक्सिद्धस्यान्यस्य-बाह्यांतररूपद्वितीयवस्तुनोभावादेवानुकूलप्रतिकूलपदार्थादर्शनमि-त्यर्थः । नचपृथक् सिद्धपदार्थाभावस्यजाग्रत्स्वप्नयोरपिसमत्वा-त् । तत्रैवसुषुप्तावप्यविद्यमान पृथक्सिद्धपदार्थानुभवोस्त्वितिशं-क्यम् । तत्रकर्मरूपदोषवशात्पृथक्सिद्धपदार्थोपलंभसंभवात्सुषुप्तौ कर्मदोषस्याकार्यकरत्वेनासंबद्धप्रायत्वस्योपपादितत्वाच्च । नचतह्यौ

पृथक्सिद्धतयाब्रह्मात्मकत्वेनैवविषयाणामुपलंभोस्त्वितिशंक्यम् । एतंब्रह्मलोकंनविंदंत्यनृतेनहिप्रत्यूढा इति छांदोग्योक्तरीत्या अनृत शब्दितकर्मविशेषेणजीवधर्मभूतज्ञानस्यतिरोहिततया ब्रह्मणउपलंभासंभवेन ब्रह्मात्मकतयाप्युपलंभासंभवाद् ब्रह्मात्मकत्वाब्रह्मात्म-कत्वोभयबहिर्भूतपदार्थस्याभावादितिभावः ॥

सलिलएकोद्रष्टाऽद्वैतोभवति एषब्रह्मलोकःसम्राडि-तिहैनमनुशशासयाज्ञवल्क्यः ॥

यथाजलेजलंप्रक्षिप्तमेकंभवत्येवं सलिलवत्स्वच्छस्वभावेपर-मात्मनिलीनोयंद्रष्टाजीवः प्राज्ञात्मपरिष्वंगवशेनैकीभूतःसन्नद्वैतोभव ति।देवादिलक्षणभेदकाकारशून्योभवतीत्येषब्रह्मलोकएषसुषुप्त्याधा-रभूतपरमात्मा ह सम्राडितियाज्ञवल्क्योनुशिष्टवानित्यर्थः । ननुक-थंसुषुप्त्याधारस्यब्रह्मलोकत्वंब्रह्मलोकोहिपरमगतित्वादिनाश्रूयतइ-त्यत्राह ॥

एषास्यपरमागतिः ॥

जीवस्यार्चिरादिगत्याप्राप्यागतिरेषैव ॥

एषास्यपरमासंपत् ॥

तत्त्वज्ञानादिनाप्राप्यापिसंपदेषैव ॥

एषोस्यपरमोलोकः ॥

शाश्वतंभोगस्थानमप्येषएव ॥

एषोस्यपरमआनन्दः ॥

निरतिशयानुकूलोप्यस्यायमेवेत्यर्थः । ननुस्वर्गादिषुभोगेष्वनु-कूलेषुजाग्रत्सुकथमेतस्यपरमानंदत्वमित्यत्राह ॥

एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंति ॥

स्वर्गादिवैषयिकसुखानुभवितारः सर्वेप्येतदानंदसहस्रांशानुभवितारइत्यर्थः। एतस्यपरलोकसंचरणप्रकारमाह॥

तद्यथानस्सुसमाहितमुत्सर्जंद्यायादेवमेवायꣳशारीरआत्माप्राज्ञेनात्मनान्वारूढउत्सर्जन्या(द्या)ति॥

यथाअनइशकटंसुतरांसमाहितंयात्रोपकरणसंभाराक्रांतंसत्पूर्वदेशमुत्सृज्ययाति। एवमेवशकटस्थानीयोजीवःप्राज्ञेनपरमात्मनासारथिस्थानीयेनसंबन्धाविशेषंप्राप्तःशरीरमुत्सृज्ययाति। कदेत्यत्राह॥

यत्रैतदूर्ध्वोच्छ्वासिभवति॥

यदाएतच्छरीरमूर्ध्वोच्छ्वासिभवतीत्यर्थः॥

तद्यथाराजानंप्रयियासंतंउग्राःप्रत्येनसःसूतग्रामण्योभिसमायंत्येवमेवेममात्मानमंतकालेसर्वेप्राणाअभिसमायंतियत्रैतदूर्ध्वोच्छ्वासिभवति॥

यथाजिगमिषुंराजानंतदुपजीविनःसर्वेतदाज्ञामंतरेणाभिमुख्येनायांति। एवमेवममात्मानंभोक्तारमूर्ध्वश्वासकालेसर्वेप्राणाआत्मनःसमीपमायांतीत्यर्थः॥

सएतास्तेजोमात्रास्समभ्याददानोहृदयमेवान्ववक्रामति॥

स आत्मातेजोमय्योमात्रास्तेजोमात्राःप्रकाशकांशाइत्यर्थः। इंद्रियाणीतियावत्। ताएताःसमभ्याददानःसमितिस्वप्नापेक्षयावैषम्यमुच्यते। अस्त्येवस्वप्नेअभ्यादानं नतुसम्यक्। सवासनमभ्यादायेत्यर्थः। हृदयमेवपुंडरीकाकारमन्वाक्रामति अन्वागच्छति॥

तस्यहैतस्यहृदयस्याग्रंप्रद्योतते तेनप्रद्योतेनैषआत्मा निष्क्रामतिचक्षुषोवामूर्ध्नोवाअन्येभ्योवाशरीरदेशेभ्यः।

तस्यहैतस्याम्रियमाणस्यसंबंधि यत् हृदयस्याग्रंनाडीमुखा-

न्निर्गमनद्वारंप्रद्योततेउपसंहृतकरणतेजःप्रज्वलितंसत्प्रदीप्तंभवति ।
तत्प्रकाशितद्वारःसन्नेष आत्मानिष्क्रामतिचक्षुरादिद्वारेभ्यः ॥

तमुत्क्रामन्तंप्राणोनूत्क्रामतिप्राणमनूत्क्रामंतंसर्वेप्राणाअनूत्क्रामन्ति ॥

उत्क्रामंतमध्यक्षंजीवंमुख्यप्राणोनूत्क्रामतितंमुख्यप्राणंजीवं तदधीनाइतरेप्राणाअनूत्क्रामंतीत्यर्थः ॥

सविज्ञानोभवतिसविज्ञानमेवान्ववक्रामति ॥

तस्यांदशायामुत्क्रामन्जीवः यंयंवापिस्मरन्नित्युक्तन्यायेनप्राप्तव्ययोनिविषयकस्मृतिमान्भवतीत्यर्थः । तच्चज्ञानंकर्माधीनंनतुपुरुषयत्नसाध्यम् । यंयोगिनः प्राणवियोगकालेयत्नेनचित्तेविनिवेशयंतीत्युक्तरीत्यायोगिनामेवहि चरमं ज्ञानंयत्नसाध्यम् । एवंसविज्ञानमेवपुरुषंप्राणवर्गोनुगच्छतीत्यर्थः ॥

तंविद्याकर्मणीसमन्वारभेतेपूर्वप्रज्ञाच ॥

तंतादृशंचपुरुषंसंसरंतंविद्याकर्मपूर्ववासनाचानुवर्त्तेते । नहिपूर्ववासनांविनाकश्चित्कर्त्तुंभोक्तुंवाप्रभवति । नह्यनभ्यस्तेविषयेकौशलमिन्द्रियाणांभवति । पूर्वानुभववासनयाप्रवृत्तानामिन्द्रियाणामिहजन्मन्यभ्यासमंतरेणैवकासुचित्क्रियासुचित्रकर्मादिलक्षणासुकौशलंदृश्यते । केषांचिच्चात्यंतसौकर्ययुक्तास्वपिक्रियास्वकौशलंदृश्यते । तदेतत्सर्वपूर्ववासनोद्भवानुभवनिमित्तकम् । तस्माद्विद्याकर्मपूर्ववासनालक्षणमेतत्त्रितयंशाकटिकसंभारस्थानीयंपरलोकपाथेयमित्यर्थः ॥

तद्यथातृणजलूकातृणस्यांतंगत्वान्यमाक्रममाक्रम्यात्मानमुपसꣳहरत्येवमेवायमात्मेदꣳशरीरंनिहत्या

विद्यांगमयित्वान्यमाक्रममाक्रम्यात्मानमुपसꣳहरति

यथातृणजलूकातृणस्याग्रभागंगत्वान्यंतृणांतरलक्षणम् । आक्रम्यतेइत्याक्रमः आश्रयइतियावत् । तमाश्रित्यात्मनोऽपरावयवमुपसंहरति । एवमेवायं संसरन्जीवः प्राक्तनंशरीरंनिहत्य । तस्यैवविवरणम्।अविद्यांगमयित्वानिःसंबोधतामापाद्य । अन्यंशरीरलक्षणमाक्रममाक्रम्यस्वात्मानंपूर्वस्माच्छरीरादुपसंहरति । ननुदेहांतरारंभेप्रागुपात्तमेवोपादानंस्वीकृत्यतदेवोपमृद्यस्वर्णकारवद्देहांतरंकरोति । आहोस्विदपूर्वमेवोपादानद्रव्यंस्वीकरोतितित्राह ॥

तद्यथापेशस्कारीपेशसोमात्रामुपादायान्यन्नवतरंकल्याणतरꣳरूपंकुरुते एवमेवायमात्मेदꣳशरीरंनिहत्याविद्यांगमयित्वान्यन्नवतरकल्याणतरंरूपंकुरुते-पित्र्यंवागांधर्ववादैवंवाप्राजापत्यंवाब्राह्मंवान्येषांवाभूतानाम् ॥

पेशः सुवर्णंतत्करोतीतिपेशस्कारीसुवर्णकारः पेशसः सुवर्णस्यमात्रामेकदेशमुपादाययथान्यत्कल्याणतरंरूपंकुरुते । यद्वा पेशस्कारीकोशकारकृमिः सयथापेशसः पट्टतंतोः मात्रामंशमुपादायनवतरंकल्याणतरंजालंकुरुते।एवमेवायमात्माइदंशरीरंनिहत्यान्यद्रूपंकुरुते पित्र्यंवागांधर्ववा। पित्र्यंपितृभ्योहितंपितृलोकोपभोगोपयोग्यमित्यर्थः। तथागांधर्वं दैवंप्राजापत्यंब्राह्मम् । गंधर्वादिलोकोपभोगयोग्यमित्यर्थः । अन्येषांवाभूतानांसंबंधिशरीरंकरोतीत्यर्थः । कर्तृत्वंचास्यकर्मद्वारकंद्रष्टव्यम् ॥

प्राप्यांतंकर्म्मणस्तस्य यत्किंचेहकरोत्ययम् । तस्माल्लोकात्पुनरेत्यस्मैलोकायकर्मणइतितुकामयमानः ॥

इहलोके फलमुद्दिश्ययत्किंचित्कर्मकरोतितस्यकर्मणोंतंभोगेनावसानंप्राप्यकृत्स्नफलंभुक्त्वेतियावत् । तस्माल्लोकादस्मैलोकाय पुनरेति। किमर्थमित्यत्राह । कर्मणइति। कर्मकर्तुमित्यर्थः । इतितुकामयमानः । एवंकामयमानः संसरतीत्यर्थः । एवमविद्वद्विषयं संसारंसप्रपंचमुपवर्ण्यविदुषस्तद्वैलक्षण्यंदर्शयति ॥

अथाकामयमानः योकामोनिष्काम आप्तकाम आत्मकामः नतस्यप्राणाउत्क्रामंतिब्रह्मैवसन्ब्रह्माप्येति ॥

अथशब्दअर्थान्तरपरिग्रहे । अकामयमानः वीतरागअत्रउच्यतइतिशेषः। यः अकामः कामशून्यः । कथंकामशून्यतेत्यत्राह । निष्कामइति । निर्गताः कामाः यस्मात्स तथोक्तः । पूर्वस्थितानांकामानांनिर्गतत्वादकामत्वमुपपद्यतइतिभावः। उत्तरकामानांसत्त्वेनिवृत्तपूर्वकामस्यापि कथमकामत्वमित्यत्राह । आप्तकामइति ॥ आप्तः कामोयेनसः तथोक्तः । कथमाप्तकामत्वमित्यत्राह । आत्मकामइति । आत्मैवकामोयस्यसःतथोक्तः। आत्मव्यतिरिक्तस्यकाम्यस्यवस्तुनः अभावात् आत्मरूपकाम्यस्यनित्यसिद्धत्वादाप्तकामत्वम् । अतएवाकामत्वंचेत्यर्थः । एतादृशस्तुब्रह्मैवसन्ब्रह्माप्येतीतियोजना। ब्रह्मैवसन् आविर्भूतगुणाष्टकरूपब्राह्मस्वरूपः सन् परब्रह्मणिलीनोभवति । अपिपूर्वस्यएतेर्लयार्थकत्वात् । लयोनामतद्विविक्ततयादर्शनाभावः । अपहतपाप्मत्वादिब्राह्मरूपसाधर्म्येणपरब्रह्मविविक्ततयादर्शनायोग्योभवतीत्यर्थः। नन्वेतन्नसंभवति । ब्राह्मरूपाविर्भावोहिपरब्रह्मोपासीनस्यैवभवति । परंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यतइतिश्रवणात् । देशविशेषविशिष्टब्रह्मप्राप्तिश्चदेशविशेषेऽर्चिरादिमार्गगतिमंतरेणनसंभवति । तद्गतिश्चभूतसूक्ष्मयुक्तप्राणादियुक्तस्यैवभवति । तद्योगश्चकर्माधीनः। विधूतकर्मणश्चोत्क्रांतप्राणतया

देहेंद्रियप्राणयोगासंभवेनदेशविशेषविशिष्टब्रह्मप्राप्त्यसंभवात् । ब्राह्मरूपाविर्भावाभावेनब्रह्मैवसन्ब्रह्माप्येतीतिनोपपद्यतइत्याशंक्याह ॥

नतस्यप्राणाउत्क्रामंति ॥

तस्मादकामत्वाद्युक्तगुणाज्जीवात्प्राणानोत्क्रामंतीत्यर्थः । नटस्यशृणोतीतिवदपादानलक्षणसंबन्धेषष्ठी । अतएवसमानप्रकरणेमाध्यंदिनशाखायांनतस्मात्प्राणाउत्क्रामन्तीतिस्पष्टंपंचमीश्रूयते ॥

तदेषश्लोकोभवति ॥

तत्तत्रब्रह्मविदिविषयेएषश्लोकः प्रवृत्तोभवतीत्यर्थः ॥

यदासर्वेप्रमुच्यंतेकामायेस्यहृदिश्रिताः । अथ मर्त्योमृतोभवत्यत्रब्रह्मसमश्नुत इति ॥

कामाद्दुर्विषयगोचरमनोरथाः हृद्गतायदाशांताभवंति तदनंतरमेवोपासकोमर्त्योऽमृतोभवति । विनष्टाश्लिष्टपूर्वोत्तराघोभवति । अत्र ब्रह्मसमश्नुते । अत्रैवोपासनवेलायांब्रह्मानुभवतीत्यर्थः ॥

आत्मानंचेद्विजानीयादयमस्मीतिपुरुषः । किमिच्छन्कस्यकामायशरीरमनुसंज्वरेत् ॥

यद्ययंपुरुषःस्वात्मानमेतादृशोहमस्मिदेहेंद्रियमनःप्राणधीविलक्षणःब्रह्मात्मकोहमस्मीतिविजानीयात्तदादेहेंद्रियोपभोग्येषुलोकादिषुस्पृहाया अभावात्स्वबंधुभूतभार्यापुत्रादेरप्यभावाच्चस्वस्यकिंवाफलमिच्छन्वास्वानुबंधिनः कस्याभीष्टायवाशरीरमनुसंज्वरेत् शरीरानुबंधिफलमनुसृत्यकुतस्तप्येतेत्यर्थः । अतोसौकृतकृत्यएवेत्यर्थः । पुनरपिस्तौति ॥

यस्यानुवित्तःप्रतिबुद्धआत्माअस्मिन्सदेहेगहनेप्रविष्टः । सविश्वकृत्सहिसर्वस्यकर्तातस्यलोकस्सउलोकएव ॥

गहनेविषयेअनर्थसंकटेअस्मिन्देहेसंप्रविष्टोमननाभ्यासेनावगतः-प्रतिबुद्धःध्यातश्चेत्यर्थः। सविश्वकृत्सएवलोककर्ताईश्वरवद्वंद्यइतियावत्। तत्रहेतुमाह। सहिसर्वस्यकर्तातस्यलोकःसउलोकएव। लोकआश्रयभूतःसर्वस्यकर्तायईश्वरस्तस्यापिसब्रह्मविल्लोकएव आधारएव। ज्ञानीत्वात्मैवमेमतमितिभगवतैवगोतत्वाद्भगवतोज्ञानिनंविनाआत्मसत्तायाअभावादितिभावः। उशब्दःप्रसिद्धौ॥

इहैवसंतोथविद्मस्तद्वयंनचेदवेदिर्महतीविनष्टिः॥

इहैववर्तमानावयंतद्ब्रह्मविद्मःजानीमः।नचेज्जानीमस्तर्ह्यवेदिः।वेदनंवेदिः। इन्सर्वधातुभ्यइतिइन्प्रत्ययः। नःस्वरार्थः। अवेदिरज्ञानम्। तदेवमहतीविनष्टिःमहाहानिरित्यर्थः। ज्ञानाज्ञानयोरेवमहालाभहानित्वंदर्शयति॥

यएतद्विदुरमृतास्तेभवंत्यथेतरेदुःखमेवापियंति॥

स्पष्टोर्थः। तज्ज्ञानस्यमहाफलत्वमेवाह॥

यदैतमनुपश्यत्यात्मानंदेवमंजसा।ईशानंभूतभव्यस्यनततोविजुगुप्सते॥

यदाभूतभव्येशितारंद्योतमानंसर्वभूतात्मानंपश्यतितदासर्वस्याप्येकात्मकत्वज्ञानात् सर्ववस्तुषुनिन्दानप्रवर्ततइत्यर्थः॥

यस्मादर्वाक्संवत्सरोअहोभिःपरिवर्तते॥

यस्माद्भूतभव्येशानात्परमात्मनः अर्वाक्तदन्यविषयएवेतियावत्।कालात्मासंवत्सरःस्वावयवैरहोभिःपरिवर्ततेपरिच्छेदकत्वेनवर्तते। य आत्मासंवत्सरमासादिलक्षणकालपरिच्छेदातीतइत्यर्थः॥

तंदेवाज्योतिषांज्योतिरायुर्होपासतेऽमृतम्॥

ज्योतिषांज्योतिः प्रकाशकानांप्रकाशकम्। अमृतंकालापरिच्छिन्नम्। आयुः सर्वप्राणिप्राणनहेतुभूतम्। तंहदेवाउपासते। देवोपास्य-

त्वंतुतस्यैवेत्यर्थः । उक्तंचव्यासार्यैः । "ज्योतिषि भावाच्च । १ । ३ । ३२ ॥" इतिसूत्रेदेवाएवज्योतिरुपासते देवाज्योतिरेवोपासतइतिवा- वाक्यभंगीस्यात् । तत्रनप्रथमः कल्पोयुज्यते । मनुष्याणामनधि- कारप्रसंगात् । तस्माज्ज्योतिरेवोपास्यमित्यर्थः ॥

## यस्मिन्पंचपंचजनाआकाशश्चप्रतिष्ठितः ।

पंचजनसंज्ञाःपंचआकाशश्चयत्रप्रतिष्ठितइत्यर्थः । अत्राकाशश- ब्दोभूतांतरस्याप्युपलक्षकः । पूर्वस्मिन्मंत्रेज्योतिषांज्योतिरितिषष्ठ्यंतं तज्योतिःशब्दस्यार्थनिर्णायकसापेक्षत्वात् । पंचजनशब्दस्याप्यर्थ- निर्णायकांतरसापेक्षत्वात्पंचत्वसंख्यान्वययोग्यानिज्योतींषीन्द्रिया- ण्येवेत्यवसीयंते । उक्तं च व्यासार्यैः । श्रुत्यैवपंचसंख्ययाविशेषि- तत्वात् । पंचसंख्यज्योतिरंतरप्रसिद्ध्यभावाच्चपरिशेषेणेंद्रियत्वाव गमइति ॥

## तमेवमन्यआत्मानं विद्वान्ब्रह्मामृतोऽमृतम् ॥

तादृशमात्मानममृतं ब्रह्मेत्येवं विद्वानन्योप्यमृतोभवतीत्यर्थः । पंचजनशब्दनिर्दिष्टानि ज्योतींषिकानीत्यपेक्षायामाह ॥

## प्राणस्यप्राणमुतचक्षुषश्चक्षुः उतश्रोत्रस्यश्रोत्रम् । मनसोयेमनोविदुस्तेनिश्चिक्युः ब्रह्मपुराणमग्र्यम् ॥

प्राणशब्देनस्पर्शनेन्द्रियंगृह्यते । वाय्वाप्यायितत्वात् स्पर्शनें- न्द्रियस्य । मुख्यप्राणस्यज्योतिःशब्देनप्रदर्शनायोगात् । चक्षुष इतिचक्षुरिन्द्रियं गृह्यते । श्रोत्रस्येतिश्रोत्रेंद्रियम् । मनसइतिमनो- गृह्यते । समानप्रकरणेमाध्यंदिनशाखायां अन्नस्यान्नमितिपाठा- दनुक्तमन्यतोग्राह्यमितिन्यायेनतदपिगृह्यते । सूत्रितंच । "ज्योति षैकेषामसत्यन्ने । १ । ४ । १३ ॥" इति । अन्नशब्देनचा- न्नसंबंधिनोर्घ्राणरसनयोर्ग्रहणम् । अन्नेनप्राणस्याप्यायितत्वलक्षणः

संबन्धः । रसनस्यान्नभक्षकतयासंबंधइतिद्वयोरपिग्रहणम् । एतत्सर्वं भाष्यश्रुतप्रकाशिकयोःस्पष्टम् । एतादृशंयेजानंतितेपुराणमग्र्यंपरं ब्रह्मनिश्चिक्युः । निश्चितवंतइत्यर्थः । तज्ज्ञानेसाधनमाह ॥

मनसैवानुद्रष्टव्यम् ॥

अनु पश्चात् श्रवणमननानंतरंशुद्धेन मनसैवदर्शनसमानाकार स्मृतिसंततिरूपंध्यानंसंपाद्यमित्यर्थः । एकस्यात्मनः पंचजनाकाशाद्याधारत्वंनसंभवतीतिमन्यमानंप्रत्याह ॥

नेहनानास्तिकिंचन ॥

इहद्रष्टव्येब्रह्मणि । नानाशब्दोभावप्रधानः । नानात्वमित्यर्थः । इहयस्मिन्पंचपंचजनाइतिपूर्वमंत्रनिर्दिष्टे आत्मनि किंचिदपिनानात्वंनास्ति भेदलेशोपिनास्तीत्यर्थः ॥

मृत्योः समृत्युमाप्नोतियइहनानेवपश्यति ॥

इवशब्दोऽल्पार्थः । इहात्मनिनिखिलप्रपंचाधारत्वासंभवबुद्धयाऽल्पमपिनानात्वंयः पश्यतिससंसारात्संसारमाप्नोति । अत्यंतं संसारमाप्नोतीत्यर्थः ॥

एकधैवानुद्रष्टव्यम् एतदप्रमेयंध्रुवम् ॥

अप्रमेयमपरिच्छेद्यं सर्वभूतात्मभूतं ब्रह्मएकत्वेनैवद्रष्टव्यमित्यर्थः । व्यासार्यैस्तु । एकधैवानुद्रष्टव्यम् । केषांचित्स्वनिष्ठत्वं ब्रह्मान्यपरतंत्रत्वंवानमंतव्यम् । अपितुपरमात्मपरतंत्रतयैकरूपमेवद्रष्टव्यमित्यर्थइत्युक्तम् । नेहनानास्तिकिंचनेत्यत्रापि अब्रह्मात्मकनानात्वंनिषिद्धयतइत्यप्युक्तम् । तदप्यविरुद्धमेव । एकार्थपर्यवसायित्वाद्वयोरपीतिद्रष्टव्यम् ॥

विरजःपरआकाशादजआत्मामहान्ध्रुवः । तमेव धीरोविज्ञायप्रज्ञांकुर्वीतब्राह्मणः ॥

विरजः रागादिदोषरहितः। आकाशादपिपरः कारणभूतः। ध्रुवः स्थिरः। अनाशीत्यर्थः। अजः उत्पत्तिरहितः। एवंभूतोमहानात्मा। तादृशमात्मानंधीरः प्रज्ञाशाली विज्ञाय श्रवणमननाभ्यांज्ञात्वा प्रज्ञां निदिध्यासनंकुर्वीतेत्यर्थः। अत्रब्राह्मणग्रहणंद्विजातेरुपलक्षणम्। यद्वा ब्रह्माधीतइतिब्राह्मणः। अधीतवेदइत्यर्थः॥

## नानुध्यायाद्बहूञ्छब्दान्वाचोविग्लापनंहितदिति।

बहूञ्छब्दान्ब्रह्मगुणानुवर्णनरहितान्नानुध्यायात् नचिंतयेदित्यर्थः। तत्रप्रयोजनंब्रह्मविदोनास्तीत्यत्रहेतुमाह। तदिति।तत् अब्रह्मगुणवर्णनशब्दानुध्यानादिकंवाचोविग्लापनंग्लानिसाधनंश्रमजनकमित्यर्थः। इतिमंत्रसमाप्तौ॥

## सवाएषमहानज आत्मायोयंविज्ञानमयः प्राणेषुयएषोंतर्हृदयआकाशस्तस्मिञ्छेते॥

प्राङ्निर्दिष्टः अजआत्मामहान्ध्रुवइतियोयंनिर्दिष्टआत्मायोयंविज्ञानमयः प्राणेषुहृद्यन्तर्ज्योतिरितिनिर्दिष्टेजीवात्मनिशेते तदंतरात्मतयावर्ततइत्यर्थः। अतएवोत्तरत्रात्मन्येवात्मानंपश्यतीतिवक्ष्यति। अत्रहृद्यंतरित्यस्यव्याख्या।नंयएषोंतर्हृदयइति। ज्योतिरित्यस्यव्याख्यानमाकाशइति। ज्योतिराकाशशब्दयोः प्रकाशकत्वार्थकत्वात्। अतश्चात्राकाशशब्दोजीवपरएव॥ ननु “कामादीतरत्रतत्रचायतनादिभ्यः। ३। ३। ३८॥” इत्यधिकरणेवाजसनेयकेतु आकाशेशयानस्यवशित्वादिश्रवणात् परमात्मत्वेसतितदाधाराभिधायिनआकाशशब्दस्यतस्यांतेसुषिरँसूक्ष्ममितिहृदयांतर्गतस्यसुषिरशब्दवाच्याकाशस्याभिधायकत्वमवगम्यतइतिभाष्ये श्रुतप्रकाशिकायाञ्चाकाशशब्दस्यभूताकाशपरत्वं समर्थितमिवप्रतीयते। अतस्तद्विरुद्धमिदमितिचेत् मैवम्॥दहरोस्मिन्नंतराकाशइतिच्छांदो-

ग्यगताकाशशब्दस्यैवपरमात्मपरत्वंनास्तीत्यत्रतात्पर्यात् ॥ केचि-त्तुभाष्यानुरोधादंतर्हृदयेयोभूताकाशस्तत्रविज्ञानमयः महानात्मा-शेतइत्येवार्थः । अस्मिन्प्रकरणेप्राज्ञेनात्मना संपरिष्वक्तः प्राज्ञेना-त्मनान्वारूढइतिसुषुप्त्युत्क्रांत्योर्जीवपरमात्मभेदप्रतिपादनेनविज्ञा-नमयशब्दनिर्दिष्टस्यमहतश्चपरमात्मनः अभेदासंभवात् । विज्ञान-मयशब्देनतच्छरीरकः परमात्मैवाभिधीयते । महद्भूतमनंतमपारंवि-ज्ञानघनएवैभ्योभूतेभ्यः समुत्थायतान्येवानुविनश्यतीतिमैत्रेयीब्रा-ह्मणोक्तरीत्याविज्ञानमयशब्दस्य " अवस्थितेरितिकाशकृत्स्नः ।१।४।२२॥" इतिसूत्रोक्तन्यायेनांतर्यामिपरत्वमित्याहुः ॥ केचित्तु-योयंविज्ञानमयइत्यत्रकतम आत्मायोयंविज्ञानमयइतिपूर्वनिर्दिष्टजी-वस्यप्रत्यभिज्ञावशेनग्रहणंनसंभवति । तस्यमहानजइतिमहत्त्वाद्य-संभवात्।अपितुविज्ञानमयइतिसाक्षादेवपरमात्मनोनिर्देशइत्याहुः ॥

तमेवमुमुक्षूपास्यंविशिनष्टि ॥

## सर्वस्यवशीसर्वस्येशानः सर्वस्याधिपतिः ॥

सर्वस्यब्रह्मरुद्रादेर्वशीसर्वोयस्यवशेवर्तते । उक्तंच एतस्यवाअ-क्षरस्यप्रशासनइति । अतश्चप्रशासनेनधारकत्वलक्षणमात्मत्वमुक्तं भवति । सर्वस्येशानइत्यनेननियंतृत्वलक्षणमात्मत्वम् । सर्वस्याधि-पतिरितिशेषित्वलक्षणमात्मत्वमुक्तमितिद्रष्टव्यम् । इदंचच्छांदोग्य दहरविद्यावाक्यप्रतिपन्नसत्यकामत्वादीनामप्युपलक्षणम् । उक्तंच भाष्ये वशित्वादयश्चवाजसनेयकेश्रुताः छांदोग्यश्रुतस्यगुणाष्टका-न्यतमभूतस्य सत्यसंकल्पत्वस्यविशेषाएवेति सत्यसंकल्पत्व सहचारिणांसत्यकामत्वादीनामपहतपाप्मत्वपर्यंतानांसद्भावमवगम यंतीति ॥

## सनसाधुनाकर्मणाभूयान्नोएवासाधुनाकनीयान् ॥

साध्वसाधुकर्मकृतोत्कर्षापकर्षशून्यइत्यर्थः ॥

एषसर्वेश्वरएषभूताधिपतिरेषभूतपालएषसेतुर्विधरणएषांलोकानामसंभेदाय ॥

सर्वेश्वरः नियंता, अधिपतिः शेषी, भूतपालः रक्षकः, एषांसर्वेषांलोकानामसांकर्यायधारकः सेतुरप्ययमेव । अनेनहीश्वरेणसेतुनाअविधृताहिलोकाः निर्मर्यादाभवेयुरितिभावः । अत्रप्रकरणोपक्रमेआत्मैवेदमग्रआसीत्पुरुषविधइतिदेवताविशेषस्यनारायणस्यैवप्रस्तुतत्वात्तस्यैवसर्वेश्वरत्वादिकथनाद्देवतांतराणांनात्रावकाशइतिद्रष्टव्यम् ॥

तमेतंवेदानुवचनेनब्राह्मणाविविदिषंतियज्ञेनदानेनतपसानाशकेन ॥

ईदृशंपरमात्मानंवेदाध्ययनेन यज्ञेन दानेन अनशनलक्षणेनतपसाचज्ञातुमिच्छंति।आशः अशनंभावेघञ्। अनाशः अनशनं।स्वार्थेकः।तच्चानशनंकामानशनात्मकंनतुसर्वात्मनानशनंदेहपातप्रसंगात् । यद्वानाविद्यतेआशायस्यतदनाशम्।स्वार्थेकप्रत्ययः फलाभिसंधिविरहितेनेतियावत् । अश्वेनजिगमिषत्यसिनाजिघांसतीत्यादावश्वादेः सन्प्रत्ययप्रकृत्यर्थभूतगमनादिसाधनत्वप्रतिपादनदर्शनात्। इहापिवेदनसाधनत्वमेवप्रतिपाद्यते।नतुविविदिषासाधनत्वम् । यद्यपिप्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यप्राधान्यमित्युत्सर्गः।तथाप्यश्वेनजिगमिषतीत्यादौसन्नंतप्रयोगस्थानेप्रकृत्यर्थप्राधान्यस्यैवव्युत्पत्तिसिद्धत्वादत्रापिप्रकृत्यर्थीभूतवेदनसाधनत्वमेववेदानुवचनादीनांतृतीययाप्रतिपाद्यतइतिद्रष्टव्यम् ॥

एतमेवविदित्वामुनिर्भवति ॥

एतमेवात्मानंविदित्वामुनिर्मननशीलःयोगीभवति।नान्यमित्यर्थः॥

एतमेवप्रव्राजिनोलोकमिच्छंतः प्रव्रजंति ॥

लोक्यतइतिलोकः । एतमेवलोकंपरमात्मानमिच्छंतः संन्यासिनस्संन्यस्यंतीत्यर्थः । एतमेवेत्यवधारणाल्लोकांतरेप्सूनांपारिव्राज्येनाधिकारइतिगम्यते । नहिगंगाद्वारंप्रातिपित्सुः काशीवासीपूर्वाभिमुखोयाति ॥

एतद्धस्मवैतत्पूर्वेविद्वांसःप्रजांनकामयंतेकिंप्रजया करिष्यामोयेषांनोयमात्मा ॥

हस्मवैप्रसिद्धौ । एतादृशब्रह्मविदःपूर्वेप्रजांनकामयंतेकिंप्रजयाकरिष्यामः । प्रजासाध्योयंलोकोप्यस्माकंपरमात्मैव । एतल्लोकसाध्यस्यसुखानुभवस्यपरमात्मानुभवांबुधिलवकणिकायमानत्वात् । तादृशेपरमात्मनिलब्धेएतल्लोकरूपक्षुद्रफलसाधनभूतयाप्रजयाकिंकरिष्यामइतिपूर्वे नाकामयंतेत्यर्थः ॥

तेहस्मपुत्रैषणायाश्चवित्तैषणायाश्चलोकैषणायाश्चव्युत्थायाथभिक्षांचरंतियाह्येवपुत्रैषणासावित्तैषणायावित्तैषणासालोकैषणाउभेह्येतेएषणेएवभवतः ॥

इदंचकहोलब्राह्मणेव्याख्यातम् । सएषनेतिनेतीत्यात्मा अगृह्योनहिगृह्यतेअशीर्योंहिनशीर्यतेअसंगोनहिसज्जते असितोनव्यथतेनरिष्यति ॥

एतदपिप्राग्व्याकृतम् ॥

एतमुहैवैतेनतरतइत्यतःपापमकरवम् । इत्यतः कल्याणमकरवमिति ॥

अतोदेहयात्रादिलक्षणाद्धेतोः पापमकार्षंपुण्यमकार्षमितिद्वेचिंते एतंब्रह्मविदंनतरतः नप्राप्नुतइत्यर्थः । तत्रहेतुमाह ॥

इहैवएतेतरतिनैनंकृताकृतेतपतः ॥

यस्माद्धेतोः अस्मिन्नेवलोकेवसन्पुण्यपापेचतीर्णवान् । तत्रहेतुः

नैनंकृताकृतेतपतः । एनंहिब्रह्मविदंकृताकृतेसुकृतदुष्कृतेफलसंबं-
धिनंकर्तुंनप्रभवतः । एवंविदिपापंकर्मनश्लिष्यतइत्यश्लेषश्रवणादि-
तिभावः ॥

तदेतदृचाभ्युक्तम् ॥

तदेतत्पुण्यपापसंतरणमभिमुखीकृत्यऋचोक्तमित्यर्थः । तामेव-
चैपठति ॥

**एषनित्योमहिमाब्राह्मणस्यनवर्धते कर्मणानोक-नीयान् । तस्यैवस्यात् पदवित्तंविदित्वानलिप्यतेकर्म-णापापकेनेति ॥**

ब्रह्मविदः एषमहिमासनित्यः । ब्रह्मज्ञानानंतरंयावदात्मभावित-
यानुवर्ततइत्यर्थः । कोसौमहिमेत्यत्राह॥नवर्द्धतेकर्मणानोकनीयान् ।
तस्यैवस्यात्पदविदिति । तस्यब्रह्मणः पदवित् । पद्यतइतिपदंस्वरू-
पम् । ब्रह्मस्वरूपविदितियावत् । सः पुण्यपापकृतलक्षणकर्म्मकृतो-
त्कर्षापकर्षशून्योभवति । एषमहिमाब्रह्मविदइत्यर्थः । महिमज्ञा-
नस्यफलमाह ॥

तंविदित्वानलिप्यतेकर्मणापापकेन ॥

तंब्रह्मविन्महिमानं विदित्वापापकेन कर्मणानलिप्यतेइत्यर्थः ॥

**तस्मादेवंविच्छांतोदांतउपरतस्तितिक्षुःसमाहितो-भूत्वाआत्मन्येवात्मानंपश्यति ॥**

सर्वात्मानं पश्यति यएवंवित् शास्त्रजन्यज्ञानवान् । शमः अंत-
रिंद्रियनियमनरूपः । दमः बहिरिंद्रियनियमनरूपः । उपरतिः निषि-
द्धकाम्यादिषुकर्मसूपरतिः। तितिक्षाक्षमा । समाहितःसमाहितचित्त-
इत्यर्थः । एवंरूपःसन्नात्मनिजीवात्मनिपरमात्मानंतदंतर्यामिणंपश्ये-

दित्यर्थः । भाष्यादिषुकोशेष्वात्मन्येवात्मानंपश्येदितिपाठोदृश्यते । अतः पाठद्वैविध्यमत्रद्रष्टव्यम् ॥ किंच—

सर्वमात्मानंपश्यति ॥

आत्मानंपरमात्मानंसर्वशरीरकंचपश्येदित्यर्थः ॥

---

चमसवदविशेषात् । १ । ४ । ८ ॥

अथमंत्रिकोपनिषत् "विकारजननीमज्ञामष्टरूपामजांध्रुवाम् । ध्यायतेऽध्यासितातेनतन्यतेप्रेर्यतेपुनः ॥ सूयतेपुरुषार्थंचतेनैवाधिष्ठिताजगत् । गौरनाद्यंतवती साजनित्रीभूतभाविनी ॥ सितासिताचरक्ताचसर्वकामदुघाविभोः । पिबंत्येनामविषमामविज्ञाताः कुमारकाः॥ सर्वसाधारणींदोग्ध्रींपीड्यमानांतुयज्वभिः । एकस्तुपिबतेदेवःस्वच्छंदोत्रवशानुगाम् ॥ ध्यानक्रियाभ्यां सततंभुङ्क्तेसौप्रसभंविभुः । चतुर्विंशतिसंख्याकमव्यक्तंव्यक्तमुच्यते ॥ " इति ॥

विकारजननीमित्यादि । अष्टरूपत्वं भूमिरापोनलइत्युक्तप्रकारेण । अजामुत्पत्तिरहिताम् । ध्यायते परमात्मनासंकल्परूपज्ञानेनज्ञायते । अध्यासिताम् अधिष्ठिताम् । तन्यतेविस्तार्यते । स्थूलावस्थंक्रियते । समष्टिभूतरूपेणक्रियते । प्रेर्यते व्यष्टिसृष्ट्यर्थंप्रेर्यते । पुरुषार्थं पुरुषाणामर्थनीयम् । भोग्यभोगोपकरणभोगस्थानरूपम् । जगत्सूयते । जनित्रीभूतभाविनीति समष्टिव्यष्टिरुच्यते । सितासिताचरक्ताच गौणवृत्त्यासत्त्वरजस्तमोमयी । तेजोबन्नद्वारा सिताऽसितारक्ताच । विभोरीश्वरस्य सर्वकामदुघा लीलारस

दोग्ध्री। अविषमां भोक्तृकर्मानुगुणपरिणामित्वादपक्षपातिनीम्। अविज्ञाताःदेहादिभ्योविविच्यस्वात्मभिरज्ञाताः। कर्मवश्यबहुभोक्तृव्यावृत्त्यर्थमेकः स्वच्छंदइत्युक्तम्। ध्यानक्रियाभ्यां संकल्पसर्गादिव्यापाराभ्याम्। पीड्यमानान्तुयज्वभिः वत्साहिमातरंक्षीरक्षरणार्थं पीडयंतोभुंजते तद्वत्कर्मवश्यैरात्मभिः भोग्यफलानुरूपंपरिणाम्यमानामित्यर्थ इति व्यासार्यैरेतेमंत्रोपनिषन्मंत्राव्याकृताः। श्वेताश्वतरेआरंभे॥

किंकारणं ब्रह्मकुतस्मजाताजीवामकेनक्कचसंप्रतिष्ठाः। अधिष्ठिताः केनसुखेतरेषुवर्तामहेब्रह्मविदो व्यवस्थाम्॥

हेब्रह्मविदो जगतः कारणंब्रह्मकिंदेवतारूपम्। कस्माच्चब्रह्मणोऽस्माकंजन्मास्थितिश्च। कुत्रवास्माकंसंप्रतिष्ठाशब्दितोलयश्च। केन वाब्रह्मणा अधिष्ठिताः संतोवयंकष्टरूपजन्मसुव्यवस्थामनुसृत्यवर्त्तामहे इत्येवंब्रह्मविदांसंशयःप्रदर्शितः॥

तेध्यानयोगानुगताअपश्यन् देवात्मशक्तिंस्वगुणैर्निगूढाम्॥

एवंध्यानयुक्तामुनयो "अपहतपाप्मा दिव्योदेवएकोनारायणः" इति श्रुतिप्रसिद्धदेवशब्दितनारायणात्मिकांकार्योपयोग्यपृथक्सिद्धविशेषणतयाशक्तिशब्दितांसत्त्वरजस्तमोलक्षणस्वगुणोपेतांब्रह्मणोजगत्कारणत्वनिर्वाहिकांप्रकृतिंदृष्टवंतइत्यर्थः॥

सर्वाजीवेसर्वसंस्थेबृहंतेतस्मिन्हंसोभ्राम्यतेब्रह्मचक्रे॥

सर्वजीवनहेतुभूते सर्वलयाधारे तस्मिन्निरतिशयबृहति ब्रह्मचक्रे हंतिगच्छतीतिसंसारकांतारपर्यटनशीलतया हंसशब्दवाच्योजीवोयं भ्रमतीत्यर्थः॥

---

१ इदं वाक्यंच सुबालोपनिषद्गतम्॥

पृथगात्मानं प्रेरितारंचमत्वा जुष्टस्ततस्तेनामृत त्वमेति ॥

भ्रामयितृत्वेनपरमात्मानं तेनभ्राम्यमाणं तच्छरीरभूतंच स्वात्मानंमत्वातद्ध्यानप्रीतेनपरमात्मनाजुष्टः प्रीत्याविषयीकृतः सन्मुक्तिं प्राप्नोतीत्यर्थः ॥

संयुक्तमेतत्क्षरमक्षरंचव्यक्ताव्यक्तंभरतेविश्वमीशः।अनीशश्चात्मावध्यतेभोक्तृभावाज्ज्ञात्वादेवंमुच्यते सर्वपाशैः ॥

ईशःपरमात्माव्यक्तरूपंक्षरमचिद्वर्गमव्यक्तमक्षरंचिद्वर्गंचपरस्पर संयुक्तंबिभर्तिनतुबध्यते । अनीशोजीवस्तुबध्यते ॥ नन्वविशिष्टेप्रकृतिसंबन्धेकुतएतद्वैलक्षण्यमित्यत्राह ॥ भोक्तृभावादिति॥भोक्तृत्वाभिसन्धिलक्षणभावसत्त्वात् । परमात्मनस्तु "नमांकर्माणिलिंपंतिनमेकर्मफलेस्पृहा" इतिकर्मफलस्पृहाऽभावेनकर्मफललेपाभावादित्यर्थः । त्रयाणांपरस्परवैलक्षण्यमेवाह ॥

ज्ञाज्ञौद्वावजावीशनीशावजाह्येकाभोक्तृभोगार्थयुक्ता ॥

ईशानीशौ । ह्रस्वःछांदसः । भोक्तुर्जीवस्यभोगप्रयोजनसाधिकेत्यर्थः । ननुपरमात्मनोपिजीववत्फलाभिसंधिपूर्वककर्तृत्वं कुतोनभवतीत्याशंक्याह ॥

अनंतश्चात्माविश्वरूपोह्यकर्ता ॥

विश्वशरीरकस्यपरमात्मनो " नांतंगुणानांगच्छंतितेनानंतोयमुच्यते " इत्युक्तरीत्यासत्यकामत्वाद्यनंतगुणाश्रयतयाकाम्यमानवस्त्वंतराभावेनफलाभिसन्ध्यभावेनफलाभिसन्धिपूर्वककर्तृत्वंनास्तीत्यर्थः । एतादृशवैलक्षण्यज्ञानस्यफलमाह ॥

त्रयंयदाविंदतेब्रह्ममेतत् ॥

एतत्त्रयंपरस्परवैलक्षण्येनदर्शनसमानाकारध्यानेनविषयीकरोति-तदाब्रह्मभवतिमुक्तोभवतीत्यर्थः। ब्रह्ममितिछांदसंरूपम् । संयुक्त-मितिमंत्रनिर्दिष्टक्षराक्षरशब्दार्थंविवृण्वन्परस्परवैलक्षण्यज्ञानमात्रेण-मुक्तेमनननिदिध्यासनवैयर्थ्यमितिशंकांचशमयति ॥

क्षरंप्रधानममृताक्षरंहरः क्षरात्मानावीशतेदेवएकः। तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चांतेविश्वमाया-निवृत्तिः ॥

प्रधानंप्रकृतिस्त्रियामिति प्रधानशब्दिताप्रकृतिःक्षरमित्युच्यते। भोग्यमात्मनोभोगार्थंहरतीतिहरोजीवः । अमृतत्वान्मरणधर्मशून्य-त्वादक्षरमित्यर्थः । क्षराक्षरशब्दितचेतनाचेतनवर्गेशिता अपहतपा प्मा दिव्योदेवइतिदेवत्वेननिर्दिष्टोनारायणएव। तस्यारंभणसंशीलन लक्षणाभिध्यानाद्योजनशब्दिताद्योगात्तत्त्वाविर्भावरूपात्तद्भावाच्च-त्रयंयदाविंदतेब्रह्ममेतदितिनिर्दिष्टोपासनकालीनब्रह्मानुभवरूपमु-त्त्यनंतरंचरमशरीरवियोगकालेसमस्तप्रकृतिसंबंधनिवृत्तिर्भवती-त्यर्थः ॥

अजामेकांलोहितशुक्लकृष्णांबह्वीः प्रजाः सृजमा-नांसरूपाः । अजोह्येकोजुषमाणोऽनुशेतेजहात्येनां-भुक्तभोगामजोन्यः ॥

तेजोबन्नलक्षणविकारगतलोहितशुक्लकृष्णरूपयुक्तां स्वसमानरू-पविविधभूतभौतिकस्रष्ट्रीम् उत्पत्तिरहितां कांचित्कश्चिदविद्वान् उत्पत्तिरहिततयातत्समानएवसन्तत्राहंबुद्ध्यासेवमानस्तामनुसृत्य-शेतेतिष्ठति । अपरो विद्वान्कंचित्कालंभुक्त्वोत्पन्नवैराग्यस्त्यजती-त्यर्थः । इतरत्सर्वमुपनिषद्भाष्येवगंतव्यम् ॥

बृहदारण्यकेचतुर्थाध्यायेद्वितीयब्राह्मणे ॥

तदेषश्लोकोभवति । अर्वाग्बिलश्चमसऊर्ध्वबुध्नस्तस्मिन्यशोनिहितंविश्वरूपम् । तस्यासतऋषयस्सप्ततीरेवागष्टमीब्रह्मणासंविदानेति ॥

अमुंमंत्रंश्रुतिरेवव्याचष्टे ॥

अर्वाग्बिलश्चमसऊर्ध्वबुध्नइतीदंतच्छिरः एषह्यर्वाग्बिलश्चमसऊर्ध्वबुध्नः ॥

अर्वाग्बिलश्चमसइतिमंत्रखंडेनोच्यमानमिदंतदेवशिरः—प्रसिद्धमेवशिरःकंठादुपरिभागइतियावत् । किंतदित्याशंक्याह। एषह्यर्वाग्बिलश्चमसऊर्ध्वबुध्नः—चम्यतेनेनेतिचमसः । भक्षणसाधनमित्यर्थः । एषमुखरूपश्चमसः । आस्यस्यबिलरूपत्वादर्वाग्बिलत्वंशिरसः ऊर्ध्वस्थूलभागरूपबुध्नाकारत्वादूर्ध्वबुध्नत्वम् । लोकेहिप्रसिद्धश्चमस ऊर्ध्वबिलःतिर्यग्बुध्नः । अयंतुविलक्षणश्चमसइतिभावः ॥

तस्मिन्यशोनिहितंविश्वरूपमित्येतद्वाक्यं पंचवृत्तिप्राणानाह । तत्रहेतुमाह ॥

प्राणावैयशोनिहितंविश्वरूपम् ॥

प्राणस्यप्राणापानादिरूपबहुरूपतयायशसोविष्वक्प्रसृमरत्वाद्यशस्त्वेनरूपणम् । वृत्तिभेदात् प्राणाइति बहुवचनम् ॥

तस्यासतऋषयः सप्ततीरइतिप्राणावाऋषयःप्राणानेतदाह ॥

नासाक्षिश्रोत्रास्योपाधिसंबंधिनः सप्तशीर्षण्याः प्राणाः तस्यसमीपेवर्ततइत्यर्थः ॥

वागष्टमीब्रह्मणासंविदानेति वागध्यष्टमीब्रह्मणासंवित्ता ॥

ब्रह्मणावेदेनचतुर्मुखेनवासंविदानासंवादंकुर्वती । संवित्ता–समित्येकीकारे–वित्तशब्दोज्ञानपरः। ब्रह्मणैकप्रत्यया। एकबुद्धिःब्रह्मणैककंठा–वेदवादिनीतियावत् ॥

कारणत्वेनचाकाशादिषुयथाव्यपदिष्टोक्तेः।१।४।१४॥

बृहदारण्यके तृतीयाध्यायेचतुर्थब्राह्मणे ॥

तद्धेदंतर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेवव्याक्रियते ॥

हशब्दोवृत्तार्थस्मरणे । तदिदंमिथुनादिलक्षणंजगत्तर्हितदासृष्टेः प्रागव्याकृतमासीदव्यक्तमासीत् । अव्यक्तशरीरकंब्रह्मासीदित्यर्थः । नामरूपाभ्यांनव्याकृतमितिव्युत्पत्त्याऽव्याकृतशब्दस्याव्यक्तवचनत्वात् । अव्यक्तत्वंचनामरूपविशिष्टतयाऽनभिव्यक्तत्वम् । अव्याकृतशब्दस्यतच्छरीरकब्रह्मपरत्वेयुक्तिः समनंतरमेवरूपष्टायिष्यते । तत् अव्याकृतशरीरकंब्रह्म । नामरूपाभ्यमितीइत्थंभावेतृतीया । नामरूपवत्तयाव्याकृतमासीत् । व्याङ्भ्यामुपसर्गाभ्यांविविच्यसमन्तात्कृतमासीदित्यर्थः । तदेवदर्शयति ॥

"असौनामायमिदंरूपइति ॥" इति ॥

देवमनुष्यादिनामाकरशिरश्चरणादिरूपवान् इत्येवंव्याक्रियतइत्यर्थः ॥

तदिदमप्येतर्हिनामरूपाभ्यामेवव्याक्रियतेऽसौनामायमिदंरूपइति ॥

अनेनवाक्येनसृष्ट्यादिकालिकेऽप्रत्यक्षेऽव्याकृतनामरूपव्याकरणसुग्रहत्वायनिदर्शनमुच्यते । तत् पूर्वंतथानामरूपाभ्यांव्याक-

णा द्धेतोः।एतर्ह्यपि इदानीमपि।इदमुत्पद्यमानंचराचरव्यक्तिजातम्।
इदंरूपोयम् एतादृशसंस्थानवानयम्, असौनामा देवदत्तयज्ञदत्त
नामवानितिनामरूपाभ्यामेवव्याक्रियतो, इत्थमेवादावपिनामरूपा-
भ्यांव्याकरणमवधेयमित्यर्थः। उभयत्रअसौनामेतिच्छांदसोऽलुक्॥
अदोनामेतिवक्तव्ये असौनामेतिलिंगव्यत्ययः छांदसः। ततश्चनाम-
रूपवत्त्वमव्याकृतशब्दितस्यब्रह्मणः सिद्धम्। अतः सर्वाणिनामा
नितत्प्रवृत्तिनिमित्तभूतानिचरूपाणितदीयान्येव। अतइदमादिशब्दै
रपितस्यैवनिर्देशसंभवात्पूर्वत्रात्मैवेदमग्रआसीदित्यभेदनिर्देशे नानु-
पपत्तिरितिभावः। नामरूपाभ्यामेवेत्यत्रैवकारोभिन्नक्रमः। तन्ना-
मरूपाभ्यांस्वयमेवव्याक्रियतइत्यर्थः। व्याक्रियतेइत्यत्रकर्मकर्त्त-
रिलकारः। कर्त्रंतराक्षेपेगौरवात्तदात्मानंस्वयमकुरुतेत्यनेनैका-
र्थ्यात्। उक्तंचभगवताभाष्यकृतातदेवाविभक्तनामरूपंब्रह्मसर्वज्ञंस-
त्यसंकल्पंस्वेनैवविभक्तनामरूपतयास्वयमेवव्याक्रियतइत्युच्यतइ-
ति॥ नन्वव्याकृतमासीदित्यत्रक्तप्रत्यायांतस्यकर्मार्थकत्वमेववक्त
व्यंनतुकर्मकर्त्रर्थकत्वम्॥ नचकर्मकर्तर्यपिकर्मवद्भावेनक्तप्रत्यय-
सिद्धिरस्त्वितिवाच्यम्॥ लांतस्ययः कर्मणातुल्यक्रियः कर्ता-
तस्यैव कर्मवद्भावविधानात्। कृत्यक्तखलर्थेषु कर्मवद्भावाभावा-
दवश्यंकर्मण्येवक्तोवक्तव्यः। ततश्चतद्वैरूप्यायव्याक्रियतेइत्यत्रापि
कर्मण्येवलकारोस्त्वितिचेन्न॥ एवकारेणकर्त्रंतरव्यवच्छेदात्कर्त्रंतरा
क्षेपेगौरवाच्चव्याक्रियतइतिलकारस्यकर्मकर्तर्येवाभ्युपगंतव्यत्वाद्वै-
रूप्यस्यापिसोढव्यत्वात्॥ नन्वात्मनः कथंदेवमनुष्यादिनामरूपव-
त्त्वंदेवमनुष्यादिशरीरेतस्यावर्तमानत्वादितीमामाशंकांव्यावर्तयति।

## सएषइहप्रविष्टआनखाग्रेभ्यः॥

अंतर्यामिरूपेणेतिशेषः। तत्रदृष्टांतमाह॥

यथाक्षुरः क्षुरधानेवहितः स्यात् विश्वंभरोवाविश्वं-भरकुलाये ॥

क्षुरोधीयतेस्मिन्निति क्षुरधानंक्षुरकोशः । तस्मिन्यथाक्षुरः अव-हितःप्रविष्टः। विश्वंबिभर्ति वैश्वानराग्न्यादिरूपेणेतिविश्वंभरोग्निः । तस्यकुलायेनीडेदारुणीतियावत् ॥

तन्नपश्यत्यकृत्स्नोहिसः ॥

यस्तिलतैलवत्सर्वस्वरूपव्याप्तं परमात्मानं न पश्यतिसः अकृ-त्स्नः अपूर्णस्वरूपः।असत्कल्पइतियावत्। परमात्मनएवसर्वनाम-रूपवत्त्वमुपपादयति ॥

प्राणन्नेवप्राणनामाभवति वदन्वाक्पश्यंश्चक्षुः शृण्व-ञ्छ्रोत्रंमन्वानोमनः तान्यस्यैतानिकर्माणिनामान्येव॥

प्राणनरूपक्रियांकुर्वन् प्राणनामाभवति।चष्टइतिहिचक्षुः। शृण्वन्स-ञ्छ्रोत्रंशृणोतीतिहिश्रोत्रम्। मनुतइतिमनः । तान्येतानिप्राणादीनि नामानिपाचकलावकादिवत् कर्मनामान्येव । अतः सर्वनामरूपा श्रयत्वंपरमात्मनोस्तीतिभावः । अत्र प्राणनादिकरणेषु प्राणादिषु-कर्तृत्वोपचारःप्राधान्यादवगंतव्यः ॥

---

जगद्वाचित्वात्।१।४।१६ ॥

ऋग्वेदांतर्गतकौषीतकि (की) ब्राह्मणोपनिषदिचतुर्थाध्याये ॥

गार्ग्योहवै बालाकिरनूचानः सं (सु) स्पष्ट-आस ॥

बलाकस्यापत्यं बालाकिः गोत्रतोगार्ग्यः। अनूचानः अं (सां) गाध्यायीअं (सां) गाध्याय्यनूचानइतिस्मृतेः । संस्पष्टः सम्यग् विद्ययाख्यातः ।एवंभूतःसन्नासबभूव ॥

**सहोवासोशीनरेषु सत्त्वमत्स्येषु कुरुपांचालेषुकाशीविदेहेष्विति ॥**

स बालाकिः उशीनरेषु सत्त्वप्रचुरेषु मत्स्यदेशेषु कुरुपांचालेषु काशीविदेहेषु उषितवान् । इतिशब्दः प्रकारवचनः । एवं जातीयकेष्वन्येष्वपीत्यर्थः ॥

**सहाजातशत्रुंकाश्यमेत्योवाच ॥**

अजातशत्रुनामानंकाशीराजमधिगम्योवाच ॥

**ब्रह्मते ब्रवाणीति तं होवाचाजातशत्रुः सहस्रंदद्मएतस्यांवाचिजनकोजनकइतिहवैजनाधावंतीति ॥**

ब्रह्मतेब्रवाणीत्येतस्यामेववाचिनिमित्तेगवां सहस्रंप्रयच्छामः। सर्वेपिब्रह्मविदः जनकएवब्रह्मशुश्रूषुर्दाताचेतिजनकस्यसमीपेधावंति । भवांस्त्वस्मत्समीपमागत्यब्रह्मतेब्रवाणीत्युक्तवान् । अनेनैववाक्येनतोषितावयंसहस्रंप्रयच्छाम इतिभावः ॥

**सहोवाचबालाकिः यएवैष आदित्येपुरुषः तमेवाहमुपासइति ॥**

आदित्यमंडलांतर्वर्तिनं पुरुषं ब्रह्मेत्यहमुपासे । अतस्त्वमपि तमेवोपास्स्वेतिभावः ॥

**तꣳहोवाचाजातशत्रुः मामैतस्मिन्संवादयिष्ठाः बृहन्पांडुरवासा अतिष्ठाः सर्वेषांभूतानांमूर्द्धेतिवा अहमेतदुपासइति ॥**

वैशब्दोवधारणे।बृहन् महान्। पांडुराणिकिरणरूपाणिवासांसियस्यसः पांडुरवासाः। आदित्यकिरणानां नानारूपत्वात् पांडुरवासस्त्वमस्तीति द्रष्टव्यम् । बृहदारण्यकेबालाक्यजातशत्रुसंवादेबृहत्त्वपांडरवासस्त्वेचंद्रधर्मतयोक्तेइति विशेषः। अतिष्ठाः । सर्वमपि

कार्यजातमतिक्रम्यतिष्ठतीत्यतिष्ठाः। सर्वेषांभूतानां मूर्द्धाश्रेष्ठः। तदुपासनस्यानुरूपफलमाह ॥

"सयोहैतमेवमुपास्ते अतिष्ठाः सर्वेषां भूतानांमूर्द्धा भवति। सहोवाचबालाकिः यएवैषचंद्रमसिपुरुषस्तमेवाहमुपासे ॥" इत्यादि ॥

ततोहबालाकिस्तूष्णीमास ॥

उत्तरापरिस्फूर्तेरितिशेषः ॥

तꣳहोवाचाजातशत्रुः एतावन्नुबालाकइति ॥

हेबालाकेएतावदेवखलुतेविदितमित्यर्थः ॥

एतावदितिहोवाचबालाकिः ॥

एतावदेवविदितमित्युवाचेत्यर्थः ॥

तꣳहोवाचाजातशत्रुः मृषावैकिल मा संवादयिष्ठाः ॥

ब्रह्मतेब्रवाणीतिमृषोक्त्यामांमृषैवंसंवादयिष्ठाः संवादंकारितवानित्यर्थः। एतावंतंकालमब्रह्मवादएवप्रवृत्तइत्यर्थः। तर्हिकिंतद्वेदितव्यंब्रह्मेत्यत्राह ॥

सहोवाचयोवैबालाकेएतेषांपुरुषाणांकर्तायस्यचैतत्कर्मसवैवेदितव्यइति ॥

वैशब्दोवधारणे। त्वयाब्रह्मत्वेनोपदिष्टानामादित्यादिपुरुषाणांयःकर्तातेयत्कार्यभूताः किंविशिष्याभिधीयतेयस्यप्रत्यक्षादिसंनिधापितंचिदचिद्रूपंसमस्तंजगत्कार्यम्। क्रियतइतिव्युत्पत्त्याकर्मशब्दःकार्यवचनः। सएववेदितव्यःनतुत्वदुपन्यस्ताआदित्यादयइतिभावः ॥

ततउहबालाकिःसमित्पाणिःप्रतिचक्रामउपत्वायानीति ॥

उशब्दोवधारणे।हशब्दःप्रसिद्धौ। एवमजातशत्रुणोक्तोबालाकिर्ग-ताभिमानो " नीचादप्युत्तमांविद्याम् । आपत्कालेब्राह्मणस्याब्राह्म-णाद्विद्योपयोगः" इतिशास्त्रमनुसृत्यक्षत्रियादप्यजातशत्रोर्विद्यामुपा-दित्सुर्नानुपसन्नायब्रह्मोपदेष्टव्यमितिशास्त्रार्थंजानन्समिद्धारहस्त-श्शिष्यःसन्नुपगच्छानीतिवव्रे ॥

तꣳहोवाचाजातशत्रुःप्रतिलोमरूपमेवस्यात् यत्क्ष-त्रियोब्राह्मणमुपनयेदित्येह्येव ( येदेहि ) त्वाज्ञापयि-ष्यमीति ॥

क्षत्रियोब्राह्मणमुपनयेदिति यत्तद्विपरीतरूपमेवस्यात् । अतएव हि त्वामुपनयनमंतरेणैवब्रह्मविज्ञापयिष्याम्येव ॥

तꣳपाणावभिपद्यप्रवव्राज ॥

तंबालाकिंपाणौगृहीत्वानिर्गतइत्यर्थः ॥

तौहसुप्तंपुरुषमीयतुः ॥

तौबालाक्यजातशत्रूराजभवनेसुप्तं कंचित्पुरुषंप्राप्तवंतावित्यर्थः । बालाक्यधिकरण १ । ४ । १६ ॥ भाष्ये "तौहसुप्तंपुरुषमाजग्मतुः" इत्युदाहृतंवाक्यंबृहदारण्यगतंनैतच्छाखागतम् । अतएवतत्रव्या-सार्यैः तौहसुप्तंपुरुषमीयतुरितिश्रुतिरित्युक्तम् ॥

तꣳहाजातशत्रुरामन्त्रयांचक्रेबृहन्पांडुरवासास्सो-मराजन्निति ॥

प्राणोवावज्येष्ठश्चश्रेष्ठश्चेतिज्यैष्ठ्यश्रैष्ठ्यगुणेनप्राणस्यबृहत्त्वाद्बृ-हन्नित्यामंत्रणम्।पांडुरवासस्त्वंचप्राणधर्म्मः। किंमेवासइतिप्राणेनपृष्टे आपोवासइत्यपांप्राणवासस्त्वोक्तेः । तासांत्वपांशुक्लवर्णाश्रयत्वात् पांडुरवासस्त्वमुक्तम् । सप्तान्नब्राह्मणेअथैतस्यप्राणस्यापः शरीरंज्यो तीरूपं   असौचंद्रइतिप्राणस्यचंद्रसंबन्धप्रतीतेर्लक्षणयासोमेतिप्रा-

णस्यसंबोधनम् । प्राणोवैसम्राडितिश्रवणाद्राजन्नित्यामंत्र्यतइति-व्यासार्यैरुक्तम् ॥

सतूष्णीमेवशिश्ये ॥

अनुत्थित एव यथापूर्वमशयिष्टेत्यर्थः ॥

ततउहैतंयष्ट्याचिक्षेप ॥

सुप्तंयष्ट्याताडितवानित्यर्थः ॥

सततएवसमुत्तस्थौ ॥

दंडताडनादेवसमुत्तस्थौ।नतुप्राणानामामंत्रणादिनेत्यर्थः। प्राणनामभिरामंत्रणेप्यनुत्थानप्रदर्शनंप्राणान्यत्वज्ञापनार्थम्।सुषुप्तिदशायामुपरतव्यापारेभ्यः शरीरेंद्रियेभ्योन्यत्वंसुज्ञानमितितस्यामपिदशायामनुपरतव्यापारात् प्राणादन्यत्वंज्ञापनीयमितिप्राणनामभिरामंत्रणेप्यनुत्थानेनदंडताडनोत्थानेनचजीवस्यप्राणव्यतिरेकः प्रदर्शितः । एवं देहेंद्रियमनःप्राणव्यतिरिक्तंजीवंप्रदर्श्यततोतिरिक्तंपरमात्मानंबोधयितुमाह ॥

तꣳहोवाचाजातशत्रुः क्वैषएतद्बालाकेपुरुषोऽशयिष्टक्वाएतदभूत्कुतएतदागादिति ॥

हेबालाकेएषपुरुषः अशयिष्टेत्येतत् क्वेतिस्वप्नस्थानप्रश्नः । यद्वैतच्छब्दः स्वप्नपरः । अशयिष्टेत्येतत्प्रत्ययार्थमात्रपरम् । क्वैतत्स्वप्नमकृतेत्यर्थः । सर्वथास्वप्नस्थानप्रश्नः । क्वाएतदभूदिति-सुषुप्तिस्थानप्रश्नः । एतच्छब्दस्यनपुंसकलिंगत्वेपिप्रकृतवाचिप्रकृतिस्वारस्यात्प्रकृतपुरुषशब्दितजीवपरः । जीवः क्वसुतोभूदित्यर्थः । कुतएतदागादित्यत्राप्येतच्छब्दोजीवपरएव । प्रबोधकालीनजीवोद्गमनापादानंकिमित्यर्थः । ततश्चजीवस्यस्वप्नस्थानसुषुप्तिस्थानोद्गमनापादनानिपृष्टानिभवंति। यद्वात्रत्रिष्वपिप्रश्नेष्वेतच्छब्दः

सप्तम्यंतः । एतस्मिन्कालइत्यर्थः । सुपांसुलुगितिसुपोलुक् । एतस्मिन्कालेक्कस्वप्नमनुभूतवान्, एतस्मिन्काले कुतोनिर्गतः । एवं चत्रयाणामप्येतच्छब्दानामैकरूप्यंचसिद्ध्यति ॥

तदुहबालाकिर्नविजज्ञौ ॥

उत्तरंबालाकिर्नज्ञातवानित्यर्थः ॥

तꣳहोवाचाजातशत्रुः । यत्रैषएतद्बालाकेपुरुषोऽशयिष्टयत्रैतदभूद्यतएतदागात् ॥

यत्रैषएतद्बालाके पुरुषोशयिष्टयत्रैतदभूद्यत्रैतदागात् तदुच्यतइतिशेषः । स्वप्नस्थानप्रश्नंप्रतिवक्ति ॥

हितानामहृदयस्यनाड्योहृदयात्पुरीततमभिप्रतिष्ठंति यथासहस्रधाकेशस्यापिपातः तावदण्व्यः पिंगलस्याणिम्नापूर्णास्तिष्ठंते शुक्लस्यकृष्णस्यपीतस्यलोहितस्येतितासुतदाभवति ॥

आत्मनोहितावहत्वाद्धिताइतिप्रसिद्धाहृदयसंबंधिन्योनाड्यःहृदयात्पुरीततंपुरीतदाख्यंहृदयांतर्वर्तिमांसपिंडविशेषम् । अभिप्रस्थिताभवंति—हृदयपुरीततिनद्धाभवंति । ततश्चयथाकेशस्यापिसहस्रधापातः अतिसूक्ष्मास्तावदण्व्यः सूक्ष्माः पिंगलस्यकृष्णस्यपीतस्य लोहितस्यान्नपीतादिरसस्याणिम्नालेशेन पूर्णास्तिष्ठंति, अतिसूक्ष्मत्वाल्लेशेनापिपूर्णाभवंति । तासुनाडीषुतदास्वप्नकाले आश्रिताभवतीत्यर्थः । सुषुप्तिस्थानप्रश्नस्योत्तरमाह ॥

यदासुप्तः स्वपन्नकंचनपश्यतिअथास्मिन्प्राणएवैकधाभवति । अथैनंवाक्सर्वैर्नामभिः सहाप्येति । चक्षुः सर्वैरूपैः सहाप्येति । श्रोत्रंसर्वैः शब्दैः सहाप्येति । मनःसर्वैर्ध्यानैः सहाप्येतीति ॥

सुप्तइतिवर्तमानेक्तः । स्वपन्यदोपरतस्वप्नदर्शनोभवति । अति-स्वप्नानंतरमस्मिन् प्राणेप्राणशरीरकेपरमात्मनिएकधाभवति । एकधाभावोनाम जाग्रदाद्यवस्थाजनितदेहात्माभिमानकृतरागद्वेषादिलक्षणकालुष्यराहित्येनावस्थानम् । सर्वाणिहवाइमानिभूतानिप्राणमेवाभिसंविशंतीत्यादौप्राणशब्दस्यपरमात्मनिप्रचुरप्रयोगात् । वाजसनेयकेसमानप्रकरणे यएषोंतर्हृदय आकाशस्तस्मिन् शेतइति आकाशशब्दितस्यसुषुप्त्याधारत्वश्रवणादाकाशप्राणशब्दयोः परमात्मपरत्वमंतरेणाविरोधासंभवात् । सतासोम्यतदासंपन्नोभवति । "सतिसंपद्यनविदुः । प्राज्ञेनात्मनासंपरिष्वक्तः" इतिपरमात्मनः सुषुप्त्याधारत्वस्यश्रुत्यंतरश्रवणाच्च प्राणशब्दोयोगेनवापर्यवसानवृत्त्यावाब्रह्मपरः । परमात्मनोबुद्धिस्थत्वादस्मिन्निितिनिर्देशोप्युपद्यते ।तत् अथैनंतदुत्तक्षणएनंपरमात्मानमपियंतंजीवंवागादींद्रियाण्यपितत्तत्स्वकार्येणसहापियंतीत्यर्थः । नामशब्दोनामाभिलपनपरः । रूपशब्दशब्दौतज्ज्ञानौपयिकव्यापारपरौ । रूपशब्दादीनांसुषुप्तौलयासंभवात् । इंद्रियव्यापारोपरतेरेवसुषुप्तिशब्दार्थत्वात् । उद्गमनापादनप्रश्नस्योत्तरमाह ॥

सयदाप्रतिबुध्यतेयथाग्नेर्विष्फुलिंगाएवमेतस्मादात्मनः प्राणायथायतनंविप्रतिष्ठंतेप्राणेभ्योदेवाः देवेभ्योलोकाः ॥

अग्नेर्विष्फुलिंगाश्चैतस्मात्परमात्मनः प्राणशब्दिताजीवायथास्थानंप्रस्थिताभवंति तेभ्यश्चदेवशब्दितानींद्रियाण्येतेभ्यश्चलोकशब्दितानिज्ञानानिभवंतीत्यर्थः ॥

तद्यथाक्षुरः क्षुरधानेऽवहितः स्याद्विश्वंभरोवावि-

**श्वम्भरकुलाये एवमेवैषप्राज्ञआत्माइदंशरीरमात्मान मनुप्रविष्टआलोमभ्यआनखेभ्यः ॥**

क्षुरोधीयतेअस्मिन्निति क्षुरधानंक्षुरकोशः तस्मिन्यथाक्षुरः अवहितः प्रविष्टः विश्वंबिभर्तिवैश्वानराग्न्यादिरूपेणेतिविश्वंभरोग्निः तस्य कुलायेनीडेदारुणीतियावत् । एवमेवैषपरमात्माइदंपुरोवर्तिशरीरमा लोमभ्यआनखेभ्यः । व्याप्तमित्यध्याहारः । व्याप्तमात्मानंजीवात्मानमनुप्रविष्टः । अंतर्यामितयाअनुप्रविष्टइत्यर्थः । तादृशस्यसुषुप्त्याधारत्वोद्गमनापादनत्वेसंभवतइतिभावः । यद्वा । इदंवाक्यंजीवशरीरकपरमेवव्याख्येयम् । आत्मानमिदंशरीरआत्मत्वेनाभिमन्यमानमिदंशरीरमालोमभ्यआनखेभ्योजीवरूपेणप्रविष्टइत्यर्थः ॥

**तमेतमात्मानमेतेआत्मानोन्ववस्यंति ॥**

एतादृशंपरमात्मानमितरेजीवाअन्ववस्यंतिअनुवर्त्तंते । तत्रदृष्टान्तमाह ॥

**यथाश्रेष्ठिनंस्वाः ॥**

यथाश्रैष्ठ्यवंतंस्वाः ज्ञातयःअनुवर्तन्ते ॥

**तद्यथाश्रेष्ठीस्वैर्भुंक्तेयथावाश्रेष्ठिनंस्वाभुंजंतेएवमेवैषप्राज्ञआत्माएतैरात्मभिर्भुंक्ते ॥**

यथाश्रेष्ठीस्वैः। एवंवाएतमात्मानमात्मानोन्ववस्यंति।यथाश्रेष्ठिनं स्वाः। यथाकश्चित्प्रभुः भोगोपकरणभूतैः स्वैर्ज्ञातिभिः यथाभोगान्भुंक्ते । यथास्वाश्चबंधवः तंप्रभुमैश्वर्यादिसमग्रमनुभूयतद्दत्तानिवित्तादीनिचोपजीव्यहृष्यंति । एवमेवायंपरमात्मास्वोपकरणभूतैर्जीवात्मभिर्लीलारसंभुंक्तेतिचात्मानःपरमात्मदत्तभोगोपकरणाः सर्वैश्वर्यादिविशिष्टंतमनुभूयहृष्टाभवंतीत्यर्थः । यथावास्वाःश्रेष्ठिनंभुंजंतीतिपाठे यथाप्रधानपुरुषः स्वकीयैर्भृत्यादिभिर्भोगसाधनान्युपहरद्भिः

भोगान्भुंक्तेयथाचभोगसाधनान्युपहरंतः प्रधानपुरुषंपालयंत्येवमि-त्यर्थः । "भुजोनवने १ । ३ । ३६ ॥" इतिभुजेः पालनेपरस्मैपदि-त्वादितिध्येयम् । ईदृशंभोक्तृत्वंजीवद्वारावापरमात्मनियोजनीयम् ॥

सयावद्ध्वाइंद्रएतमात्मानंनविजज्ञौतावदेनमसुरा-अभिबभूवुःसयदाविजज्ञौअथहत्वासुरान्विजित्यसर्वे-षांदेवानांश्रैष्ठ्यंस्वाराज्यमाधिपत्यंपरीयायअथोयोवै-वंविद्वान् सर्वान् पाप्मनोपहत्यसर्वेषांभूतानांश्रैष्ठ्यं-स्वाराज्यमाधिपत्यंपर्यैतियएवंवेदयएवंवेद ॥

इंद्रो ब्रह्मविद्याऽलाभात् प्रागसुरैः पीडितः इमांब्रह्मविद्यांलब्ध्वा असुरहननेन विजयीसर्वदेवाधिपत्यं सर्वदेवश्रैष्ठ्यं स्वाराज्यशब्दि-ताकर्म्मवश्यत्वलक्षणंमोक्षंचप्राप । अतोन्योप्येवंवित्सर्वभूताधि-पत्यं सर्वभूतश्रैष्ठ्यं पापापहतिपूर्वकाकर्म्मवश्यत्वलक्षणस्वाराज्य शब्दितं मोक्षं च प्राप्नोतीत्यर्थः । व्यासार्यैस्तुसर्वान् पाप्मनोपहत्ये-त्यनेनापहतपाप्मत्वादिगुणाष्टकमुक्तम् । जरादीनामपिपाप्मांतर्गत-त्वात् । उक्तंहिवाक्यकारैः । " स्युः पाप्मानः कालजरामृत्युशोका-दयः संख्यातत्वात्" इति । स्वाराज्यंस्वाधीनत्वम् । अनेनसत्यसं-कल्पत्वंचोक्तंभवति । तत्स्वाराज्यं संसारिभ्योऽस्य श्रैष्ठ्यरूपम् । आधिपत्यम् । अधिपतिः परमात्मासर्वस्याधिपतिरितिश्रुतेः।तत्संबं-धि आधिपत्यं गुणाष्टकंहिब्रह्मसंबंधितयाब्राह्ममुच्यते " ब्राह्मेणजैमि-निः "। ४ । ४ । ५ ॥ इति । अतोब्रह्मसंबंधितयातत्साधर्म्मरूपंसं-सारिभ्यः श्रेष्ठतारूपं यत्स्वाराज्यंतदेतीतिश्रुतेरर्थइत्युक्तम् । अन्योऽपियएतामुपनिषदंवेदसोपीदृशंफलमाप्नोतीत्यर्थः ॥

वाक्यान्वयात् । १ । ४ । १९ ॥

---

१ इति सूत्रेणेत्यर्थः ॥

बृहदारण्यके चतुर्थेषष्ठेचमैत्रेयीब्राह्मणं किंचिद्भेदभिन्नमाम्नातम्। तत्रचतुर्थंमैत्रेयीब्राह्मणंव्याख्यायते ॥

मैत्रेयीतिहोवाचयाज्ञवल्क्यः ॥

मित्रायाः अपत्यंमैत्रेयीतांमैत्रेयीत्यामंत्र्याह ॥

उद्यास्यन्वाअरे अहमस्मात्स्थानादस्मिहंततेऽन याकात्यायन्यांतंकरवाणीति ॥

अरेमैत्रेयि। अहमस्मात्स्थानात् गार्हस्थ्यलक्षणादाश्रमादुद्यास्यन्नस्मिऊर्ध्वंगंतुमिच्छन्नस्मि । हंत । तवअनयाकात्यायन्यासहअंतंयुवयोःकलहशांतयेद्रव्यविभागनिर्णयंकरवाणीति ॥

साहोवाचमैत्रेयीयन्नुमइयं भगोः सर्वापृथिवीवित्ते-नपूर्णास्यात्कथंतेनामृतास्यामिति ॥

हेभगो।संबुद्धौ "विभाषाभवत्भगवदघवतामोच्चावस्य"इति ओत्वंरुत्वंविसर्गश्च। सर्वापिपृथ्वीवित्तेनपूर्णायत्यदिममस्यात् वशांवदास्यादित्यर्थः । तदातेनवित्तेनकथंकथंचिदमृतास्यान्नुसंसारान्मुक्तास्यान्नुकिमित्यर्थः ॥

नेतिहोवाचयाज्ञवल्क्यः यथैवोपकरणवतांजीवितं तथैवतेजीवितंस्यात् अमृतस्यतुनाशास्तिवित्तेन ॥

उपकरणवतांभोगसाधनवतांजीवितंसुखजीवनंयथासिद्ध्यति तथैवतेभोगोपकरणवित्तवत्याः सुखेनजीवनंपरंलभ्यतेमोक्षस्यवित्तेनसाधनेनप्राप्यताशानास्तीत्यर्थः ॥

साहोवाचमैत्रेयीयेनाहन्नामृतास्यांकिमहंतेनकुर्यां यदेवभगवान्वेदतदेवमेब्रूहीति ॥

ममामृतत्वप्राप्त्यनुपायभूतेनवित्तेनाहंकिंकरिष्यामिभगवन्यदमृतत्वप्राप्त्युपायंवेदतदेवमेब्रूहीति ॥

सहोवाचयाज्ञवल्क्यः प्रियावतारेनः सतीप्रियंभाष- सएह्यास्स्वव्याख्यास्यामितेव्याचक्षाणस्यतुमेनिदि- ध्यासस्वेति ॥

बतेत्यनुकंपायाम्। अरेमैत्रेयि। त्वंसतीप्रियाऽनुकूलाचसतीप्रियं मनोनुकूलंवाक्यं भाषसे।एहिआगच्छआस्स्वउपविश। तेअमृतत्वो पायंवक्ष्यामि। किंतु व्याचक्षाणस्यव्याख्यानंकुर्वतोममवाक्यानिअर्थ तोनिश्चयेनध्यातुमिच्छ।यद्वा व्याचक्षाणस्यतुमेमुखंनिदिध्यासस्वनि दिध्यासनमवलोकनम्।अवलोकयेतियावत्।इतिशब्दोवाक्यावसाने। एवमुक्तामैत्रेयीसावधानासतीस्वस्यश्रवणावधानंज्ञापयितुमाह ॥

ब्रवीतुमेभगवानिति ॥

स्पष्टोर्थः ॥

सहोवाच ॥

नवाअरेपत्युःकामायपतिः प्रियोभवत्यात्मनस्तुका मायपतिःप्रियोभवति ॥

अत्रामृतत्वार्थिन्यैमैत्रेय्यै अमृतत्वसाधनदर्शनविषयतयाआत्मैव- द्रष्टव्यइत्युपदिश्यमानआत्मापरमात्मेत्यवश्यमभ्युपेयः। "तमेवंवि- द्वानमृतइहभवति।नान्यः पंथाअयनायविद्यते" इतितज्ज्ञानस्यैवमो- क्षसाधनत्वावगमात्। ब्रह्मतंपरादादित्यादिनातस्यसार्वात्म्यकथ- नात्। आत्मनोवाअरेदर्शनेनेत्यादिनातज्ज्ञानेनसार्वज्ञवेदनेनसर्वो- पादानत्वप्रतिपादनाच्च। अस्मिन्प्रकरणेद्रष्टव्यतयोपदिश्यमानआ- त्मापरमात्मेतिसिद्धम्। तदुपपादकस्यास्यसंदर्भस्ययथापरमात्म- परत्वं तथार्थोवर्णनीयइतिचसिद्धम्।अतोस्यवाक्यस्यायमर्थः।नवाइ त्यत्रवैशब्दोवधारणे।नैवेत्यर्थः।पत्युः कामाय।कामः संकल्पः कामा- यसंकल्पायसंकल्पंसफलीकर्त्तुमित्यर्थः। "क्रियार्थोपपदस्यचकर्मणि

स्थानिनः" २।३।१४। इतिचतुर्थी।पत्युः प्रियत्वम्।अहमस्याः प्रियः स्यामितिपतिसंकल्पसाफल्याय नभवतिपतिसंकल्पायत्तंनभवतीतियावत् । वेदाध्ययनंसफलीकर्त्तुंयज्ञइत्युक्ते वेदाध्ययनस्ययज्ञः फलमितिहिसिद्धयति । एवंसंकल्पसाफल्यायप्रियत्वमित्युक्ते संकल्पफलंप्रियत्वमितिहिसिद्धयति । ततश्चाहमस्याः प्रियः स्यामितिपतिसंकल्पायत्तंनपतिप्रियत्वम् । अपित्वात्मनः परमात्मनः कामायसंकल्पायप्रियोभवतीत्यर्थः । आत्मशब्दस्यपरमात्मनिमुख्यवृत्तत्वात् ।अत्रापिकामायेत्यत्रपूर्ववच्चतुर्थी। एवमुत्तरत्रापिद्रष्टव्यम् ॥

नवाअरेजायायाः कामायजायाप्रियाभवत्यात्मनस्तुकामायजायाप्रियाभवति । नवाअरेपुत्राणांकामायपुत्राः प्रियाभवंत्यात्मनस्तुकामायपुत्राः प्रियाभवन्ति। नवाअरेवित्तस्यकामायवित्तंप्रियंभवत्यात्मनस्तुकामायवित्तंप्रियंभवति । नवाअरेब्रह्मणः कामायब्रह्मप्रियं भवत्यात्मनस्तुकामायब्रह्मप्रियंभवति ॥

ब्रह्मब्राह्मणइत्यर्थः ॥

नवाअरेक्षत्रस्यकामायक्षत्रंप्रियंभवत्यात्मनस्तुकामायक्षत्रंप्रियंभवति ॥

क्षत्रंक्षत्रियवर्णइत्यर्थः ॥

नवाअरेलोकानांकामायलोकाः प्रियाभवंत्यात्मनस्तुकामायलोकाः प्रियाभवन्ति ॥

स्वर्गाद्यालोकाइत्यर्थः ॥

नवाअरेदेवानांकामायदेवाः प्रियाभवंत्यात्मनस्तुकामायदेवाः प्रियाभवंति। नवाअरेभूतानांकामायभूतानि प्रियाणिभवंत्यात्मनस्तुकामायभूतानिप्रियाणि

भवंति । नवाअरेसर्वस्यकामायसर्वंप्रियंभवत्यात्मनस्तुकामायसर्वंप्रियंभवति ॥

स्पष्टोर्थः । ततः किमित्यत्राह ॥

आत्मावाअरेद्रष्टव्यः श्रोतव्योमंतव्योनिदिध्यासितव्यः ॥

यस्मात्पतिजायादीनांप्रियत्वंयत्संकल्पायत्तंतस्यपरमात्मनः प्रसादायपरमात्माद्रष्टव्यः । सहिपरमात्मादर्शनेनप्रसन्नः सन्सर्वेषामपिवस्तूनांपतिजायादिवत् ततोधिकंवाप्रियत्वमापादयितुंशक्नोति नपश्योमृत्युंपश्यतिनरोगंनोतदुःखतामितिमुक्तौसर्वेषांप्रियत्वश्रवणादितिभावः । अत्र स्वाध्यायस्यार्थपरत्वेनाधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात्तन्निर्णयायस्वयमेवगुरुमुखान्न्याययुक्तार्थग्रहणरूपश्रवणेप्रवर्त्ततइतिश्रवणस्य प्राप्तत्वाच्छ्रोतव्यइत्यनुवादः । स्वात्मन्येवमेवेतियुक्तिभिः श्रुतार्थप्रतिष्ठापनलक्षणमननस्यश्रवणप्रतिष्ठार्थतयाप्राप्तत्वान्मंतव्यइतिचानुवादः । अनवरतभावनारूपध्यानमेव निदिध्यासितव्यइति विधीयते । उपायत्वदशाप्रभृति भगवद्ध्यानस्यानुकूलत्वसूचनाय निदिध्यासितव्य इति सन्नंतपदेन निर्देशः । अत्र स्मृतिलंभेसर्वग्रन्थीनां विप्रमोक्ष इतिच ध्यानस्यैव मोक्षाव्यवहितहेतुत्वश्रवणात् " क्षीयंते चास्य कर्म्माणि तस्मिन्दृष्टे परावरे " इतिदर्शनस्यापि मोक्षाव्यवहितकारणत्वश्रवणादुभयोरप्येकार्थत्वस्य वक्तव्यत्वात् । दृशिधातोश्चाक्षुषज्ञानवाचितया चाक्षुषज्ञानस्य " नचक्षुषा गृह्यते"इत्यचाक्षुषतयाप्रतिपन्ने ब्रह्मण्यसंभवाद्दर्शनशब्देनोपचाराद्दर्शनसमानाकारमतिविशदंज्ञानमभिधीयते । ततश्च द्रष्टव्योनिदिध्यासितव्य इत्याभ्यां दर्शनसमानाकारंध्यानं विधीयते । " आर्षेयंवृणीते एकंवृणीते द्वौवृणीते त्रीन्वृणीते नचतुरोवृणीते नपंचाति-

प्रवृणीते" इत्यत्रार्षेयंवृणीते त्रीन्वृणीत" इत्याभ्यांत्रित्वविशिष्टार्षेयवरणविधानवदिति द्रष्टव्यम्[1] । तस्य किंफलमित्यत्राह ॥

**मैत्रेय्यात्मनो वारे दर्शनेन श्रवणेन मत्या विज्ञानेन इदꣳसर्वं विदितं भवति ॥**

अत्र विज्ञानेनेति विज्ञानशब्दो निदिध्यासनपरः । आत्मावा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्य इति स्थानमानात् । तस्मिन् परमात्मनि दर्शनसमानाकारध्यानविषयीकृते सति तत्प्रसादात्सर्वंविदितं भवति अनुकूलत्वेन विदितं भवति सर्वं प्रियं भवतीति यावत् ।यद्वा निदिध्यासितव्यतयानिर्दिष्टपरमात्मनः जगत्कारणत्वलक्षणमाह । आत्मनोवाअरे इत्यादिना उपादानोपादेययोरभेदात् । तस्मिन् ज्ञाते सर्वंविदितंभवति। अत्र सर्वमिदमितिशब्दौ स्थूलावस्थचिदचिद्विशिष्टब्रह्मपरौ । आत्मशब्दोपि सूक्ष्मचिद्विशिष्टब्रह्मपरः । अतस्तयोरभेदात् तद्विज्ञानेन सर्वं विज्ञातमित्युपपद्यते । अनेन जगदुपादानत्वमुक्तंभवति । अत्र निदिध्यासितव्यः इत्युक्त्वासर्वोपादानत्वकथनात् जगत्कारणत्वं सकलपरविद्यानुयायीति वदंति । ननु कथमात्मनिज्ञाते सर्वमिदं विज्ञातं स्याज्जगतस्तद्भिन्नत्वादित्याशंक्याह ॥

**ब्रह्मतंपरादाद्योन्यत्रात्मनो ब्रह्मवेद ॥**

ब्रह्म ब्राह्मणवर्णः यस्त्वात्मनः परमात्मनोन्यत्र स्थितम् । नतुपरमात्मनि । एवमुत्तरत्रापि द्रष्टव्यम् ॥

**क्षत्रं तं परादाद्योन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्योन्यत्रात्मनोलोकान्वेद वेदास्तंपरादुर्योन्यत्रा-**

---

१ अत्रव्याख्येयश्रुतौ "आत्मावारेद्रष्टव्यः श्रोतव्योमंतव्योनिदिध्यासितव्यः" इतिपाठेपि पाठक्रमादर्थक्रमोबलीयान् । इतिन्यायात् श्रवणानन्तरमेवदर्शनस्यसंभवाच्च । अग्निहोत्रंजुहोतियवागूंपचतीतिवन्निर्देशोबोद्धव्यः ॥

त्मनोवेदान्वेद भूतानितंपरादुर्योऽन्यत्रात्मनोभूतानिवेद सर्वंतंपरादाद्योन्यत्रात्मनः सर्ववेद ॥

स्पष्टोर्थः । ननु सर्वस्य ब्रह्माधारकतया ब्रह्मात्मकत्वेपि ब्रह्मात्मकस्यशरीरभूतस्य जगतः शरीरिभूतब्रह्माभिन्नत्वेन तज्ज्ञानेन तज्ज्ञानासंभवमाशंक्य तस्मिन् विज्ञाते इदं सर्वं विदितमितीदंसर्वशब्दाभ्यामन्यैरपि शब्दैस्तच्छरीरकं ब्रह्मैवाभिधीयते इत्यभिप्रेत्याह ॥

इदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीदं सर्वं विदितं भवति ॥

सर्वशरीरकं ब्रह्म विदितं भवतीत्यर्थ उपपद्यतइतिभावः । एवं जगत्कारणविशिष्टपरमात्मोपासनां विधाय उपासनोपकरणभूत मनः प्रभृतिकरणनियमनमाह ॥

सयथा दुंदुभेर्हन्यमानस्य न बाह्याञ्च्छब्दाञ्च्छक्नुयाद्ग्रहणाय दुंदुभेस्तु ग्रहणेन दुंदुभ्याघातस्य वा शब्दोगृहीतः ॥

दुंदुभेरित्यनादरे षष्ठी । ग्रहणशब्दइह निरोधपरः । उपादाननिरोधयोर्द्वयोरपि ग्रहणशब्दवाच्यत्वात् । यथा गृहीतानि पुष्पाणि गृहीताः श्रोतार इति । यथादुंदुभौ हन्यमाने ततो निःसरतः शब्दान्निरोद्धुं शक्नुयात् । कथं तर्हि निरुणद्धीत्यत्राह । दुंदुभेस्तुग्रहणेन दुंदुभ्याघातस्य वा शब्दो गृहीतः । दुंदुभिनिरोधेन तदाहंतृपुरुष निरोधेन वा शब्दानिरुत्ध्यंते। भेरीदंडयोरन्यतरनिरोधेन संयोगनिरोधद्वारा शब्दानिरुध्यंते । एवमिंद्रियेषु व्याप्रियमाणेषु बाह्यार्थज्ञानं दुर्निरोधम् । अतो विषयापसारणेन वा इंद्रियनिरोधेन वा परमात्मसाक्षात्कारविरोधिबाह्यार्थज्ञानं निरुत्ध्यते इत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् ॥

स यथा शंखस्य ध्मायमानस्य नबाह्यांच्छब्दाञ्च्छक्नुयाद्ग्रहणाय शंखस्य तु ग्रहणेन शंखध्मानस्य वा शब्दोगृहीतः। स यथा वीणायै वाद्यमानायै नबाह्यांच्छब्दाञ्च्छक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावाद्यस्य वा शब्दो गृहीतः॥

अत्र वीणाया इति चतुर्थी षष्ठ्यर्थे[1]। छांदसोविभक्तिव्यत्ययः। सामान्येनोक्तं कारणत्वं प्रपंचयति॥

स यथाऽऽर्द्रैधाग्नेरभ्याहितात्पृथक्धूमाविनिश्चरंति।

एधशब्द अकारांतेइंधनवाची[2]। आर्द्रैधाग्निग्रहणं निमित्तोपादानयोर्ज्ञापनार्थम्। अग्निर्हिधूमोत्पत्तौ निमित्तम्। इंधनंतदुपादानम्। अभ्याहितादाध्मानवीजनादिना प्रवर्त्तितादित्यर्थः। पृथग्विधाधूमानिर्गच्छंतीत्यर्थः॥

एवंवारे अस्य महतो भूतस्य निश्वसितमेतत्॥

महतोभूतस्य परमात्मनोनिश्वसितम्। अनायासेनोद्गतमेतद्वक्ष्यमाणमित्यर्थः। किंतदित्यत्राह॥

ऋग्वेदोयजुर्वेदः सामवेदोथर्वांगिरस इतिहासपुराणं विद्योपनिषदः श्लोकः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निश्वसितानि॥

इतिहासो[3]रामायणादिः। पुराणं विष्णुपुराणादि। विद्याः चतुः षष्टिविद्याः। उपनिषदः प्रसिद्धाः। श्लोकाः स्मृतिरूपाः। सूत्राणि ब्रह्मसूत्रादीनि। अनुव्याख्यानानि भाष्यव्याख्यानानि। व्याख्यानानि भाष्य-

१. "चतुर्थ्यर्थेबहुलंछंदसि। २। ३। ६२॥" इतिसूत्रेणेतिशेषः। २ इदमेधोदकस्योपस्कृतइत्यत्र एधाःपक्ष्यंतीत्यादि भाष्यनिर्देशेनशब्देन्दुशेखरेनिरूपितम्। ३ एतेषामितिहासादीनांशांकरभाष्योक्तरीत्यावेदपरत्वस्वीकारेतु दयानंदिनएवविजयिनोभवेयुरितिज्ञेयम्।

रूपाणि । एतानि सर्वाणिभगवतोनिश्वसितानि । अयत्नेनतदुद्ग-तानीत्यर्थः । यद्यपि सूत्रस्मृतिपुराणादयोव्यासाद्युद्गता इति पुराणेषु प्रसिद्धिः । तथापि तेषांभगवदंगत्वादद्भवन्निश्वसितोक्ति-रुपपद्यत इतिद्रष्टव्यम् । अत्रवाचकशब्दसृष्टिमात्रमुक्तं षष्ठे मैत्रे-यीब्राह्मणेतु । इष्टंहुतमाशितंपायितमित्यादिना भोग्यभोगस्थान-भोक्तृवर्गरूपवाच्यसृष्टेरुक्तत्वात् । अनुक्तस्यान्यतोग्राह्यत्वादत्रा-पिवाच्यसृष्टिरुक्तेतिद्रष्टव्यम् । अनेनपूर्वसामान्यतोनिर्दिष्टंजगत्का-रणत्वंविवृतं भवति । सयथादुंदुभेर्हन्यमानस्येत्यादिना परोपा-सनोपकरणभूतकरणग्रामनियमनमुक्तं विशदयति ॥

सयथासर्वासामपांसमुद्रएकायनमेवंसर्वेषांस्पर्शा-नांत्वगेकायनम् ॥

समुद्रस्यापामयनत्वंनामतदुपादातृत्वमेव । एवंचस्पर्शायतनत्वं नाम तदुपादातृत्वम् । ततश्चायमर्थः । यथासमुद्रोभूयसीरपो गृह्णाति । एवंत्वगिंद्रियमसंख्याकान्स्पर्शविशेषान्गृह्णाति । तत-श्चत्वगिंद्रियस्य स्पर्शविषयव्यापाराअनंताइत्यर्थः । एवमुत्तरत्रा-पिद्रष्टव्यम् ॥

एवꣳसर्वेषाꣳरसानांजिव्हैकायनमेवं सर्वेषांगंधा-नांनासिकैकायनमेवꣳसर्वेषाꣳरूपाणांचक्षुरेकायन मेवꣳसर्वेषाꣳशब्दानांश्रोत्रमेकायनमेवꣳसर्वेषाꣳसं कल्पानांमनएकायनमेवꣳसर्वासांविद्यानाꣳहृदयमे-कायनम् ॥

अवस्थाविशेषविशिष्टंमनोहृदयमित्युच्यते ॥

एवꣳसर्वेषांकर्म्मणाꣳहस्तावेकायनमेवꣳसर्वेषा-

मानंदानामुपस्थएकायनमेवꣳसर्वेषांवेदानांवागेकायनम् ॥

स्पष्टोर्थः । ततश्चैकैकेंद्रियवृत्तिविशेषाअनंताः । ततश्चात्मसाक्षात्कारार्थिना एतेवृत्तिविशेषानिरोद्धव्याइत्यभिप्रायः । ततश्चसयथादुंदुभेर्हन्यमानस्येत्यनेनोक्तब्रह्मोपासनोपयोगिकरणग्रामनियमनं विवृतंभवति । अथ सर्वावस्थास्वपिजीवस्वरूपस्य परमात्मनिष्ठतया स्वातंत्र्याभावज्ञापनाय जीववाचिशब्देनपरमात्मानं निदर्शयन्नमृतत्वोपायप्रवृत्तिप्रोत्साहनाय भूतसंघातात्मकशरीरजन्ममरणानुविधायिनः संसरतोजीवस्यापरिच्छिन्नज्ञानैकाकारतामुपपादयति ॥

सयथासैंधवखिल्यउदकेप्रास्त उदकमेवानुविलीयेत नहास्योद्ग्रहणायैवस्यात् यतोयतस्त्वाददीतलवणमेव ॥

सैंधवखिल्यः लवणखंडः । खिलएव खिल्यः स्वार्थेयत् । यथासैंधवशकलमुदके निक्षिप्तमुदकमनुप्रविश्यलीयते एवमस्यविलीनस्य लवणस्योद्ग्रहणायोदकात्पृथक्कृत्यगृहीतुंयथानैवकोपिशक्तःस्यात । तच्चोदकंयथायतोयतः यस्माद्यस्मात्प्रदेशान्मध्यतः पार्श्वतोवा आददीततत्तोयंलवणमेवभवति ॥

एवंवा अरे इदंमहद्भूतमनंतमपारं विज्ञानघन[1] एवैतेभ्योभूतेभ्यः समुत्थाय तान्येवानुविनश्यति ॥

१ नन्वत्र विज्ञानघन एवेत्यवधारणेन "सयथासैंधवघनोऽनंतरोऽवाह्यः कृत्स्नोरसघनएव" इत्यन्यत्राप्युक्तत्वेनचेतरगुणदरिद्रं ज्ञानस्वरूपमेवात्मस्वरूपमितिप्रतीयते इतिचेत् । सत्यम् । यथैतच्छ्रुतिबलेन ज्ञानस्वरूपत्वमंगीक्रियते तथापहतपाप्मत्वादिप्रतिपादकश्रुतिबलेन तद्गुणविशिष्टत्वमप्यंगीकरणीयम् । दृष्टांतेपिरूपत्वगुरुत्वादयो यथाप्रमाणप्रतिपन्नास्तथात्रापीतिनकोपिदोषः । निरूपितंचैतत् "एवमप्युपन्यासात् । ४ । ४ । ७ ॥" इतिसूत्रेश्रीभाष्येश्रीरामानुजमुनिभिः ॥

एवमेवैतन्महद्भूतमनंतमपरिच्छेद्यम्।अपारंगुणतोप्यपरिच्छेद्यम्। ब्रह्मविज्ञानघनएवजीवशरीरकतयाएतेभ्योभूतेभ्यउत्थायतान्येवानुविनश्यति। भूतेषूत्पद्यमानेषुस्वयमुत्पद्यमानस्तेषु नश्यत्सु अनुपश्चात्स्वयंनश्यतीत्यर्थः। देहोत्पत्तिविनाशानुविधाय्युत्पादविनाशवान् भवति। विनाशोनामात्यंतज्ञानसंकोचःउत्पत्तिर्नामविकाशप्रादुर्भावः॥

## नप्रेत्यसंज्ञास्तीति॥

प्रेत्यचरमदेहवियोगंप्राप्य मोक्षदशायांस्वाभाविकापरिच्छिन्नज्ञानसंकोचाभावेन नसंज्ञास्ति।समित्येकीकारे।ज्ञाधातोर्ज्ञानमर्थः।ततश्चभूतसंघातेनैकीकृत्यज्ञानंसंज्ञाशब्दार्थः।आमोक्षंदेहात्मभ्रमोनुवर्त्ततइतिभावः। नचमहद्भूतमनंतमपारमितिनिर्दिष्टस्यैव ब्रह्मणोविज्ञानघनएवैतेभ्योभूतेभ्यः समुत्थायेतिजीवत्वसंसारित्ववेदनंमुख्यमेवास्तु। विज्ञानघनः जीवशरीरकइतिकुतोव्याख्यायतइतिवाच्यम्। निरनिष्टोनिरवद्यइतिश्रुतिप्रतिपन्नस्य परमात्मनः संसारित्वासंभवात्। मोक्षधर्म्मे जनकयाज्ञवल्क्यसंवादे। "अन्यश्चराजन्सपरस्तथान्यः पंचविंशकः। तत्स्थत्वादनुपश्यंतिह्येक एवेतिसाधवः" इति शरीरशरीरिणोर्भेदेपिशरीरांतस्थितस्यशरीरिणएकत्वादयमेकः पुरुषइतिव्यवहारवदंतरवस्थितिनिबंधनः प्रकार्य्यैक्यविषयो[1]भेदव्यवहारइत्युक्तम्। ततश्चजीवस्यपरमात्मशरीरतयातद्वाचिनाविज्ञानघनशब्देन परमात्मनोभिधानंतद्धर्म्मभूतोत्पत्तिविनाशादिनातद्धर्म्मत्त्वंचनविरुद्धमितिद्रष्टव्यम्। नचोत्थानविनाशयोः सद्वारविशेषणत्वे आवश्यकेविज्ञानघनत्वस्यपरमात्मनि साक्षादेवसंभवात् विज्ञानघनशब्दस्यजीववाचित्वमाश्रित्य विज्ञानघनशब्देन जीवशरीरकपरमात्माभिधानाश्रयणक्लेशः "अवस्थितेरितिकाशकृत्स्नः।

१ जीवैक्यविषयः।

१।४।२१॥" इतिसूत्रभाष्येकुतोनुभूयतइतिवाच्यम्। परमात्मनः स्वरूपेणोत्थानविनाशासंभवाज्जीवस्वरूपेणोत्थानविनाशस्यवक्तव्यत्वेन जीववाचिपदस्यकस्यचिदावश्यकत्वादन्यस्यचाभावाद्विज्ञानघनशब्दस्यजीववाचित्वसंभवाच्च विज्ञानघनशब्देनजीवशरीरकपरमात्माभिधीयत इत्युक्तौविरोधाभावात् ॥

साहोवाचमैत्रेयी अत्रैवमाभगवानमूमुहन्नप्रेत्यसंज्ञास्तीति ॥

नप्रेत्यसंज्ञास्तीतिवाक्ये एवमामां अमूमुहत्। मुहेणौचङ्। मोहयतिस्मेत्यर्थः। विज्ञानघनशब्दितस्यज्ञानैकाकारस्यात्मनःमुक्तौसंज्ञाभावोविरुद्ध इतिमोहोमेसंवृत्तइतिभावः। यद्यपिसंज्ञाशब्दोदेहात्म्यैक्यभ्रांतिपर इतिनविरोधः। तथापितदभिप्रायानभिज्ञानान्मुह्यंतीमैत्रेय्येवमुक्तवतीतिद्रष्टव्यम् ॥

सहोवाचनवाअरेहंमोहंब्रवीम्यलंवा अरइदं विज्ञानाय ॥

नप्रेत्यसंज्ञास्तीति नाहंमोहंवचोब्रवीमि।इदंविज्ञानघनशब्दितमहद्भूतंपूर्वंनिर्दिष्टंप्रेत्यापिविज्ञानायालंज्ञातुंपर्याप्तम्। ततश्चमुक्तावपि ज्ञानमस्तिज्ञानिनएवसतोमुक्तस्य नप्रेत्यसंज्ञास्तीतिपूर्वनिर्दिष्टसंज्ञाभावोदेहात्मैक्यविषयकभ्रांत्यभावात्मेतिभावः। एवंमुक्तौदेहात्मभ्रमनिवृत्तिमुक्त्वा स्वनिष्ठताभ्रमनिवृत्तिंप्रतिपादयति ॥

यत्रहिद्वैतमिवभवति तदितरइतरंजिघ्रति ॥

यत्र यस्यामवस्थायांद्वैतमिवभवतिस्वनिष्ठतया परमात्मनःपृथगिवभवतिस्वतंत्रइवभवतीति यावत्। स्वातंत्र्यस्याप्रामाणिकत्वद्योतनार्थः इवशब्दः।तदितरः इतरंजिघ्रति। तत् तदाइतरः भिन्नात्मकः

इतरंभिन्नात्मकंजिघ्रति । अत्रेतरेणेत्यध्याहार्यम् । उत्तरत्रतत्केन कंजिघ्रेदितिदर्शनात् । इतरेणस्वतंत्रेण करणेनजिघ्रतीत्यर्थः ॥

तदितरइतरंपश्यति तदितरइतरमभिवदति तदितरइतरꣳशृणोति तदितरइतरंमनुते तदितरइतरंविजानाति यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंजिघ्रेत् तत्केनकंपश्येत् तत्केनकमभिवदेत् तत्केनकंशृणुयात् । तत्केनकंमन्वीत तत्केनकंविजानीयात् ॥

यत्रयदासर्वंवस्तुएकात्मकमेवाभूत्तदाकेनभिन्नात्मकेनकरणेनकं भिन्नात्मकंजिघ्रेदित्यर्थः । इतरशब्दः सर्वत्रस्वतन्त्रवस्तुपरः ।एवंसर्वत्रद्रष्टव्यम् । अत्रसदैकात्मकस्यजगतः कालभेदेनभिन्नाभिन्नात्मकत्वासंभवात् । आत्मैवाभूत् एकात्मकत्वेनज्ञातमभूदित्येवार्थः । यस्यात्मभेदप्रतीतिरस्ति तस्यकर्तृकर्म्मकरणेषुभिन्नात्मकत्वप्रतीतिरनुवर्त्तते । यस्यात्मभेदप्रतीतिर्यदासर्वथानास्ति तदाविरुद्धधर्मवत्तयाप्रतीतेष्वपिकर्तृकर्मकरणेषुभिन्नात्मकतयाप्रतीतिः सर्वथानास्तीतिपर्यवसितोर्थः । शिष्टंस्पष्टम् ॥

येनेदंसर्वंविजानातितंकेनविजानीयात् ॥

येनपरमात्मना प्रसन्नेनानुगृहीतः सर्वज्ञोभवति तंपरमात्मानं केनहेतुनाविजानीयात् ॥

विज्ञातारमरेकेनविजानीयादिति ॥

अत्रविज्ञातृशब्देन प्रक्रमोदितजगत्कारणत्वाक्षिप्तसार्वज्ञाश्रयः परमात्मैवोच्यते । तादृशंविज्ञातारं सर्वज्ञंपरमात्मानंप्रक्रमोदितध्यानंविना केनकेवलयज्ञदानाद्युपायेनविजानीयात् । उक्तंचव्यासार्यैः । परमात्मप्रसादादृते तस्यदुरवगमत्वपरंकेनविजानीयादितिपूर्ववाक्यम् ।उपासनातिरिक्तकेवलयज्ञदानाद्युपायांतरनिषेधपरंविज्ञाता-

रंकेन विजानीयादित्युत्तरवाक्यमिति । ततश्च परमात्मप्रसाद परमात्मोपासनयोर्द्वयोरप्यावश्यकत्वं द्वाभ्यां वाक्याभ्यां प्रति पादितंभवति । अत्र परमात्मोपासनतत्प्रसादसाध्यापरमावगतिः किंरूपेतिचिंतायां दर्शनसमानाकारध्यानरूपावगतिरेव प्रसादोपासनसाध्यत्वेन वाक्यद्वयप्रतिपन्नेतिकेचिदूचुः । मुक्तिकालीनदेशविशिष्टब्रह्मसाक्षात्कारलक्षणेत्यपरे । नोभयथापिविरोधंपश्यामः ।

इति शब्दः प्रतिवचनसमाप्तौ ।

इति ब्रह्मसूत्रेषु प्रथमाध्यायः समाप्तः ॥ १ ॥

---

## तदंतरप्रतिपत्तौ रंहतिसंपरिष्वक्तः प्रश्ननिरूपणाभ्याम् । ३ । १ । १ ॥

छांदोग्येपंचम प्रपाठके तृतीयखण्डे ॥

प्रकृतिविविक्तजीवयाथात्म्यविषयां पंचाग्निविद्यां संसृतिवैराग्यायप्रस्तौति ॥

श्वेतकेतुर्हारुणेयः पंचालानाꣳसमितिमेयाय ॥

अरुणस्यापत्यमारुणिः तस्यापत्यमारुणेयः । पंचालानांजनपदानांसमितिंसभामाजगाम ॥

तꣳह प्रवाहणोजैवलिरुवाच ॥

जीवलस्यापत्यंजैवलिः नामतः प्रवाहणः पंचालराजउक्तवान् ॥

कुमारानुत्वाशिषत्पितेति ॥

हेकुमार त्वां तवपिता अन्वशिषत्किम् । अनु शिष्टवान्किमित्यर्थः । इतरआह ॥

अनुहिभगवइति ॥

हेभगवः पूजार्ह । अनुशिष्टोस्मीति । एवमुक्तो जैवलिः पप्रच्छ ॥

वेत्थयदितोधिप्रजाः प्रयन्तीति ॥

प्रजाइतोधि इतऊर्द्धं यत्प्रयंति तज्जानीषे किम् । कर्मिणां गंतव्य देशःकइत्यर्थः ।

इतरआह ॥

नभगवइति ॥

जानइतिशेषः । पुनः पृच्छति ॥

वेत्थयथापुनः पुनरावर्त्तन्ता ३ इति ॥

कर्म्मिणांपुनरावृत्तिप्रकारः कइत्यर्थः ।

इतरआह ॥

नभगवइति ॥

पुनः पृच्छति ॥

वेत्थयथासौलोकोनसंपूर्यतइति ॥

अस्माल्लोकादनवरतंगच्छद्भिः पुरुषैः कस्माद्धेतोः द्युलोकोनसंपूर्यैतइत्यर्थः । वाजसनेयके समानप्रकरणे । वेत्थयथासौ लोकः एवं बहुभिः पुनः प्रयद्भिः नसंपूर्यतइतिश्रवणात् । अमुष्यलोकस्याप्राप्ता कइतितु प्रश्नस्यफलितार्थः ।

इतरआह ॥

नभगवइति ॥

पुनः पृच्छति ॥

वेत्थयथादेवयानस्यपितृयाणस्यचव्यावर्त्तनाइति॥

देवयानपितृयाणयोर्व्यावर्त्तनेभेदकेरूपेकिंवेत्थेत्यर्थः । केनप्रकारेणतयोर्भेदइत्यर्थः ।

इतरआह ॥

नभगवइति ॥

पुनः पृच्छति ॥

वेत्थयथापंचम्यामाहुतावापः पुरुषवचसोभवंतीति ॥

आपइतिभूतांतराणामप्युपलक्षणम् । भूतसूक्ष्माणि पंचम्यामाहुतौयेनप्रकारेण पुरुषवचसः, पुरुषइतिवचोयासांताः पुरुषवचसः । पुरुष शब्दाभिलप्याइत्यर्थः । कस्यपंचम्यामाहुतावित्यपेक्षायांपुरुषवचस्त्वभवनकर्तृतयानिर्दिष्टाः आपएवहूयमानतयासंबध्यंते । असन्निहितार्थांतरकल्पनेगौरवात् । ततश्चापांपंचम्यामाहुतावापः पुरुषवचसोभवंतीत्यर्थः । ततश्चापामेवपंचस्वप्याहुतिषु हूयमानत्वमितिसिध्यतीति द्रष्टव्यम् । इतरआह ॥

नैवभगवइति ॥

रंहत्यधिकरणे । ३ । १।१ ॥ भगवताभाष्यकृताकर्म्मिणां गंतव्यदेशं पुनरावृत्तिप्रकारंदेवयानपितृयाणपथव्यावर्त्तने अमुष्यलोकस्याप्राप्तारंचवेत्थेति पृष्ट्वावेत्थयथापंचम्यामाहुतावापः पुरुषवचसोभवंतीतिपप्रच्छेति भाषितम् ॥

अथनुकिमनुशिष्टोऽवोचथाः योहीमानिनविद्यात्कथंसोनुशिष्टोब्रवीतेति ॥

किंकस्मादनुशिष्टोस्मीत्युक्तवानसि योहीमान्यर्थजातानिन जानीयात् सकथमनुशिष्टोस्मीतिवदेत् । यद्वाकिमनुशिष्टः कमर्थमनुशिष्टइत्यर्थः ॥

स हाऽऽयस्तः पितुरर्द्धमेयाय ॥

सश्वेतकेतुः राज्ञाजैवलिना अयासितःसन्पितुरर्द्धस्थानमाजगाम ॥

त ँ होवाचाननुशिष्यवावकिलमाभगवानब्रवीदनुत्वाशिषमिति । पंच मा राजन्यबन्धुः प्रश्नानप्राक्षीत्तेषांनैकंचनाशकंविवक्तुमिति ॥

मामननुशिष्य समावर्त्तनकालेऽनुशासनीयानि सर्वाण्यननुशिष्यैवत्वामन्वशिषमितिभगवान्मांप्रत्यब्रवीत् राजन्यबंधुः, मां पंचप्रश्नानप्राक्षीत्।तेषांमध्येएकंचन, एकमपिप्रश्नंविवक्तुंविशिष्यवक्तुंनाशकं,नशक्तोस्मीतिपितरमुवाचेत्यर्थः । राजन्यावंधवोयस्यसराजन्यबंधुः राजन्यानांबंधुरितिवा । स्वयमराजन्यइत्यर्थः । राजन्याभासइतियावत् ॥

तꣳहोवाचयथा मां त्वंतदैतानवदः तथाहमेतेषांनैकंचनवेदयद्यहमिमानवेदिष्यंकथंतेन वक्ष्यमिति ॥

त्वंमांप्रतितदाऽऽगमनकाले एतान्प्रश्नान्यथाऽवदः तेषांनैकंचनाशकंविवक्तुमितियथोक्तवानसि तथाऽहमपितेषां मध्ये नैकमप्यज्ञासिषम् । यद्यज्ञासिषंते प्रियायपुत्राय समावर्त्तनकाले कुतोनावक्ष्यमिति ॥

सहगौतमोराज्ञोर्द्धमेयाय ॥

एवमुक्त्वागोत्रतो गौतमआरुणिः राजस्थानमाजगाम ॥

तस्मैहप्राप्तायार्हांचकार ॥

प्राप्तायगौतमायराजाऽर्हांपूजांचकारेत्यर्थः ॥

सहततः प्रातः सभागउदेयाय ॥

ततः प्रातःकालेराज्ञि सभागते सतिउदेयाय गौतमआजगाम।यद्वा भजनं भागः पूजा।तेनयुक्तः अर्घ्यादिभिः पूज्यमानः सभागतइत्यर्थः॥

तꣳहोवाचमानुषस्य भगवन् गौतम वित्तस्य वरं वृणीथाइति ॥

हेभगवन् गौतम मनुष्यवित्तसंबंधिवरं वृणीष्वेत्युवाचेत्यर्थः ॥

सहोवाचतवैवराजन्मानुषंवित्तं यामेवकुमारस्यांतेवाचमभाषथास्तामेवमेब्रूहीति ॥

हेराजन् मानुषंवित्तं तवैवतिष्ठतुमत्पुत्रस्यसमीपे पंचप्रश्नलक्षणां यांवाचमुक्तवानसि तामेवमेब्रूहीति ॥

सहकृच्छ्रीबभूवतꣳहचिरंवसेत्याज्ञापयांचकार ॥

एवमुक्तोराजा गौतमस्याप्रत्याख्येयतांज्ञात्वा कृच्छ्री दुःखितोबभूव । तंचगौतमंविद्यार्थेचिरंवसेत्याज्ञप्तवान् ॥

तꣳहोवाचयथामात्वंगौतमाऽवदः यथेयंनप्राक्त्वत्पुराविद्याब्राह्मणान्गच्छतितस्मादुसर्वेषुलोकेषुक्षत्रस्यैवप्रशासनमभूदिति ॥

हेगोतमत्वं मांयथाऽवदः तथाकरिष्यामीतिशेषः । इयंवक्ष्यमाणाविद्या पुराविद्यमानापित्वत् त्वत्तः प्राक्ब्राह्मणान्नप्राप्तवती।तस्मात्सर्वेषुलोकेषुक्षत्रियजातेरेवैतद्विद्योपदेष्टृत्वम् । अतोब्राह्मणेष्वेतद्विद्याया अभावात् ब्राह्मणानामेवसमीपंगमिष्यामीतिबुद्धिर्नकार्या । चिरवासाऽऽज्ञापनमपिसोढव्यमितिभावः ॥

तस्मैहोवाच ॥

चिरकालमुषितवतेतस्मैराजा विद्यामुपदिदेशेत्यर्थः । वेत्थयथा पंचम्यामाहुतावापः इतिपंचमप्रश्नप्रतिवचनस्य इतरप्रश्नप्रतिवचनानुकूलत्वात्प्रथमतस्तदेवाह ॥

असौवावलोकोगौतमाग्निस्तस्यादित्यएवसमिद्रश्मयोधूमःअहरर्चिःचंद्रमाअंगाराः नक्षत्राणिविष्फुलिंगाः । १ । तस्मिन्नेतस्मिन्नग्नौदेवाः श्रद्धांजुह्वतितस्याआहुतेः सोमोराजासंभवति।पर्जन्योवावगौतमाग्निस्तस्यवायुरेवसमिदभ्रंधूमोविद्युदर्चिरशनिरंगाराःह्रादुनयोविष्फुलिंगास्तस्मिन्नेतस्मिन्नग्नौदेवाः सोमंराजानं

जुह्वति तस्या आहुतेर्वर्षं संभवति। पृथिवीवावगौतमाग्निस्तस्यसंवत्सरएवसमिदाकाशोधूमोरात्रिरर्चिर्दिशोंगाराः अवांतरदिशोविष्फुलिंगाः। तस्मिन्नेतस्मिन्नग्नौदेवावर्षंजुह्वतितस्याआहुतेरन्नꣳसंभवति। पुरुषोवावगौतमाग्निस्तस्यवागेवसमित्प्राणोधूमोजिह्वार्चिश्चक्षुरंगाराःश्रोत्रंविष्फुलिंगाः।तस्मिन्नेतस्मिन्नग्नौदेवाअन्नंजुह्वतितस्याआहुते रेतःसंभवति। योषावावगौतमाऽग्निः तस्याउपस्थएवसमित् यदुपमंत्रयतेसधूमोयोनिरर्चिर्यदंतःकरोतितेंगाराःअभिनन्दाविष्फुल्लिंगाः। तस्मिन्नेतस्मिन्नग्नौदेवारेतोजुह्वतितस्याआहुतेर्गर्भःसंभवति॥

इतिपर्जन्यपृथिवीपुरुषयोषिद्रूपेष्वग्निषुपंचसुश्रद्धासोमवृष्टचन्नरेतोरूपाःपंचाहुतयः प्रदर्शिताः। देवाइन्द्रियाणि। तेषांहोमकर्तृत्वमिंद्रियार्ज्जितकर्म्मणांद्युलोकादिगमनहेतुत्वादितिद्रष्टव्यम्॥

इतितुपंचम्यामाहुतावापःपुरुषवचसोभवंतीति॥

इत्युक्तप्रकारेणरेतोरूपायांपंचम्यामाहुतावप्छब्दितानिभूतसूक्ष्माणिपुरुषशब्दाभिलपनीयानिभवंतीत्यर्थः। इतिशब्दः पंचमप्रश्नप्रतिवचनसमाप्तिद्योतनार्थः॥

सउल्बावृतोगर्भोदशवामासानंतःशयित्वायावद्वाथजायतेसजातोयावदायुषंजीवति। तंप्रेतंदिष्टमितोग्नयएवहरंतियतएवेतोयतःसंभूतोभवति॥

सगर्भउल्बेनजरायुणावेष्टितः सन्दशमासान्वा यावद्वानववाएकादशवाद्वादशवा मातुःकुक्षौशयित्वा अथानंतरंजायते जातश्चयाव-

दायुषंजीवति। आयुरवसानएवतंप्रेतंपुरुषं दिष्टंपरलोकायनिर्दिष्टम्। यद्वादिष्टंकर्म्मानुसृत्ययतोद्युलोकपर्जन्याद्यग्नेरिहागतः।यतश्चयोषिद्रूपाग्नेरुत्पन्नः।तस्माअग्नयएवदेवाहरंति।ततश्चद्युपर्ज्जन्यपृथिवीपुरुषयोषित्सुपुनरप्येवं भ्रमतीत्यर्थः। अयं चोपन्यासोवैराग्य हेतोः। कष्टंहि मातुः कुक्षौ मूत्रपुरीषवातपित्तश्लेष्मादिपूर्णे तदनुलिप्तस्य गर्भस्योल्बाशुचिपटावृतस्य शुक्रशोणितबीजस्य मातुरशितपीतरसानुप्रवेशेनविवर्द्धमानस्य निरुद्धवीर्यबलशक्तितेजःप्रज्ञाचेष्टस्य बहुकालंशयनम्। ततोयोनिद्वारेण पीड्यमानस्य कष्टतरा निःसृतिः।कर्म्मणोपात्तंयावदायुस्तावदेवजीवनंपुनरपिघटीयंत्रकुंडिकान्यायेनारोहणावरोहणलक्षणं भ्रमणंश्रूयमाणं वैराग्यमापादयति। अतएतदुपन्यस्तमितिद्रष्टव्यम्॥

वेत्थयथादेवयानस्यपितृयाणस्यचव्यावर्त्तना इतिचतुर्थप्रश्नंप्रतिवक्ति॥

तद्यइत्थंविदुर्येचेमेरण्ये श्रद्धातपइत्युपासते॥

प्राक्प्रस्तुतस्यसंसरतोजीवस्य स्वरूपंतदित्यनेन परामृश्यते। तत्प्रत्यगात्मस्वरूपंये इत्थमुक्तप्रकारेणद्युपर्ज्जन्यपृथिवीपुरुषयोषित्सुश्रद्धासोमवृष्टयन्नरेतःशरीरकतयादेहादिविलक्षणतयाप्रकृतिविविक्ततयाचयेविदुरित्यर्थः। अत्रब्रह्मात्मकतयाचेत्यपियोजनीयम्। भाष्यकृता "अप्रतीकालंबनात्०।४।३।१४॥" इतिसूत्रे पंचाग्निविदोप्यर्च्चिरादिना गतिश्रवणादर्च्चिरादिनागतस्यब्रह्मप्राप्त्यपुनरावृत्तिश्रवणाच्च, अतएवतक्रतुन्यायात्प्रकृतिविनिर्मुक्तब्रह्मात्मत्वानुसंधानंसिद्धमिति भाषितम्। येचेमेऽरण्येस्थित्वाश्रद्धांपुरस्कृत्यतपःशब्दितंब्रह्मोपासतइत्यर्थः। वाजसनेयकेसमानप्रकरणे "श्रद्धासत्यमुपासते" इति श्रवणात्सत्यशब्दस्य ब्रह्मपरत्वात् तपः शब्दोपिब्रह्मपरः॥ "अनियमः सर्वे-

षाम्० । ३ । ३ ।३२॥" इत्यधिकरणे भगवताभाष्यकृता तद्यइत्थंविदुर्यएवमेतद्विदुरितिपंचाग्निविद्यानिष्ठान्येचेमइत्यादिना श्रद्धापूर्वकं ब्रह्मोपासीनांश्चोद्दिश्यार्चिरादिकागतिरुपदिश्यते । सत्यंज्ञानमनंतंब्रह्मसत्यंत्वेवविजिज्ञासितव्यमितिसत्यशब्दश्च ब्रह्मणिप्रसिद्धइतिभाषितम् । उक्तंचव्यासार्यैः "परमंयोमहत्तपः"इत्यादिषु तपःशब्दस्य ब्रह्मपरत्वंदृष्टमिति । वाजसनेयकेश्रद्धांसत्यमिति श्रद्धाशब्दस्यद्वितीयांतत्वश्रवणादिहापिश्रद्धाशब्दोद्वितीयांतः । छांदसत्वात्सुपांसुलुगिति सुपोलुक् । ततश्च पुरस्कृत्येत्यध्याहारः । श्रद्धां पुरस्कृत्य ब्रह्मोपासतइत्यर्थः । इतिस्त्वविवक्षितः । अथवैवकारोत्राध्याहर्त्तव्यः । ब्रह्मेत्येवोपासतइत्यर्थः । ततश्चाब्रह्मोपासनव्यावृत्तिफलकोयमितिशब्दोद्रष्टव्यः । यद्वा श्रद्धातपःशब्दयोः प्रसिद्धएवार्थः । श्रद्धातपःपरायणानां च ब्रह्मविद्यानिष्ठत्वमर्थसिद्धम् । ततश्चब्रह्मविद्यानिष्ठाइत्यर्थः फलति । अयंचार्थस्तदप्यविरुद्धं ना ( अ ) र्थत्वादपि शाब्दत्वंसंभवद्युक्ततममिति वदतां व्यासार्याणामनुमतएव ॥

तेर्चिषमभि संभवंत्यर्चिषोहरन्ह आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेतिमासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चंद्रमसं चंद्रमसोविद्युतम् । तत्पुरुषोऽमानवः सएनान् ब्रह्मगमयति ॥

अत्रार्चिरादिशब्दास्तत्तदभिमानिदेवतापराः । तत्पुरुषोवैद्युतपुरुषः अमानवः असंसारी ब्रह्मलोकादागत्यब्रह्मलोकं प्रापयतीत्यर्थः । अमानवः सएत्यब्रह्मलोकान् गमयतीति श्रुत्यंतरेश्रवणात्॥

एषदेवयानः पंथाइति ॥

स्पष्टोर्थः ॥

अथय इमे ग्रामे इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसंभवन्ति ॥

येपुरुषाः ग्रामएवस्थित्वेष्टंयागादि, पूर्त्तंखातादि, दत्तं दानम् , इति शब्दस्तज्जातीयोपवासादिकर्म्मांतरपरः।यागदानहोमादीनि कर्माणि येऽनुतिष्ठन्तीत्यर्थः । उक्तप्रकारेणानुतिष्ठंतीत्यर्थ इतिव्यासार्यवचनस्याप्ययमेवार्थः। श्रुतौ पूर्वमनुष्ठानप्रकारानुक्तेः । यद्वा श्रद्धापूर्वकत्वरूपोक्तप्रकारवाची इतिशब्दः । तेधूममभिसंभवंतीत्यर्थः ॥

धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षड्दक्षिणैति मासांस्तान् ॥

अत्रापि धूमादिशब्दास्तत्तदभिमानिदेवतापराः। दक्षिणांदिशमादित्य एति "दक्षिणादाच्। ५ । ३ । ३६ ॥" इत्याजंतोयं शब्दः । तान्दक्षिणायनमासाभिमानिनीर्देवताः प्रतिपद्यन्तइत्यर्थः ॥

नैतेसंवत्सरमभिप्राप्नुवंति ॥

एतेकेवलेष्टादिकारिणः दक्षिणायनमासान् प्राप्यापि विद्वांस इवनसंवत्सरं प्राप्नुवंतीत्यर्थः॥

पुनः किंप्राप्नुवंतीत्यत्राह ॥

मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चंद्रमसम् ॥

स्पष्टोर्थः।वेत्थयदितोधिप्रजाःप्रयंतीतिप्रथमःप्रश्नःप्रत्युक्तोभवति ॥

एषसोमोराजा ॥

अत्रैषइत्यनेन नाभिसंभाव्यश्चंद्रमाः परामृश्यते । तस्यसोमराजभावोपदेशस्य व्यर्थत्वात् । अपित्विष्टादिकारी अभिसंभवितापरामृश्यते । तस्याआहुतेः सोमोराजासंभवतीति पंचाग्निविद्यावाक्यानुसारात् । स्वर्गभोगयोग्यदिव्यदेहयुक्तोभवतीत्यर्थः ॥

## तद्देवानामन्नंतंदेवाभक्षयंति ॥

इष्टादिकारिणामाजानसिद्धदेवकिंकरत्वादन्नत्वभक्ष्यत्ववादः । सूत्रितंच “ भाक्तंवानात्मवित्त्वात्० । ३ । १ । ७॥ ” इति ॥

## तस्मिन्यावत्संपातमुषित्वा ॥

संपतत्यनेनसंपातः कर्म्मशेषः । यावत्कर्मशेषमुषित्वेत्यर्थः । यावच्छब्दः साकल्यार्थः । साकल्यंच फलप्रदानयुक्तकर्म्मविशेषविषयम् । नतुसर्वकर्म्मविषयम् ॥

वेत्थयथापुनरावर्त्ततइतिद्वितीयंप्रश्नंप्रतिवक्ति ॥

## अथैतमेवाध्वानंपुनर्निवर्त्ततेयथेतम् ॥

अथानंतरमेतमेव धूमादिमार्गं यथेतंयथागतंपुनर्निवर्त्तते । धूमरात्र्यपरपक्षदक्षिणायनषण्मासपितृलोकाकाशक्रमेणारोहणात्तेनैवक्रमेणावरोहणे प्राप्ते तत्रविशेषमाह ॥

## आकाशमाकाशाद्वायुम् ॥

यथाकाशाच्चंद्रमभिसंभवंत्येवंचंद्रमसआकाशमभिसंभवंति । आरोहणावरोहणयोराकाशाभिसंभवस्त्वविशिष्टइतिभावः ॥ आकाशाद्वायुमभिसंभवतीतिशेषः। वायुर्भूत्वाधूमोभवतीत्युत्तरत्र श्रवणादत्राप्यवरोहन्नाकाशोभवतिवायुर्भवतीत्येवार्थः । अवरोहताचाकाशादिभवनं न तत्तच्छरीरकत्वम्।सर्गादिकालमारभ्याऽऽप्रलयमाकाशाद्यभिमानिदेवतानामन्यासांक्लृप्तानांसत्त्वेनप्रतिक्षणमवरोहतामाकाशाद्यभिमानिदेवतात्वानुपपत्तेस्तत्साहश्यमेवार्थः । या आपश्चंद्रमंडलेशरीरमारब्धवत्यस्तासां कर्म्मक्षये द्रवीभूतानामाकाशगतानां भेदकाकारप्रहाणेनाकाशसादृश्ये तदुपश्लिष्टाजीवाअप्याकाशसमा इत्युच्यंते। ताश्चापः इतश्चामुतश्चनीयमाना वायुसमाभवं-

ति। ततश्चतत्संश्लिष्टोजीवोपि वायुर्भवतीत्युच्यते । एवमुत्तरत्रापिद्रष्टव्यम् ॥

वायुर्भूत्वाधूमोभवतिधूमोभूत्वाभ्रंभवत्यभ्रंभूत्वामेघोभवति ॥

अपोबिभर्तीत्यभ्रम्। मूलविभुजादित्वात्कः। मिह सेचनइतिधातोः पचाद्यच्प्रत्यये न्यंक्वादित्वात्कुत्वेमेघइति।ततश्चाभ्रशब्देन जलधारणावस्थउच्यते। मेघशब्देनवर्षोन्मुखावस्थउच्यते । एवमेवभेदोव्यासार्यैरुक्तः ॥

मेघोभूत्वाप्रवर्षति ॥

मेघसंश्लिष्टोभूत्वा वर्षधारारूपेणभूमौपततीतिफलितार्थः ॥

तइहव्रीहियवाओषधिवनस्पतयस्तिलमाषाइतिजायंते

वर्षसंश्लिष्टभूतसूक्ष्मपरिष्वक्ताजीवा व्रीहियवादिरूपेण जायंते । अत्रतेनरूपेणजननं नाम न स्थावरभावप्रतिपत्तिः। स्थावरत्वप्राप्तिहेतुभूतकर्म्मणामिहाकीर्त्तनात् । किंतुजीवांतराधिष्ठितेषुव्रीह्यादिषु संश्लेषमात्रम्। सूत्रितंच "अन्याधिष्ठितेपूर्ववदभिलापात्। ३। १। २४॥" इति ॥

अतोवैखलुदुर्निष्प्रपतरम् ॥

अतः स्थावरादिभावादतिचिरेणनिर्गमनंभवति । अत्रखलंताद्दुर्निष्प्रपतशब्दादातिशायनिकेतरप्प्रत्ययेछांदसेतशब्दलोपेदुर्निष्प्रपतरमितिरूपम् । ततश्चातिशयस्य प्रतियोग्याकांक्षायां प्रागनुक्रांताकाशादीनां बुद्धौसन्निधानात्तेषामेवप्रतियोगित्वेनान्वयःस्यात् । ततश्चव्रीह्यादिष्वाकाशाद्यपेक्षया चिरावस्थानोक्त्याऽऽकाशादिष्ववस्थानस्य तदपेक्षयाल्पकालत्वंपर्यवस्यति। उक्तंचभगवताभाष्यकृताछांदसस्तशब्दलोपः दुर्निष्प्रपतरं दुःखनिष्क्रमणत-

रमित्यर्थइति । नच " तयोरेवकृत्यक्तखलर्थाः । ३ । ४ । ७० ॥ " इतिखलो भावकर्म्ममात्रविषयत्वात् पतेश्चाकर्म्मकत्वेन-भावार्थस्यैवपरिशिष्टत्वात् तत्रचभावार्थस्यप्रकर्षाभावात्तरपोदौर्लभ्यमितिशंक्यम् । शिश्येतरामित्यादिप्रयोगादभावार्थैपि प्रकर्षसंभवात् कर्त्रर्थपचाद्यजंतात्तरपः संभवाच्च भाष्यस्यनानुपपत्तिः।यद्वा, आतोयुच्।३।३।१२८॥छन्दसिगत्यर्थेभ्यः।३।३।१२९॥इतिच्छंदसि-विशेषविहितखलर्थयुजंतएवायंशब्दः । रेफरूपवर्णविकारःछांदसः ॥ नन्वस्यतरप्प्रत्ययत्वाभावेपूर्वनिर्दिष्टाकाशादिभ्योतिशयस्तेष्वचिरावस्थानंवाकथंसिध्येदितिचेन्न ॥ वैशब्दस्यावधारणार्थतयाऽतःशब्दितव्रीह्यादिभावादेवचिरनिष्क्रमणे कथिते ततः पूर्वनिर्दिष्टेभ्य आकाशादिभ्योचिरान्निष्क्रमणंसिद्ध्यति।तशब्दलोपश्छांदसइतिभाष्यस्यापि वर्णलोपेनवा वर्णविकारेणवा यथाकथंचित्साधुत्वंसमर्थनीयमित्यत्रतात्पर्यम् । व्रीह्यादयोहिगिरितटादुदकस्रोतसोह्यमानानदींप्राप्नुवंति । ततः समुद्रम् । ततोमकरादिभिर्भक्ष्यंते । तेप्यन्यैः । तत्रैवचमकरेणसहसमुद्रेविलीनाः समुद्रांभोभिर्जलधरैराकृष्टाः पुनर्वर्षधाराभिर्मरुदेशे शिलातलेवाहर्म्यैवापतितास्तिष्ठंति । कदाचिद्व्यालमृगादिपीताभक्षिताश्चान्यैः । तेप्यन्यैरित्येवंप्रकाराः परिवर्तेरन् । ततोदुर्निष्क्रमणत्वम् ॥

योयोह्यन्नमत्तियोरेतः सिंचतितद्भूयएवभवति ॥

अत्रस इत्यध्याहारः । सः व्रीह्यादिसंश्लिष्टोवरोहन् जीवः योन्नमत्तियोरेतः सिंचति पश्चात्तद्भवति । आकाशादिभाववद्रेतस्संभावोप्यौपचारिकः । रेतःसिग्योगीभवतीत्यर्थः । एवमेवव्यासार्यैरुक्तम् ॥

तद्यइहरमणीयचरणाअभ्याशो ह यत्तेरमणीयांयो-

निमापद्येरन्ब्राह्मणयोनिंवाक्षत्रिययोनिंवावैश्ययोनिं-वा ।अथयइहकपूयचरणाअभ्याशोहयत्तेकपूयांयोनि-मापद्येरन्श्वयोनिंवासूकरयोनिंवाचण्डालयोनिंवा ॥

तत्तेषुयेऽभ्याशोऽभ्यागंतारः । अभ्याङ्पूर्वादशेर्धातोः क्विबंताद्बहु-वचनांतोयंशब्दः । हेतिप्रसिद्धौ । यद्यदारमणीयचरणाःचर्यतइतिच-रणंकर्म रमणीयकर्माणः । भुक्तशिष्टपरिपक्वसुकृतकर्मयुक्ताभवंती-त्यर्थः।अत्रयदाशब्दानुरोधात् तदेत्यप्यध्याहर्तव्यम् । शिष्टंस्पष्टम् । कपूयचरणाः कुत्सितचरणाइत्यर्थः।भुक्तशिष्टकर्मानुसारिजन्मप्राप्नुवं-तीत्यर्थः । यथासौलोकोनसंपूर्यता ३ इतितृतीयंप्रश्नंप्रतिवक्ति ॥

अथैतयोः पथोर्नकतरेणचतानीमानिक्षुद्राण्यसकृदावर्तीनि भूतानिभवंति । जायस्वम्रियस्वेत्येतत्तृतीयँ-स्थानं तेनासौलोकोनसंपूर्यते ॥

अथशब्दः प्रतिवचनांतरोपक्रमेवर्तते । यानिभूतान्युक्तयोर्देवया-नपितृयाणयोर्मध्येकतरेणयेनकेनापि मार्गेणनगच्छंतिनागच्छंतिच तानीमानिभूतानिक्षुद्राणि दंशमशककीटादीन्यसकृदावर्तीनिसंति जायस्वम्रियस्वेतिभवंति । पुनःपुनर्जायंतेम्रियंतइत्यर्थः । सक्तू-न्पिबधानाःखादेत्ययमभ्यवहरतीत्यस्यपुनःपुनःपिबतिपुनःपुनःखाद तीत्यर्थः तद्वत् । "क्रियासमभिहारेलोट्लोटोहिस्वौवाचत-ध्वमोः । ३ । ४ । २ ॥" इतिपौनःपुन्यलक्षणक्रियासमभिहारे लोट्तध्वमोर्हिस्वादेशविधानाज्जायस्वम्रियस्वेतिरूपम् । "यथावि-ध्यनुप्रयोगः पूर्वस्मिन् । ३ । ४ । ४ ॥" "समुच्चयेसामान्य-वचनस्य । ३ । ४ । ५ ॥" इतिभवंतीतिसामान्यशब्दस्यानु-प्रयोगः । उक्तंचव्यासार्यैः पुरीमवस्कंदलुनीहिनंदनंमुषाणरत्नानि-हरामरांगनाइतिवदिति ॥

## इत्येतत्तृतीयंस्थानम् ॥

अत्रैतच्छब्देन जायस्वम्रियस्वेति भूतानिभवंतीति प्रथमांतशब्देन प्रधानतयानिर्दिष्टाः पापकर्माणः परामृश्यंते ।सर्वनाम्नांपूर्वनिर्दिष्टप्रधानपरामर्शित्वात् । स्थानशब्दाभिप्रायेणैकवचनम् । पूर्वनिर्दिष्टद्युलोकब्रह्मलोकापेक्षया क्षुद्रजंतुभवनादिलक्षणस्थानस्य तृतीयत्वात्तत्स्थानसंबंधात् पापकर्म्माणः तृतीयस्थानमित्युच्यंते ॥

## तेनासौलोकोनसंपूयते ॥

तेनतृतीयस्थानशब्दितेन पापकर्म्मणाऽसौद्युलोकोनसंपूर्यते नप्राप्यत इत्यर्थः । अत्रैतत्तृतीयंस्थानमित्येतच्छब्देनपूर्वानिर्दिष्टः पौनःपुन्येन जननमरणादिभवनलक्षणोधात्वर्थएव परामृश्यते । तस्यैव तृतीयस्थानत्वम् । ततश्चैतस्य तृतीयस्य स्थानस्य सद्भावादत्रैतत्स्थाने जीवानांप्रायेणप्रचाराद्द्युलोकगंतॄणामल्पत्वाद्द्युलोकोनसंपूर्यतइत्युक्तावपि भाष्यस्य नविरोधः । अतएवद्युलोकारोहावरोहाभावेन द्युलोकासंपूर्त्तिवचनादिति भाषितमितिद्रष्टव्यम् ॥

## तस्माज्जुगुप्सेत ॥

यस्मात्संसारिणां गतिरुक्तरीत्याकष्टतरातस्मात्संसाराज्जुगुप्सेतमाभून्मेएवंविधसंसारमहोदधौ घोरेपातइति निंदेत् ।मुक्तिफलकपंचाग्निविद्यायाः फलांतरमप्याह ॥

## तदेष श्लोकः ॥

तच्छब्दः प्रसिद्धपरः । एषवक्ष्यमाणः श्लोकइत्यर्थः ॥

**स्तेनोहिरण्यस्य सुरांपिबंश्चगुरोस्तल्पमावसन्ब्रह्महाच । एतेपतंतिचत्वारःपंचमश्चाचरंस्तैरिति ॥**

तैराचरंस्तेनादिभिश्चतुर्भिर्विद्यायोनिसंबंधमाचरन्नित्यर्थः । शिष्टं स्पष्टम् ॥

अथहयएतानेवंपंचाग्नीन्वेदनसहतैरप्याचरन्पाप्मनालिप्यते ॥

स्पष्टोर्थः । विद्याविषयकज्ञानफलमाह ॥

शुद्धःपूतः पुण्यलोकोभवतियएवंवेदयएवं वेद ॥

स्पष्टोर्थः ॥

---

प्रकृतैतावत्त्वंहिप्रतिषेधतिततोब्रवीतिचभूयः।३।२।२१

बृहदारण्यकेचतुर्थाध्यायेतृतीयब्राह्मणारंभे ॥

द्वेवावब्रह्मणोरूपे । मूर्त्तंचामूर्त्तंच । मर्त्यंचामृतंच । स्थितं च । यच्चसच्चत्यच्च ॥

ब्रह्मणोद्वेशरीरे । वावशब्दःप्रसिद्धौ । मूर्त्तंकठिनम्।अमूर्त्तमकठिनम् । मर्त्यंचमरणधर्म्मिनश्वरमित्यर्थः । अमृतंतदितरत् स्थितम्। अव्यापकम् । यद्व्यापकम् । एतिगच्छतिसर्वानिति यद्व्यापकमित्यर्थः । सत्प्रत्यक्षोपलभ्यम् । त्यत्तदितरत् ॥

तदेन्मूर्त्तम् । यदन्यद्वायोश्चांतरिक्षाच्चैतन्मर्त्त्यमेतत्स्थितमेतत्सत् ॥

वाय्वंतरिक्षव्यतिरिक्तं पृथिव्यप्तेजोलक्षणं त्रयमपि कठिनत्वविनश्वरत्वाव्यापकत्वप्रत्यक्षोपलभ्यत्वरूपधर्म्मयुक्ततया मूर्त्तमर्त्त्यं स्थितसच्छब्दवाच्यमित्यर्थः ॥

तस्यैतस्य मूर्त्तस्यैतस्य मर्त्त्यस्यैतस्य स्थितस्यैतस्य सतः एषरसः यएषतपतिसतोह्येषरसः ॥

यएषतपतिमंडलरूपेणेत्यर्थः । आदित्यमंडलंसच्छब्दितस्य तेजोबन्नस्यरसइत्यर्थः । तेजोबन्नवन्मंडलस्य प्रत्यक्षोपलभ्यमा-

नत्वात् । आदित्यमंडले मूर्त्तत्वादिचतुष्टययुक्तो तेजोबन्नरसत्वबुद्धिः कर्त्तव्येत्यर्थः ॥

अथ मूर्त्तंवायुश्चान्तरिक्षं चैतदमृतमेतद्यदेतत्त्यत् तस्यैतस्यामूर्त्तस्यैतस्यामृतस्यैतस्ययतएतस्यत्यस्यै षरसो यएतस्मिन्मंडले पुरुषस्त्यस्यह्येषरसइत्यधि दैवतम् ॥

अमूर्त्तत्वामृतत्वयत्त्वत्यत्त्वलक्षणधर्म्मचतुष्टयाश्रयवाय्वंतरिक्षरसत्वबुद्धिरादित्यमंडलस्थपुरुषेकर्त्तव्येत्यर्थः ॥

एवमधिदैवतमुपासनाप्रकारमुक्त्वा अध्यात्मंमूर्त्तामूर्त्तरसोपासनचिंताप्रकारमाह ॥

अथाध्यात्ममिदमेव मूर्त्तंयदन्यत् प्राणाच्चयश्चाय मंतरात्मन्नाकाश एतन्मर्त्यमेतत् स्थितमेतत्सत् । तस्यैतस्य मूर्त्तस्यैतस्य मर्त्त्यस्यैतस्य स्थितस्यैतस्य सतः । एषरसो यच्चक्षुः सतोह्येषरसः । अथामूर्त्तं प्राणश्चयश्चायमंतरात्मन्नाकाशः । एतदमृतमेतद्यदेतत्त्यत्तस्यैतस्यामूर्त्तस्यैतस्यामृतस्यैतस्ययतएतस्य त्यस्य ह्येषरसोयोयंदक्षिणेक्षन्पुरुषस्त्यस्यह्येषरसः ॥

प्राणहार्दाकाशव्यतिरिक्तं शरीरांतर्वर्त्तिमूर्त्तत्वादिधर्म्मचतुष्टयाधारभूतं यत् तस्यचक्षुरेवरसः । अमूर्त्तत्वादिचतुष्टयाश्रय प्राणहार्दाकाशयोर्दक्षिणाक्षिस्थपुरुषः परमात्मारसइत्यर्थः ॥ नन्वहि कुंडला । ३ । २ । २६ ॥ ऽधिकरणभाष्ये मूर्त्तामूर्त्तस्याचित्प्रपंचस्यब्रह्मणोरूपत्वं द्वेवावब्रह्मणोरूपइत्यादिनोपादिश्यतइत्युक्तम् । तद्व्याचक्षाणैर्व्यासार्यैरचिदात्मकप्रपंचकथनेनचित्प्रपंचोपिकथितः स्यादित्यर्थः । नत्वन्ययोगव्यवच्छेदः । संगत्युपयोगित्वेनाचित्प्र-

पंचमात्रोपादानंकृतमिति भाष्यस्थमचित्प्रपंचपदं चित्प्रपंचस्याप्यु पलक्षणमितिव्याख्यातम् ॥ नचास्मिन्छ्रुतिसंदर्भेचित्प्रपंचसमर्पकं किमपिपदं दृश्यतइतिचेन्न ॥ वाय्वंतरिक्षादिशब्दानामचित्संसृष्ट- चित्परत्वोपपत्त्याचित्प्रपंचस्याप्युपादानसंभवेन चेतनाचेतनप्रपंच- स्यद्वेवावब्रह्मणोरूपेइत्यादिनाब्रह्मशरीरत्वप्रतिपादनादितिध्येयम् ॥

**तस्यहैतस्यपुरुषस्यरूपंयथामाहारजनंवासोयथा- पांड्वाविकंयथेंद्रगोपो यथाग्न्यर्चिर्यथापुण्डरीकंय- थाऽसकृद्विद्युत्तम् ॥**

कौसुंभंवासःकंबलशक्रगोपकृम्यग्निज्वालांभोजैककालीनानेक- विद्युत्सदृशंरूपमस्यभवतीत्यर्थः । विद्युत्तंभावेनिष्ठा । युगपत् प्रवृ- त्तविद्योतनमित्यर्थः ॥

**सकृद्विद्युत्तेवहवास्यश्रीर्भवतियएवंवेद ॥**

युगपत्प्रवृत्तविद्युदिवास्यश्रीः प्रकाशमाना भवति यएवंवेदेत्य- र्थः । द्वेवावब्रह्मणोरूपे इतिमूर्त्तामूर्त्तात्मकरूपत्वंब्रह्मणः प्रतिपाद्यत- त्प्रयुक्तेयत्तालक्षणपरिच्छेदरूपप्रकारवत्त्वं प्रसक्तंप्रतिषेधति ॥

**अथातआदेशोनेतिनेति ॥**

आदेशउपदेशइत्यर्थः । क्रियतइतिशेषः । अथातः शब्दौवाक्यां- तरोपक्रमार्थौ । इतिशब्द इयत्तालक्षणप्रकारवचनः । नैवंनैवमि त्यर्थः । मूर्त्तामूर्त्तात्मकद्वयवत्त्वप्रयुक्तेयत्तालक्षणप्रकारयुक्तोनेत्यर्थः। इयत्तायानेतिनेतीतिवीप्साऽऽत्यंतिकाभावद्योतनार्था।नेतिनेतीतीय- त्तानिषेधएवनपूर्वोक्तप्रकारनिषेधइत्यभिप्रायेणाह ॥

**नह्येतस्मादितिनेत्यन्यत्परमस्ति ॥**

इतिनेतीयत्तारहितंयद्ब्रह्मप्रतिपादितं तस्मादेतस्मादन्यद्वस्तुपरंन ह्यस्ति । ब्रह्मणोन्यत्स्वरूपतोगुणतश्चपरमुत्कृष्टंनास्तीत्यर्थः । नत्व-

न्यमात्रस्यनिषेधः । तथाहिसत्यन्यत्परमितिपदद्वयवैयर्थ्यापत्तेः । तदेवोपपादयति ॥

"अथनामधेयंसत्यस्यसत्यंप्राणावैसत्यंतेषामेषसत्यम्" ॥ इति ।

प्रकृतिवत्स्वरूपविकाररहिततयासत्यशब्दवाच्येभ्यः प्राणशब्दनिर्दिष्टचेतनेभ्योपिकदाचिदपिज्ञानादिसंकोचाभावात्परमात्मसत्यंनिर्विकारमित्यर्थः ॥

---

अन्यथात्वंशब्दादितिचेन्नाविशेषात् । ३ । ३ । ६ ॥

छान्दोग्येप्रथमप्रपाठकारम्भेब्रह्मविद्यौपयिकंकर्माङ्गविषयमादावुपासनमुपदिश्यते ॥

ॐमित्येतदक्षरमुद्गीथमुपासीत ॥

उद्गीथभक्त्यवयवभूतम् ओमित्येतदक्षरमुपासीतेत्यर्थः।उद्गीथावयवओंकारेउद्गीथशब्दस्यलक्षणा । स्वयमेवश्रुतिरोंकारस्योद्गीथशब्द प्रतिपाद्यत्वेहेतुमाह ।

ओमित्युद्गायति ॥

लोकेओमितिह्यारभ्यैवोद्गायति । अतउद्गीथावयवत्वादुद्गीथशब्द प्रतिपाद्यत्वं युक्तमित्यर्थः ॥

तस्योपव्याख्यानम् ॥

तस्याक्षरस्यैवमुपासनमेवंविभूतिरेवंफलमित्यादिकथनमुपव्याख्यानंक्रियतइतिशेषः ॥

एषांभूतानांपृथिवीरसः ॥

एषांस्थावरजंगमात्मकभूतानांपृथिवीरसः परायणम्।पृथिव्याधारकत्वादितिभावः ॥

पृथिव्याआपोरसः॥

तस्याजलप्रकृतिकत्वादितिभावः

अपामोषधयोरसः॥

तत्परिणामत्वादितिभावः॥

ओषधीनांपुरुषोरसः॥

अन्नपरिणामत्वाच्छरीरस्येतिभावः॥

पुरुषस्यवाग्रसः॥

वाचोत्युपकारकत्वादितिभावः॥

वाचऋग्रसः॥

ऋचांगंभीरार्थत्वादितिभावः॥

ऋचः सामरसः॥

गीतिसारत्वात्साम्नामितिभावः॥

साम्नउद्गीथोरसः॥

श्राव्यत्वात्सारइत्यर्थः। अत्रोद्गीथशब्देनोद्गीथावयवओंकारउच्यते॥

सएषरसानाꣳरसतमः परमः॥

सएषओंकारः भूतादीनामुत्तरोत्तररसानामतिशयितरसः॥

पराद्ध्योंष्टमोयदुद्गीथः॥

पराद्ध्यः परस्यब्रह्मणोर्धस्थानमर्हतीतिपराध्र्यः। "छंदसिच।५।१।६७॥" इतियत्। ब्रह्मवदोंकारस्याप्युपास्यत्वादितिभावः। अष्टमोयमुद्गीथः पृथिव्याआपो रसइति परिगणनायामष्टमइत्यर्थः। यदुद्गीथः यउद्गीथइत्यर्थः। वाचः ऋग्रस ऋचः सामरसः साम्नः उद्गीथोरसइति ऋक्सामोद्गीथानांप्रस्तुतत्वात्तान्विमृशतिविचारयतीत्यर्थः॥

"कतमाकतमर्क्॥" इति॥

वीप्साऽऽदरार्था। काऋगित्यर्थः। एवमुत्तरत्रापि॥

कतमत्कतमत्साम कतमःकतमउद्गीथइतिविमृ-ष्टंभवति ॥

विमर्शःपूर्वैःकृतोभवतीत्यर्थः । विमर्शान्निष्पन्नमर्थमाह ॥

वागेवर्क्प्राणःसामोमित्येतदक्षरमुद्गीथः ॥

स्पष्टोर्थः ॥

तद्वाएतन्मिथुनंयद्वाक्चप्राणश्च ॥

स्त्रीलिंगशब्दवाच्यतयावाचःस्त्रीत्वं, प्राणस्यपुँल्लिंगशब्दवाच्यत-यापुंस्त्वमितिभावः ॥

ऋक्चसामचतदेतन्मिथुनमोमित्येतस्मिन्नक्षरेसं-सृज्यते ॥

वाक्प्राणयोर्मिथुनत्वेन तदभिन्नत्वेनऋक्सामयोरपि मिथुनत्वाद्-ऋक्सामात्मकंतदेतन्मिथुनमोमित्येतस्मिन्नक्षरे उद्गीथावयवभूतेसं-सृज्यते । उद्गीथस्य ऋगारूढसामभक्तिरूपत्वेन ऋक्सामरूपत-योद्गीथावयवप्रणवस्यऋक्सामाभ्यांसंसृष्टत्वात् तदात्मकमिथुनेनसं सृष्टत्वमित्यर्थः । वाक्प्राणात्मकमिथुनाध्यासविशिष्टऋक्सामसंसृ-ष्टतयोद्गीथावयवप्रणवोपासनं कर्त्तव्यमित्यर्थः ॥

यदावैमिथुनौसमागच्छतआपयतोवैतावन्योन्यस्य-कामम् ॥

यदादंपतीमिथुनीभूतौ ग्राम्यधर्म्मायसंसृज्येयातांतदान्योन्यका-मप्रापकत्वंप्रसिद्धमित्यर्थः । मिथुनावितिपुंस्त्वद्विवचनेछांदसे ।तत-श्चोंकारोपिस्वात्मसंसृष्टमिथुनेनयजमानस्यकामप्रापकइतिभावः । तदुपासकोप्युद्गातास्वोपास्योंकारवद् यजमानकामप्रापकइत्याह ॥

आपयिताहवैकामानांभवतियएतदेवंविद्वानक्षर-मुद्गीथमुपास्ते ॥

कामात्यादिविशिष्टोद्गीथावयवोपासनस्य यजमानगतकामातिरे-व फलमित्यर्थः ॥

तद्वाएतदनुज्ञाक्षरम् ॥

ओंकारोनुज्ञाक्षरमित्यर्थः । तदेवोपपादयति ॥

यद्धिकिंचानुजानात्योमित्येवतदाह ॥

लोकेह्यनुज्ञां प्रयच्छन्पुरुष ओमित्यनुजानाति ॥

एषउएवसमृद्धिःयदनुज्ञा ॥

उशब्दः प्रसिद्धौ । लोकेसमृद्धौहिओमित्यनुज्ञांप्रयच्छति । अतोनुज्ञारूपस्योंकारस्य समृद्धिमूलकत्वादनुज्ञारूपओंकारएवसमृद्धिरित्यर्थः । एवंसमृद्धिगुणविशिष्टोंकारोपासनस्यफलमाह ॥

समर्द्धयिताहवैकामानांभवतियएतदेवंविद्वानक्षरमुद्गीथमुपास्ते ॥

यजमानस्यकामसमृद्धिंकरोतीत्यर्थः । उपास्यमोंकारं प्ररोचनार्थं स्तौति ॥

तेनेयंत्रयीविद्यावर्तते ॥

तेनप्रकृतेनोपास्येनोंकारेण त्रयीविद्यात्रयीविहितंकर्म प्रवर्त्ततइत्यर्थः । तदेवोपपादयति ॥

ओमित्याश्रावयत्योमितिशꣳसत्योमित्युद्गायति ॥

ॐकारपूर्वकत्वादाश्रवणं शंसनोद्गानानामित्यर्थः । किमित्योंकारपूर्वकमेवाश्रवणादिकंक्रियतइत्यत्राह ॥

एतस्यैवाक्षरस्यापचित्यैमहिम्नारसेन ॥

रसेनसारभूतेन महिम्नामाहात्म्येन युक्तस्यैतस्योंकारलक्षणस्याक्षरस्यापचित्यै पूजार्थमित्यर्थः ॥

नन्वनेवंविद्भिरपि कर्मणोनुष्ठीयमानत्वदर्शनाद्विद्यायावैयर्थ्य

मित्याशंक्यसत्यंविद्वद्भिरविद्वद्भिरपिलोके ओंकारेणकर्मानुष्ठीयते। अथापिविद्याविद्येविलक्षणफले । विद्ययाक्रियमाणंहिकर्मवीर्यवत्तरं-भवत्यताहृशंतुनतथेत्याह ॥

तेनोभौकुरुतः।यश्चैतदेवंवेदयश्चनवेदनानातुविद्या-चाविद्याचयदेवविद्ययाकरोतिश्रद्धयोपनिषदातदेववी-र्यवत्तरंभवति ॥

विद्याउपासनम् । श्रद्धाआस्तिक्यबुद्धिः । उपनिषच्छब्देनोप-निषज्जन्यंब्रह्मात्मकत्वज्ञानमुच्यते । कर्म्मणोवीर्यवत्तरत्वंनामप्रब-लकर्म्मान्तराप्रतिबद्धफलकत्वम् ॥

इतिखल्वेतस्यैवाक्षरस्योपव्याख्यानंभवति ॥

रसतमत्वकामावाप्तिसमृद्धिगुणकत्वादिभिरुक्तप्रकारैर्विशिष्टम-भिहितमुपासनंसर्वमेतदक्षरविषयकमेवेत्यर्थः। ततश्चउपास्यभेदशं कानकार्येत्यर्थः ॥

देवासुराहवैयत्रसंयेतिरेउभयेप्राजापत्याः ॥

द्विविधाःप्रजापतिसुताः देवासुरायस्मिन्कालेपरस्परंयुद्धंकृतवं-तइत्यर्थः। प्राजापत्याइत्यपत्यार्थे "दित्यदित्यादित्यपत्युत्तरपदा-ण्ण्यः । ४ । १ । ८५ ॥" इतिण्यः ॥

तद्धदेवाउद्गीथमाजह्रुरनेनैनानभिहनिष्यामइति ॥

तदादेवा अनेनोद्गीथावयवेनोंकारेणोपासितेनासुराञ्जेष्यामइत्य भिसंधायोद्गीथंप्रणवमुपायत्वेन स्वीकृतवंतइत्यर्थः ॥

तेहनासिक्यंप्राणमुद्गीथमुपासांचक्रिरे ॥

तेदेवाघ्राणेंद्रियत्वेनउद्गीथमुपासितवंतइत्यर्थः। नासिकायांभवं-नासिक्यम् । "शरीरावयवाच्च । ४ । ३ । ५५ ॥" इतियत् ॥

तꣳहासुराःपाप्मनाविविधुः ॥

तन्नासिक्यंप्राणमसुराःस्वकीयेनपाप्मनासंयोजितवंतः । पापहेतुभूतवृत्त्यासंयोजितवंतइतियावत् । तत्रयुक्तिंवक्ति ॥

तस्मात्तेनोभयंजिघ्रतिसुरभिचदुर्गंधिचपाप्मनाह्येषविद्धः ॥

तस्मातपाप्मसंसर्गाद्धेतोःपुरुषःघ्राणेनसुरभिचदुर्गंधिचोभयंजिघ्रति।तस्मान्नासिक्यः प्राणः पापविद्धएवेत्यर्थः ॥

अथहवाचमुद्गीथमुपासांचक्रिरेतꣳहासुराःपाप्मनाविविधुस्तस्मात्तयोभयंवदतिसत्यंचानृतंचपाप्मना ह्येषाविद्धा । अथहचक्षुरुद्गीथमुपासांचक्रिरेतद्धासुराः पाप्मनाविविधुस्तस्मात्तेनोभयंपश्यतिदर्शनीयंचादर्शनीयंचपाप्मनाह्येतद्विद्धम् ॥

अदर्शनीयममेध्यादिकमित्यर्थः ॥

अथहश्रोत्रमुद्गीथमुपासांचक्रिरेतद्धासुराःपाप्मनाविविधुस्तस्मात्तेनोभयंशृणोतिश्रवणीयंचाश्रवणीयंच पाप्मनाह्येतद्विद्धम् ॥

अश्रवणीयंपापवचनमित्यर्थः ॥

अथहमनउद्गीथमुपासांचक्रिरेतद्धासुराःपाप्मनाविविधुस्तस्मात्तेनोभयꣳसंकलपयतेसंकलपनीयंचासंकलपनीयंचपाप्मनाह्येतद्विद्धम् । अथहयएवायंमुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे ॥

असंकलपनीयंपापमित्यर्थः । उद्गीथावयवमोंकारं मुख्यप्राणत्वेनोपासितवंत इत्यर्थः ॥

तꣳहासुराऋत्वाविदध्वंसुः ॥

तंमुख्यप्राणंपाप्मनावेद्धुंप्रवृत्ताअसुराः तंप्राप्यस्वयमेवविध्वस्ताअभवन्नित्यर्थः । तत्रदृष्टांतमाह ॥

यथाश्मानमाखणमृत्वाविध्वꣳसेतैवम् ॥

आखन्यतइत्याखणंमृत्पिण्डः । यथामृत्पिण्डोश्मानंप्राप्यविध्वस्तोभवत्येवमितिव्यासार्यैर्व्याख्यातम् । आखणमितिछांदसंणत्वंनपुंसकत्वंच । एतद्विद्यायाः फलमाह ॥

यथाश्मानमाखणमृत्वाविध्वंसते एवं हैव सविध्वंसते यएवंविदिपापं कामयतेयश्चैनमभिदासति ॥

यएवंविदिएतद्विद्यानिष्ठे यः पापंकर्त्तुंकामयतेयश्चैनंहिनस्तिसोश्मप्राप्तलोष्टवद्ध्वस्तोभवतीत्यर्थः । दापृलवनेदोअवखंडनेइत्यतोवालेट् "सिब्बहुलंलेटि । ३ । १।३४॥ " इतिसिपि दासतीतिरूपम् ॥

सएषोश्मा खणः ॥

सएषः एतद्विद्यानिष्ठेसदृशपापकामः अश्मप्राप्ता खणइत्यर्थः । "खनोघच । ३ । ३ । २५॥ " इत्यत्रकरणाधिकरणयोरित्यनुवृत्तावपिबहुलग्रहणात्कर्मणिघप्रत्ययः । अत्रचवक्तव्यमुपनिषद्भाष्यएवोक्तंतत्रैवद्रष्टव्यम् ॥ बृहदारण्यकेतृतीयाध्यायेतृतीयब्राह्मणारंभे कर्मांगभूतोद्गातरिमुख्यप्राणदृष्टिं विधातुमाख्यायिकामाह ॥

द्वयाहवैप्राजापत्यादेवाश्चासुराश्च ॥

हशब्दोवृत्तार्थस्मरणे । प्रजापतेरपत्यानिप्राजापत्याः दित्येत्यादिनाअपत्यार्थेण्यप्रत्ययः । द्वया द्विविधाद्विप्रकाराइत्यर्थः । "द्वित्रिभ्यांतयस्यायज्वा । ५ । २ । ४३॥" इत्ययच्प्रत्ययः । केते । देवाश्चासुराश्च ॥

ततः कानीयसाएवदेवाः ज्यायसाअसुराः ॥

ततः तत्रेत्यर्थः । देवाः कनीयांसः अल्पीयांसः । कानीयसाइति

स्वार्थे अण् । ज्यायसाअसुराः ज्यायांसः भूयांसः भूयांसोसुराइतिश्रुत्यंतरात् ॥

तएषुलोकेष्वस्पर्द्धंत ॥

परस्परविजिगीषांकृतवन्तः ॥

तेहदेवाऊचुः ॥

स्पष्टोर्थः ॥

हंतासुरान्यज्ञउद्गीथेनात्ययामेति ॥

हंतेत्यसुरविजयोपायदर्शनजहर्षे। अत्रोद्गीथशब्दउद्गातृपरः ।उत्तरत्रोद्गातुरेवाध्यस्तप्राणभावस्योपास्यत्वप्रतीतेः । त्वंनउद्गाय।उद्गात्राअत्येष्यंतीत्युत्तरत्रबहुकृत्व उद्गातृशब्दस्याभ्यसिष्यमाणतयातदनुरोधेनोपक्रमस्थस्याप्युद्गीथशब्दस्य लक्षणयोद्गातृपरता । “अन्यथात्वंशब्दात् । ३ । ३ । ६॥” इत्यधिकरणेचोद्गातुरुपास्यत्वे उद्गीथेनेत्युपक्रमविरोधोनशंकनीयः। उद्गीथस्योद्गानकर्म्मभूतस्यावश्यापेक्षितत्वात् तस्यापि परपरिभवाख्यफलंप्रतिहेतुत्वादितिभाषितत्वात् । श्रुतप्रकाशिकायां बृहदारण्यके अध्यस्तप्राणभावस्योद्गातुरुपास्यत्वे उपक्रमविरोधइत्याशंक्य नह्युपक्रमाधिकरणेउपक्रमानवगतमुपसंहारावगतंत्याज्यमित्युक्तम्। किंतूपक्रमावगतस्यभंगोनकार्यइति ।अत्रतूपक्रमावगतमधिकं चस्वीक्रियते।उद्गीथेनात्ययामेत्युद्गातृगीयमानोद्गीथेतात्पर्यमित्युक्तत्वाच्च नोद्गीथशब्दस्योद्गातृलक्षकत्वम्। अपितूद्गीथशब्द उद्गातृविशेषणभूतोद्गीथपरः । नतुतद्धदेवाउद्गीथमाजह्रुरनेनैनानभिभविष्याम इतिच्छांदोग्यगतोद्गीथशब्दवत् स्वतंत्रोद्गीथपरः इतिवदन्ति ॥

तेहवाचमूचुस्त्वंनउद्गायेति ॥

त्वंनउद्गाताभवेतिवागभिमानिनींदेवतांप्रार्थितवंतः ॥

तथेतितेभ्योवागुदगायत ॥

तथेत्यंगीकृत्यतेभ्योदेवेभ्यो वागुद्गानं कृतवती । दृष्टिविधिप्रकरणत्वात् । "आदित्यादिमतयश्चांगउपपत्तेः । ४ । १ । ६ ॥" इति न्यायेनकृत्वंगभूतउद्गातरिवाग्दृष्टिंकृतवंतइत्यर्थः ॥

योवाचिभोगस्तं देवेभ्य आगायत् यत् कल्याणं वदतितदात्मने ॥

वाचिनिमित्ते यो भोगः गानादिजन्यो यः सुखानुभवः तंभोगंदेवेभ्यः आगायत्देवानां भोगमुद्दिश्याऽऽगायत् गानंकृतवती ।गानेनदेवानां भोगंसंपादितवतीतियावत् । कल्याणवार्त्ताभिलपनरूपंवागिंद्रियकार्यंतदप्यात्मनेवाक्संपादितवती ॥

तेविदुरनेनवैनउद्गात्रात्येष्यंतीति ॥

तेअसुराविदुः ज्ञातवंतइत्यर्थः ॥

तमभिद्रुत्यपाप्मनाऽविध्यन् ॥

तमुद्गातारमभिद्रुत्य शीघ्रं प्राप्य पाप्मना अविध्यन् पापेनसंयोजितवंतः ॥

संयः सपाप्मायदेवेदमप्रतिरूपं वदति स एव स पाप्मा ॥

यः पाप्मातद्वेधनसाधनभूतः सतुयदेवेदमप्रतिरूपमनुचितमश्लीलानृतपैशुन्यादिवदति सएवतद्रूपएवसपाप्मेत्यर्थः । अयंभावः । असुराः वागिंद्रियं क्रोधाद्युत्पादनद्वारा परुषादिवादपैशुन्यादिदूषितंकुर्वन्तीत्यर्थः । असुरबुद्धिकार्यत्वादिंद्रियाणां पापप्रवृत्तेरितिभावः ॥

अथहप्राणमूचुस्त्वन्न उद्गायेतितथेतितेभ्यः प्राण उदगायत्।यःप्राणेन भोगस्तंदेवेभ्यआगायद्यत् कल्याणं

जिघ्रतितदात्मने तेविदुरनेनवैनउद्गात्रात्येष्यंतीति तमभिद्रुत्यपाप्मनाऽविध्यन्। सयःसपाप्मायदेवेदमप्रतिरूपंजिघ्रति सएवसपाप्मा । अथहचक्षुरूचुस्त्वन्नउद्गायेतितथेतितेभ्यश्चक्षुरुदगायत् । यश्चक्षुषिभोगस्तं देवेभ्य आगायत्।यत् कल्याणंपश्यति तदात्मनेतेविदुरनेनवैनउद्गात्रात्येष्यंतीति तमभिद्रुत्यपाप्मनाविध्यन्। सयः सपाप्मायदेवेदमप्रतिरूपंपश्यतिसएवसपाप्मा । अथहश्रोत्रमूचुस्त्वन्नउद्गायेतितथेतितेभ्यः श्रोत्रमुदगायत्।यः श्रोत्रेभोगस्तं देवेभ्यआगायत्।यत्कल्याणं शृणोतितदात्मनेते विदुरनेनवैनउद्गात्रात्येष्यंतीतितमभिद्रुत्यपाप्मनाविध्यन्सयः सपाप्मायदेवेदमप्रतिरूपं शृणोतिसएवसपाप्मा । अथहमनऊचुस्त्वन्नउद्गायेति तथेतितेभ्योमनउदगायत्।योमनसिभोगस्तंदेवेभ्यआगायत्।यत्कल्याणं संकल्पयतितदात्मनेतेविदुरनेनवैनउद्गात्रात्येष्यंतीतितमभिद्रुत्यपाप्मनाविध्यन्। सयः स पाप्मायदेवेदमप्रतिरूपंसंकल्पयतिसएवसपाप्मा ॥

पूर्ववदर्थः ॥

उक्तमर्थंनिगमयति ॥

एवमुखल्वेतादेवताः पाप्मभिरुपासृजन्नेवमेताः पाप्मनाऽविध्यन् ॥

उशब्दोवधारणे । एवमेवखलूक्तयारीत्यैतादेवताः वागाद्या उक्ताअनुक्ताश्चपाप्मभिरनृतवदनादिलक्षणैरुपासृजन् । उपगतवत्य इत्यर्थः ॥

**एवमेनाः पाप्मनाऽविध्यन् ॥**

असुराः एनाः वागादिदेवताः अनृतादिपाप्मनावेधनंकृतवन्तः ॥

**अथहेममासन्यंप्राणमूचुस्त्वन्नउद्गायेति ॥**

आसन्यमासन्नंमुख्यमित्यर्थः। यद्वा आस्येभवआसन्यः। आस्य शब्दस्य "पद्दन्० । ६ । ३ । ६३ ॥" इत्यादिनाआसन्नादेशः । मुख्यमितियावत् । तंप्राणंदेवाउक्तवंतः त्वन्नउद्गायेति । स्पष्टोर्थः ॥

**तेभ्यएषप्राणउदगायत् ॥**

उद्गातरिमुख्यप्राणदृष्टिंकृतवंतइत्यर्थः । तथैवहिव्याख्यातंव्यासार्यैः "अन्यथात्वंशब्दात्० । ३ । ३ । ६ ॥" इत्यधिकरणे ॥

**तेविदुरनेनवैनउद्गात्रात्येष्यंतीतितमभिद्रुत्यपाप्मनाअविव्यत्सन् ॥**

वेद्धुमैच्छन् । व्यधताडने । तस्मात्सनिनेट् । अकित्त्वान्नसम्प्रसारणम् । शिष्टंस्पष्टम् ॥

**सयथाश्मानमृत्वालोष्ठोविध्वंसेतएवंहैवतेविध्वंसमानाविष्वंचोविनेशुः ॥**

यथाश्मचूर्णनायक्षिप्तोलोष्ठः पांसुपिंडः अश्मानंपाषाणमृत्वाप्राप्यविध्वंसेतचूर्णीभवेत्सदृष्टांतोयथा तथाऽध्यस्तमुख्यप्राणभावोद्गातुपासननिष्ठान्देवान्प्राप्यविध्वंसमाना चूर्णीभवंतः विष्वंचः नानागतयः विनष्टा अभवन्नित्यर्थः ॥

**ततोदेवाअभवन्परासुराः ॥**

ततः परं देवाजाता द्योतमानाअभवन्नित्यर्थः। यद्वा देवाः अभवन् सत्तामालभंतेत्यर्थः। विजयिनोभवन्नितिवार्थः । असुरास्तुपराभवन्पराभूताअभवन्नित्यर्थः ॥

**भवत्यात्मनापरास्यद्विषन्पाप्माभ्रातृव्योभवतिय एवंवेद ॥**

यउद्गातारमध्यस्तप्राणभावमुपास्तेसआत्मनाभवतिउत्तरोभवतीत्यर्थः । यद्वा आत्मनामनसासमीचीनेनयुक्तोभवतीत्यर्थः । अस्य द्विषन् " द्विषः शतुर्वावचनम् " इतिकर्म्मणिषष्ठी । एनंप्रतिद्वेषंकुर्वञ्छत्रुः पाप्माच पराभवतिपराभूतोभवतीत्यर्थः। भवत्यात्मनापरास्यद्विषन्भ्रातृव्योभवतियएवंवेदेतिशत्रुपराजयफलायोद्गीथेप्राणदृष्टिर्विहितेतिभाष्यस्योपलक्षणतयापाप्मपराभवस्यआत्मनाभवनस्य च फलत्वप्रतिपादनस्य न विरोधइतिद्रष्टव्यम् । यद्वा अस्यद्विषन्भ्रातृव्यः आत्मनास्वतएवपराभवतिपाप्माचनिन्दायुक्तश्चभवतीत्यर्थः ॥

---

## सर्वाभेदादन्यत्रेमे । ३ । ३ । १० ॥

छान्दोग्येपंचमप्रपाठकारम्भे प्राणविद्याप्रस्तूयते ॥

**योहवैज्येष्ठंचश्रेष्ठंचवेदज्येष्ठश्चहवैश्रेष्ठश्चभवति ॥**

ज्येष्ठत्वश्रेष्ठत्वगुणकंप्राणंयोवेदसतत्क्रतुन्यायेनस्वयमपिज्येष्ठश्चश्रेष्ठश्चभवति । ज्येष्ठत्वंवृद्धत्वम् । "वृद्धस्यच।५।३।६२॥"इति वृद्धशब्दस्यज्यादेशविधानात् । श्रेष्ठत्वंप्रशस्ततमत्वम्। "प्रशस्यस्यश्रः। ५ । ३ ।६०॥" इतिप्रशस्यशब्दस्यश्रादेशविधानात् ॥ एवंफलदर्शनेनपुरुषमभिमुखीकृत्याह ॥

**प्राणोवावज्येष्ठश्चश्रेष्ठश्च ॥**

वावशब्दोवधारणार्थः । गर्भस्थपुरुषेप्राणव्यापारप्रवृत्त्यनंतरभावित्वादिंद्रियप्रवृत्तेःप्राणस्येंद्रियापेक्षयाज्येष्ठत्वम् । इन्द्रियव्यापाराणांसर्वेंदैतदधीनत्वाच्छ्रैष्ठ्यंच ॥

**योहवैवसिष्ठंवेदवसिष्ठोहस्वानांभवति ॥**

स्वानांज्ञातीनांमध्येवसिष्ठोभवतीत्यर्थः । कोवसिष्ठइत्यत्राह ॥

वाग्वाववसिष्ठः ॥

अतिशयेनवसुमान्वसिष्ठः ।वाग्मीहिलोकेअतिशयेनवसुमान्भवति। अतश्चवसुमत्तासंपादकसद्व्यवहारजनकत्वंवाचोवसिष्ठत्वमितिभावः॥

योहवैप्रतिष्ठांवेदप्रतिहतिष्ठत्यस्मिँश्चलोकेमुष्मिँश्च ॥

हशब्दःप्रसिद्धौ।अत्रचामुत्रचप्रतितिष्ठतीत्यर्थः । कातर्हिप्रतिष्ठेत्यत्राह ॥

चक्षुर्वावप्रतिष्ठा ॥

चक्षुषाहिसमेदुर्गेचप्रतितिष्ठतीतिबृहदारण्यकेसमानप्रकरणेश्रवणात्प्रतिष्ठासंपादकसमविषमभूतलप्रदर्शकत्वमेवचक्षुषःप्रतिष्ठात्वम्।

योहवैसंपदंवेदसꣳहास्मैकामाःपद्यंतेदैवाश्चमानुषाश्च

अस्मैकामाःसंपद्यंतइत्यन्वयः । कातर्हिसंपदित्यत्राह ॥

श्रोत्रंवावसंपदिति ॥

श्रोत्रेहिइमेसर्वेवेदाअभिसंपन्नाइतिबृहदारण्यकेसमानप्रकरणेश्रवणात्संपद्धेतुभूतवेदशास्त्रतदर्थश्रवणादिसंपादकत्वमेवश्रोत्रस्यसंपत्त्वम् ॥

योहवाआयतनंवेदायतनꣳहस्वानांभवतिमनोहवाआयतनम् ॥

स्रक्चंदनादिविषयकज्ञानस्वरूपभोगायतनत्वमेवमनसआयतनत्वम् ॥ मुख्यप्राणस्यश्रैष्ठ्यसंपादनायाख्यायिकामाह ॥

अथहप्राणाअहꣳश्रेयसिव्यूदिरेअहंश्रेयानस्म्यहंश्रेयानस्मीति ॥

अथशब्दआख्यायिकोपक्रमार्थः । अहंश्रेयसिस्वस्यश्रेयसिविषयेव्यूदिरेअहंश्रेयानस्मिअहंश्रेयानस्मीतिविवादंचक्रुरित्यर्थः ॥

तेहप्राणाःप्रजापतिंपितरमेत्योचुःभगवन्कोनःश्रेष्ठइति ॥

स्पष्टोर्थः ॥

तान्होवाचयस्मिन्वउत्क्रांतेशरीरंपापिष्ठतरमिवदृश्यतेसवःश्रेष्ठइति ॥

युष्माकंमध्येयस्मिन्नुत्क्रांतेशरीरमतिशयेनपापिष्ठमतिहेयमिवदृश्यतेसवः श्रेष्ठइत्युवाचेत्यर्थः ॥

साहवागुच्चक्राम ॥

साप्रसिद्धावाक्परीक्षणायशरीरादुत्क्रांतवती ॥

सासंवत्सरंप्रोष्यपर्येत्योवाच।कथमशकतर्ते मज्जीवितुमिति ॥

सावागेकसंवत्सरंप्रवासंकृत्वापुनरागत्यमदृतेमांविनाजीवितुंकथमशकतकथंशक्ताइत्युक्तवती ॥

यथाकलाअवदंतःप्राणंतःप्राणेनपश्यंतश्चक्षुषाशृण्वंतःश्रोत्रेणध्यायंतोमनसैवमिति ॥

यथाकलामूकाःवागिंद्रियव्यापाररहिताअपिइतरैःप्राणैस्तत्तत्कार्यंकुर्वंतोजीवंतिएवंवयमप्यजीविष्मेतिप्रत्यूचुः ॥

प्रविवेशहवाक् ॥

एवमुक्तावाक्स्वस्यश्रैष्ठ्याभावंनिश्चित्य देहंप्रविष्टवती ॥

चक्षुर्होच्चक्राम ॥

चक्षुरुत्क्रान्तमभूत् । एवमुत्तरत्रापिद्रष्टव्यम् ॥

अथहप्राणउच्चिक्रमिषन्सयथासुहयः पड्वीशशंकून्संखिदेदेवमितरान्प्राणान्समखिदत् ॥

समुख्यः प्राणउच्चिक्रमिषन्क्रमितुमिच्छन् यथाशोभनोऽश्वः परीक्षार्थमश्वारूढेनताडितःपड्वीशशंकून्पादबंधनकीलकान्संखिदेत् उत्पाटयेदेवमितरान् प्राणान्स्वस्वस्थानेभ्यउत्पाटितवान् ॥

तꣳहाभिसमेत्योचुः भगवन्नेधित्वन्नः श्रेष्ठोसि मोक्रमीरिति ॥

हेभगवन्! पूजार्हत्वमेधिस्वामीतिशेषः। अस्तेर्लोटिमध्यमपुरुषैकवचनम्। भवेत्यर्थः। अस्माकंत्वमेवश्रेष्ठोसित्वमुत्क्रमणंमाकार्षीरितीइतरेप्राणास्तमागत्योचुरित्यर्थः ॥

अथहैनंवागुवाचयदहंवसिष्ठास्मित्वंतद्वसिष्ठोसीति।

यद्येन वाग्मिनोवसुमत्तासंपादकत्वलक्षणेनवसिष्ठा स्मीत्यर्थः। मदीयस्यगुणस्यत्वदधीनत्वात् त्वदीयएवसगुणइतिभावः। उक्तंचव्यासार्यैः। अहंयत्स्वकार्यकरणसमर्थास्मितस्यत्वदधीनत्वात्तवैतत्कार्यकरणसामर्थ्यमित्यर्थइति ॥

अथहैनंचक्षुरुवाचयदहंप्रतिष्ठास्मित्वंतत्प्रतिष्ठासीति। अथहैनंश्रोत्रमुवाचयदहंसंपदस्मित्वंतत्संपदसीति। अथहैनंमनउवाच यदहमायतनमस्मित्वंतदायतनमसीति। नवैवाचोनचक्षूंषिनश्रोत्राणिनमनांसीत्याचक्षते। प्राणाइत्येवाचक्षते।प्राणोह्येवैतानिसर्वाणिभवंति ॥

लौकिकावाआगमज्ञावावागादीनींद्रियाणिसर्वाणिवागाद्येकैकवाचकवागादिशब्दैर्नव्यवहरंति। अपितुप्राणशब्देनैवव्यवहरंति।तत्क-

स्यहेतोः। प्राणाधीनसत्ताकत्वादितरेषाम्। "यदधीनायस्यसत्तात-त्तदित्येवभण्यते" इत्युक्तेः प्राणाधीनसत्ताकत्वादितरेषामिंद्रियाणां-सर्वाणींद्रियाणिप्राणएवभवंतीत्यर्थः ॥

---

## कार्याख्यानादपूर्वम्। ३। ३। १८ ॥

छान्दोग्येपंचमप्रपाठकेद्वितीयखण्डे ॥

**सहोवाचकिंमेन्नंभविष्यतीति ॥**

वागादीन् किंमेन्नंभविष्यतीतिप्राणः पप्रच्छेत्यर्थः ॥

**यत्किंचिदिदमाश्वभ्यआशकुनिभ्यइतिहोचुः ॥**

सर्वप्राणिनां यदन्नजातं तत्सर्वंतवेतिवागादयः प्रत्यूचुः। श्रुतिः स्वेनरूपेणाह ॥

**तद्वाएतदनस्यान्नम् ॥**

यत्किंचिल्लोके प्राणिभिरद्यते तदेतदनस्यप्राणस्यान्नम्। प्राणेनैवतद् दद्यतइत्यर्थः ॥

**अनोहवैनामप्रत्यक्षम् ॥**

अननं हिचेष्टा, सर्वविधाऽदनचेष्टायुक्तत्वात् प्राणस्यानइतिप्रत्यक्षं नाम। देवानां परोक्षप्रियत्वात् प्रत्यक्षमनइति नाम परित्यज्य प्राण इतिपरोक्षेणनाम्ना व्यवहारः।ततश्च अदनचेष्टायाअपितदीयत्वात्सर्वप्राणिजातेनाद्यमानमन्नं सर्वंतेनैवाद्यतइतिप्राणस्यसर्वमन्नमित्यर्थः। यद्वा अनइत्यस्यनकारांतरयुक्तस्यैवान्नत्वाद्, अनइत्यस्य प्राण-नामत्वस्यप्रत्यक्षत्वादन्नं तत्संबंध्येवेत्यर्थः। अत्रप्राणविद्यानिष्ठेनसर्व प्राण्यन्नादनस्यकर्त्तुमशक्यत्वान्नास्यवाक्यस्यसर्वप्राण्यन्नादनकर्त्तव्य त्वमर्थः। अपितुसर्वप्राणिजातान्नेप्राणान्नत्वचिंतनंकर्त्तव्यमित्यर्थः। सर्वप्राणिजातान्नेप्राणान्नत्वचिंतनंस्तौति ॥

नहवाएवंविदिकिंचनानन्नंभवतीति ॥

प्राणविद्यानिष्ठस्याभक्ष्यभक्षणदोषोनास्तीत्यर्थः ॥

सहोवाचकिंमेवासोभविष्यतीतिआपइतिहोचुः ॥

आपोवासस्त्वेनचिंतनीयाइतिहोचुरित्यर्थः ॥

तस्माद्वाएतदशिष्यंतः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लंभुकोहवासोभवत्यनग्नोहभवति ॥

तस्मादपांवासस्त्वादेवाएतदेतस्मिन्नपिकालेभोक्ष्यमाणाः भोजनात्प्राक्पश्चाच्चाचमनीयाभिरद्भिर्वासोभिः परिहितंप्राणमनग्नंकुर्वंतीत्यर्थः। अप्सुवासस्त्वचिंतनेनवासोभूताभिरद्भिः प्राणस्यपरिहितत्वादितिभावः । अनग्नत्वचिंतनेनचस्वयमपिवासोलंभुकोभवति, वासोलब्धाभवतिअतएवानग्नश्चभवति । तत्क्रतुन्यायेनइतिभावः । वाजसनेयकेकाण्वशाखायांतस्योतमेकिमन्नंकिंवासइतियदिदंकिंचाश्वभ्यआक्रिमिभ्यः आकीटपतंगेभ्यस्तत्तेन्नमापोवासइतिनहवाअस्यानन्नं जग्धंभवतिनानन्नंप्रतिगृहीतंभवतियएवमेतदन्नस्यान्नत्वंवेदतद्विद्वांसः श्रोत्रियाअशिष्यंतआचामंत्यशित्वाचाचामंति । एतमेवतदनमनग्नंकुर्वंतोमन्यंतइतिपाठः।माध्यंदिनशाखायांतुतस्मादेवंविदशिष्यन्नाचामेदशित्वाचाचामेदेतमेवतदनमनग्नंकुरुतइतिपाठः ॥

---

संबंधादेवमन्यत्रापि । ३ । ३ । २० ॥

बृहदारण्यकेसप्तमाध्यायेचतुर्थब्राह्मणादौ ॥

यएवमेतन्महद्यक्षंप्रथमजंवेदसत्यंब्रह्मेतिसत्यंह्येवब्रह्मेति प्रस्तुत्यव्याहृतिशरीरकब्रह्मविद्याश्रूयते ॥

तद्यत्सत्यमसौसआदित्यः यएषएतस्मिन्मंडलेपुरुषोयश्चायंदक्षिणेक्षन्पुरुषः ॥

यत्प्रसिद्धं सत्यमसौ स आदित्यः स कइत्यत्राह । यएषएतस्मिन्मंडलेपुरुषइति।यएषोंतरादित्येहिरण्मयः पुरुषोदृश्यतेयएषोंतरक्षिणि पुरुषोदृश्यतइतिश्रुतिप्रसिद्धइत्यर्थः ॥

**तावेतावन्योन्यस्मिन्प्रतिष्ठितौरश्मिभिरेषोस्मिन्प्रतिष्ठितः प्राणैरयममुष्मिन् ॥**

अधिदैवतमध्यात्मंचावस्थितौआदित्यचाक्षुषपुरुषौपरस्परोपकारकौभवतः । रश्मिद्वाराआदित्यपुरुषश्चाक्षुषस्यपुरुषस्योपकारकः। आदित्यरश्मिसंबंधाभावेचाक्षुषस्यपुरुषस्यपरमात्मनः स्वकार्यासमर्थत्वात् । चाक्षुषश्चपुरुषः प्राणनद्वारा आदित्यपुरुषस्योपकारकः । प्राणनाभावेआदित्यपुरुषस्यपरमात्मनः प्रकाशकत्वाभावात् ॥

**सयदोत्क्रमिष्यन्भवति शुद्धमेवैतन्मंडलंपश्यतिनैनमेतेरश्मयः प्रत्यायंति ॥**

एवंविद्वानुत्क्रांतिवेलायांद्वारभूतमादित्यमंडलंद्रष्टुंशक्नोतिनसूर्यरश्मयः एनं प्रतिप्रतिकूलंनायंति । अस्योपासकस्य । चक्षुःप्रतिघातायनप्रभवंतिचक्षुरादित्यमंडलस्थयोःपरस्परोपकार्योपकारकभावज्ञानवैभवादिति भावः ॥

**यएषएतस्मिन्मंडलेपुरुषः तस्यभूरितिशिरः ॥**

आदित्यमंडले वर्त्तमानस्य सत्यपुरुषस्य भूरितिव्याहृतिः शिर इत्यर्थः । तच्छिरस्कत्वेन ध्यानंकर्त्तव्यमितिभावः।तत्रोपपत्तिमाह ॥

**एकꣳहिशिर एकमेतदक्षरम् ॥**

एकत्वसंख्यासाम्यादितिभावः ॥

**भुवइतिबाहू ॥**

तत्रोपपत्तिमाह ॥

द्वौबाहूद्वेएतेअक्षरे ॥

द्वित्वसाम्यादितिभावः ॥

सुवरितिप्रतिष्ठा ॥

प्रतिष्ठापादावित्यर्थः । तत्रोपपत्तिमाह ॥

द्वेप्रतिष्ठेद्वेएतेअक्षरे तस्योपनिषदहरिति ॥

तस्यादित्यमंडलांतर्वर्त्तिनः अहरित्युपनिषद्रहस्यनामेत्यर्थः । उक्तंच व्यासार्यैः । संबंधादेवमन्यत्रापीत्यत्रोपनिषदौ रहस्यनामनी इत्यर्थः इति । अहरित्यस्य हंतेर्जहातेश्च रूपसंभवमभिप्रेत्यतदनुसारेणफलमाह ॥

हंतिपाप्मानंजहातिचयएवंवेद ॥

सपाप्मानंहंतिजहातिच । एवमुत्तरत्रापिद्रष्टव्यम् ॥

योयंदक्षिणेक्षन्पुरुषः–तस्योपनिषदहमिति ( अध्यात्मं ) हंतिपाप्मानंजहातिचएवंवेद ॥

पूर्ववदर्थः ॥

---

संभृतिद्युव्याप्त्यपिचातः । ३ । ३ । २३ ॥

तैत्तिरीयकेराणायनीयानांखिलेषुच ॥

ब्रह्मज्येष्ठावीर्यासंभृतानि ब्रह्माग्रेज्येष्ठं दिवमाततान । ब्रह्मभूतानांप्रथमोथजज्ञेतेनार्हतिब्रह्मणास्पर्द्धितुंकइति ॥

ब्रह्मब्रह्मणेत्यर्थः । ज्येष्ठाज्येष्ठानि । सुपां सुलुगिति लुकि न लोपेचरूपम्।वीर्यावीर्याणि।पराक्रमविशेषाः ।अत्रापिपूर्ववद्रूपम्।संभृतानिसम्यक्धृतानि तद्वीर्यविहतिर्नास्तीत्यर्थः । तच्चब्रह्मअग्रेइंद्रादिजन्मनः प्राक्दिवंस्वर्गमाततानव्याप्तवत् । सर्वदासर्वलोकव्याप्तमित्यर्थः। तादृशंसर्वेषांभूतानांप्रथममाविर्भूतंकालापरिच्छिन्नमितियाव-

त्। तादृशेनब्रह्मणास्पर्द्धितुंकःक्षमतेइत्यर्थः॥इति संभृत्यधिकरणम्।

पुरुषविद्यायामपिचेतरेषामनाम्नानात्। ३।३।२४॥

छान्दोग्येतृतीयप्रपाठकेषोडशखण्डारंभे दीर्घायुष्ट्वफलिकापुरुषविद्याप्रस्तूयते॥

पुरुषोवावयज्ञस्तस्ययानिचतुर्विँ शतिवर्षाणि तत्प्रातःसवनम्॥

षोडशोत्तरशतवर्षपरिमितेपुरुषायुषेआद्यानिचतुर्विंशतिवर्षाणिप्रातःसवनम्। तत्रहेतुमाह॥

चतुर्विँ शत्यक्षरागायत्रीगायत्रंप्रातस्सवनम्॥

प्रातःसवनस्यगायत्रीछंदस्त्वाद्गायत्रीछंदसश्चतुर्विँ शत्यक्षरात्मकत्वात् चतुर्विंशतिवर्षैप्रातःसवनत्वाध्यासोयुज्यतइतिभावः॥

तदस्यवसवोन्वायत्ताः॥

अस्योपासकस्यतत्प्रातःसवनंवसवः स्वामित्वेनानुगताःप्रसिद्धयज्ञेप्रातःसवनस्यवसुस्वामिकत्वादितिभावः। प्रसिद्धान्वसून्व्यावर्त्तयति॥

प्राणावाववसवः॥

वावशब्दोवधारणे। प्राणानांवसुत्वेयुक्तिमाह॥

एतेहीदँ सर्वंवासयंति॥

शरीराणामशैथिल्यलक्षणवासस्यप्राणाधीनत्वादितिभावः॥

तंचेदेतस्मिन्वयसिकिंचिदुपतपेत्॥

तंपुरुषंविद्यानिष्ठमेतस्मिन्वयसिचतुर्विंशतिवर्षात्मकेवयसिकिंचिद्रोगादिबाधेतेत्यर्थः॥

सब्रूयात्प्राणावसवःइदंमेप्रातःसवनंमाध्यंदिनँ-

सवनमनुसंतनुतेतिमाऽहंप्राणानांवसूनांमध्येयज्ञोवि-
लोप्सीयेति ॥

तदेमंमंत्रंब्रूयात् । सउपासकः हेप्राणावसवः यज्ञरूपस्यममाधु नाप्रातस्सवनंप्रवर्त्ततेइदंप्रवर्त्तमानंप्रातःसवनंमाध्यंदिनसवनेनाविच्छिन्नंकुरुत।प्रातस्सवनेशानांप्राणानांवसूनांमध्येयज्ञोहंयज्ञरूपोहंमा विलोप्सीयलुप्तोमाभूवम्। छांदसोमाङिलुङभावः । माशब्दोवा ॥

उद्धैवततएत्यगदोहभवति ॥

ततउपतापादुदेतिउद्गच्छतिअगदो भवति । अरोगोभवति । एवमुत्तरत्रापि ॥

अथयानिचतुश्चत्वारिꣳशद्वर्षाणितन्माध्यंदिनंसवनंचतुश्चत्वारिꣳशदक्षरात्रिष्टुप्त्रैष्टुभंमाध्यंदिनंसवनं तदस्यरुद्राअन्वायत्ताःप्राणावावरुद्राएतेहीदꣳसर्वंरोद यंति।तंचेदेतस्मिन्वयसिकिंचिदुपतपेतसब्रूयात्।प्राणारुद्रा इदंमेमाध्यंदिनꣳसवनंतृतीयंसवनमनुसंतनुतेतिमाहंप्राणानांरुद्राणांमध्येयज्ञोविलोप्सीयेति । उद्धैवततएत्यगदोहभवति। अथयान्यष्टाचत्वारिꣳशद्वर्षाणितत्तृतीयंसवनम् अष्टाचत्वारिंशदक्षराजगतीजागतंतृतीयसवनंतदस्यादित्याअन्वायत्ताः प्राणावावादित्याएतेहीदꣳसर्वमाददतेतंचेदेतस्मिन्वयसिकिंचिदुपतपेत्सब्रूयात् । प्राणाआदित्याः इदंमेतृतीयꣳसवनमायुरनुसंतनुतेति ॥

तृतीयंसवनात्मकमायुरासमाप्त्याविच्छिन्नंकुरुतेत्यर्थः ॥

माहंप्राणानामादित्यानांमध्येयज्ञोविलोप्सीयेतिउ-द्धैवततएत्यगदोहैवभवति ॥

स्पष्टोर्थः ॥

एतद्धस्मवैतद्विद्वानाहमहीदासऐतरेयः सकिंमए-तदुपतपसियोहमनेनेनप्रेष्यामीति ॥

हेरोगसत्वंमेमांकिंकस्मादुपतपसियोहंत्वत्कृतेनोपतापेननप्रेष्या-मिनमरिष्यामि । अतस्तवश्रमोवृथैवेति । एतत्पुरुषविज्ञानस्वरूपं विद्वानितरपुत्रोमहीदासनामाऽऽहस्मेत्यर्थः।शुभ्रादित्वादितरशब्दा-दपत्यार्थेढक् ॥

सहषोडशंवर्षशतमजीवत् ॥

स महीदासः षोडशाधिकंवर्षशतमजीवत्। "तदस्मिन्नधिकमिति दशांताड्डः" इतिषोडशशब्दाड्डप्रत्ययः । अन्योप्येवंवित्षोडशव र्षशतंजीवतीत्याह ॥

प्राहषोडशंवर्षशतंजीवतियएवंवेदसयदशिशिषति यत्पिपासतियन्नरमतेताअस्यदीक्षा ।

अशनायापिपासारत्यभावानांदुःखात्मकत्वेनदीक्षात्वम् ॥

अथयदश्नातियत्पिबतियद्रमतेतदुपसदैरेति ॥

अशनपानरतीनांपयोव्रतादियुक्तोपसद्वत्सुखरूपत्वादुपसद्रूपत्व मुपसद्भिःसमानतामेतीत्यर्थः । उपसद्दृष्टिस्तासुकर्त्तव्येतिभावः ॥

अथयद्धसतियज्जक्षतियन्मैथुनंचरतिस्तुतशस्त्रैरेव-तदेति ॥

हासादीनांशब्दवत्त्वसाम्यात्स्तुतशस्त्रैः साम्यमेतीत्यर्थः ॥

अथयत्तपोदानमार्जवमहिंसासत्यवचनमितिताअ-स्यदक्षिणाः ॥

धर्मत्वतु ( पु ) ष्टिकरत्वसाम्यादितिभावः ॥

तस्मादाहुः सोष्यत्यसोष्टेतिपुनरुत्पादनमेवास्य ॥

यतोहेतोः पुरुषस्यैवयज्ञरूपत्वमतएवयथायज्ञंकरिष्यमाणःपुरुषोदेवदत्तः सोमंसोष्यतीतिप्रयुंजतेतथापुरुषस्योत्पादनंप्रतीक्ष्ययदा माता तंपुरुषंजनयिष्यतितदापुरुषंसोष्यतीतिप्रयुंजतेलोकास्तदुत्पादनादनंतरमसोष्टसोमंयज्ञदत्तइतिवत् असोष्टमातापुरुषमित्युत्पत्तेः पश्चात्प्रयुंजते। ततश्चपुरुषस्योत्पादनमेवसोष्यत्यसोष्टेतिशब्दसंबंधित्वसामान्याद्यज्ञानुष्ठानलक्षणमुत्पादनमित्यर्थः ॥

तन्मरणमेवावभृथः॥

समाप्तित्वसामान्यादितिभावः ॥

तद्धैतद्घोरआंगिरसः कृष्णायदेवकीपुत्रायोक्त्वोवाच ॥

घोरनामांगिरोगोत्रः।तदेतत्पुरुषयज्ञदर्शनंदेवकीपुत्रायकृष्णाय। इतिशब्दोध्याहर्त्तव्यः। तच्छेषभूतं तत्प्रीत्यर्थमित्युक्त्वेत्यनुसंधायोवाचाऽनुष्ठितवानित्यर्थः। वचेर्लक्षणयाऽनुष्ठानार्थत्वम् ॥

अपिपासएवसबभूव ॥

स घोरनामाभगवच्छेषत्वानुसंधानपूर्वकपुरुषयज्ञोपासनानुष्ठानेनब्रह्मविद्यांप्राप्यापिपासोमुक्तोबभूवेत्यर्थः। ततश्चषोडशाधिकवर्षशतजीवनफलकस्यापिपुरुषयज्ञदर्शनस्यभगवच्छेषत्वानुसंधानपूर्वकमनुष्ठितस्यब्रह्मविद्योपयोगित्वमप्यस्तीतिभावः ॥

---

वेधाद्यर्थभेदात्। ३। ३। २५॥

आथर्वणिकाउपनिषदारंभेअधीयते ॥

शुक्रंप्रविध्यहृदयंप्रविध्यधमनीः प्रविध्यशिरोभिव्रज्यत्रिधाविवृत्तइति ॥

अभिचारकर्मणिदेवताप्रार्थनार्थोमंत्रः । अस्यचायमर्थः । हेदेवतेमच्छत्रोः शुक्रंतेजिष्ठमंगंप्रविध्य।लोण्मध्यमैकवचनम् । विदारयेत्यर्थः । हृदयंप्रविध्यहृदयंचविदारयेत्यर्थः । धमनीः शिराः प्रविध्यविदारयेत्यर्थः । शिरोभिवृज्यत्रोटयेत्यर्थः । एवंममशत्रुस्त्रिधाभिन्नशिराभवत्वित्यर्थः ॥

देवसवितः प्रसुवयज्ञम् ॥

हेसवितः देव यज्ञंप्रसुवअनुजानीहीत्यर्थः । काठास्तैत्तिरीयाश्च॥

"शन्नोमित्रः शंवरुण" इत्यादि ॥

सूर्यवरुणादयः सुखंकुर्वंत्वित्यर्थः ॥–॥ इति वेधाद्यधिकरणम् ॥

---

अन्तराभूतग्रामवत्स्वात्मनोन्यथाभेदानुपपत्तिरितिचेन्नोपदेशवत्। ३ । ३ । ३५ ॥

बृहदारण्यकेपंचमाध्यायेचतुर्थब्राह्मणारंभे ॥

अथहैनमुषस्तश्चाक्रायणः पप्रच्छ ॥

नाम्नाउषस्तः चक्रस्यगोत्रापत्यम्।नडादिभ्यः फक्।चाक्रायणः ॥

याज्ञवल्क्येतिहोवाचयत्साक्षादपरोक्षाद्ब्रह्मयआत्मासर्वांतरस्तन्मेव्याचक्ष्वेति ॥

अपरोक्षादपरोक्षमित्यर्थः । सुपांसुलुगित्यादिना आदादेशः । अपरोक्षत्वंनामसर्वदेशकालसन्निहितत्वम्। देशकालसन्निकर्षेह्यापरोक्ष्यदर्शनाद्यदपरोक्षंसाक्षाद्ब्रह्म। अव्यवधानेनब्रह्म। अगौणंमुख्यमिति यावत् । सर्वांतरआत्माचद्रष्टव्यः श्रोतव्यइतिदर्शनादिविषयत्वेनोक्तश्चयः ताद्दशंवस्तुमेव्याचक्ष्वविविच्याचक्ष्वप्रदर्शयेत्यर्थः । नदृष्टेर्द्रष्टारंपश्येरितिद्रष्टव्यत्वादेरन्यत्रनिषेधाद्द्रष्टव्यत्वादिकमपिप्रश्नविषयइतिद्रष्टव्यम् । उत्तरमाह ॥

एषतआत्मासर्वांतरः। कतमोयाज्ञवल्क्यसर्वान्तरः। यःप्राणेनप्राणितियोपानेनापानितिसतआत्मासर्वांतरः। योव्यानेनव्यानितिसतआत्मासर्वांतरः। यउदानेनोदानितिसतआत्मासर्वांतरः। एषतआत्मासर्वांतरः॥

तेयआत्मासएवसर्वांतर्यामीअपरोक्षंमुख्यंब्रह्मद्रष्टव्यश्चेत्यर्थः। पुनःपृच्छति। "कतमोयाज्ञवल्क्यसर्वांतरः" यदुक्तंतेआत्मासर्वांतरः इतितदस्तु। कतमआत्मासर्वांतरइतितवाभिप्रायइतिनजाने। देहेंद्रियप्राणजीवादिषुकश्चिन्मेआत्मांतरःउततोन्यइत्यर्थः। यद्यपितेआत्मेतिव्यतिरेकनिर्देशेनप्रत्यक्षदृष्टाभिमुखशरीरव्यतिरेकः सिध्यति। तथापींद्रियाद्यन्यतमत्वसंदेहोनापाकृतइतिभावः। उत्तरमाह—यःउक्तइतिशेषः। प्राणितीत्यादौरुदश्चपंचभ्यइतीट्[१]। प्राणादिव्यापारकर्त्तायः ससर्वांतरआत्मेत्यर्थः। अत्रप्राणस्यकरणतयानिर्देशात्प्राणव्यतिरेकः सिद्धः। सुषुप्तौबाह्याभ्यंतरेंद्रियोपरतावपिप्राणनादिव्यापारदर्शनात् तद्व्यतिरेकोपिसिद्धः। सुषुप्तौजीवस्याप्युपरतव्यापारतयाप्राणेनप्राणितत्वाभावात्तव्यतिरेकोपीसिध्यतीत्याशयः॥

सहोवाचोषस्तश्चाक्रायणः॥

आशयमविद्वान्पुनराहेत्यर्थः॥

यथाविब्रूयादसौगौरसावश्वइत्येवमेवैतद्व्यपदिष्टंभवति॥

यथागांप्रदर्श्यासौगौरसावश्वइतिगव्यश्वाभेदोपदेशोविरुद्धः एवमेवैतद्व्यपदिष्टंभवति। एवमेवयत्साक्षादपरोक्षाद्ब्रह्मयआत्मासर्वांतरस्तंमेव्याचक्ष्वेतिमामकप्रश्नेएषतआत्मासर्वांतरः यः प्राणेनप्राणितो-

---

१ रुदादिभ्यस्सार्वधातुकइतीडित्यर्थः।

तिप्राणनादिकर्तुर्मदात्मनोजीवस्यसर्वांतरत्वकथनंविरुद्धवचनमेव । जीवस्यभिन्नभिन्नत्वेनसर्वांतरत्वासंभवात् । अतः कतमोयाज्ञवल्क्य सर्वांतरः । सतावदविरुद्धतयावक्तव्यइत्यर्थः । उत्तरमाह ॥

नदृष्टेर्द्रष्टारंपश्येः नश्रुतेः श्रोतारंशृणुयाः नमतेर्मंतारंमन्वीथा नविज्ञातेर्विज्ञातारंविजानीयाः ॥

अत्रदृष्टेर्द्रष्टारमितिपाकंपचतीतिवन्निर्देशः।दृष्टेर्द्रष्टारंदर्शनकर्त्तारमित्यर्थः।दर्शनश्रवणमनननिदिध्यासनानांयःकर्त्ताजीवःसनद्रष्टव्यः श्रोतव्योमंतव्योनिदिध्यासितव्यः । दर्शनादिकर्त्तुर्जीवादन्यएवदर्शनादिकर्म्मभूतः सर्वांतरआत्माइंद्रियाधीनदर्शनादीनांकर्त्तारंजीवं प्राणनकर्तृत्वेननपश्येर्नमन्वीथाइतिवाक्यार्थः ॥

अतोन्यदार्तम् ॥

अतः परमात्मनः अन्यद्व्यतिरिक्तंत्वदभिमतंप्राणितृत्वादिमज्जीवजातमार्त्तंदुःखीत्यर्थः । अतएवनित्यमुक्तानांकदाप्यस्पृष्टदुःखत्वादतोन्यदार्त्तमित्युक्तिःकथमितिशंकाप्रत्युक्ता।तेषामिहाप्रसक्तत्वात्। अन्यशब्दस्यसन्निहितप्राणितृत्वादिमज्जीवपरत्वात् । यद्वा आक्रतमीषन्निर्विकारंनित्यमुक्तानांनिर्विकारत्वस्यान्याधीनत्वेनतन्निर्विकारत्वस्याल्पत्वात् ॥

ततोहोषस्तश्चाक्रायणउपरराम ॥

इति चतुर्थंब्राह्मणम् ॥

अथहैनंकहोलः कौषीतकेयः पप्रच्छ ॥

कहोलोनामतः कुषीतकस्यापत्यंकौषीतकेयः । "विकर्णकुषीतकात्काश्यपे" इतिढक् ॥

याज्ञवल्क्येतिहोवाचयदेवसाक्षादपरोक्षाद्ब्रह्मयआत्मासर्वांतरस्तन्मेव्याचक्ष्वेति एषतआत्मासर्वान्तरः कतमोयाज्ञवल्क्यसर्वान्तरः ॥

पूर्ववदर्थः। यद्यपिप्रश्नोयमुषस्तेनकृतएवदत्तोत्तरश्च। निरुपाधिकसर्वप्राणिप्राणनहेतुत्वनिरंकुशसर्वांतरत्वादस्यजीवव्यावृत्तिरपिसिद्धा। नदृष्टेर्द्रष्टारमित्यादिनादर्शनश्रवणादिकर्तुर्जीवस्यद्रष्टव्यत्वादिनिषेधमुखेनमुख्यब्रह्मत्वमपिप्रतिषिद्धम्। तथापिप्राणितृत्वस्यजाग्रदादिदशाविशेषजीवेपिसंभवाद्यत्किंचिद्देहाद्यपेक्षयांतरेजीवेआपेक्षिकसर्वांतरत्वसंभवान्नदृष्टेर्द्रष्टारमित्यत्रापिदृष्टिव्यतिरिक्तद्रष्टृनिषेधपरत्वसंभवेनज्ञानस्वरूपजीवप्रतिपादकत्वसंभवादुक्तधर्माणांपरमात्मैकांतिकत्वंनिश्चेतुमसमर्थस्यकहोलस्यदृढतरेणव्यावर्त्तकधर्म्मेणजीवव्यावृत्तिनिश्चिकीर्षयापुनःप्रश्नउपपन्नइतिद्रष्टव्यम्। अतएव "व्यतिहारोविशिंषंतिहीतरवत्। ३। ३। ५२॥" इतिसूत्रेव्यावर्त्तकधर्म्मभूयस्तयाव्यावृत्तिबुद्ध्यतिशयार्थमेकविषयकंप्रश्नद्वयमित्युक्तंव्यासार्यैः। तदभिप्रायंजानन्नाह॥

योशनायापिपासेशोकंमोहंजरांमृत्युमत्येति॥

अशनायाबुभुक्षा। पातुमिच्छापिपासा। शोकइष्टानिष्टोभयवियोगसंयोगजः। मोहःकामादिजनितःअज्ञानंवा। जीवस्यकर्माधीनदेहसंसर्गितयाऽशनायाद्यनतीतत्वात्तद्व्यावृत्तिःसिध्यतीतिभावः। यद्यपिमुक्तानांनित्यानांचाशनायाद्यतीतत्वमस्ति।तथापितेषामशनायाद्यतीत्वस्यपरमात्मसंकल्पायत्तत्वात्, अनन्यसंकल्पाधीनाशनायाद्यतीतत्वंपरमात्मनएव। किंच प्रकृतेबद्धजीवव्यावृत्तेरेवसतआत्मेतिनिर्दिष्टस्योपदेष्टव्यतयानित्यमुक्तव्यावर्त्तकधर्मानुक्तावपिनदोषइतिद्रष्टव्यम्॥

एतंवैतमात्मानंविदित्वाब्राह्मणाःपुत्रैषणायाश्चवित्तैषणायाश्चलोकैषणायाश्चव्युत्थायाथभिक्षाचर्यंचरंति॥

तमेतंसर्वांतरमशनायाद्यतीतंपरमात्मानमनार्त्तंविदित्वाब्राह्मणा-

इत्यनेनक्षत्रियादिव्यावृत्तिः । पुत्रैषणायाश्च।इषेःस्वार्थेण्यंतात्स्त्रियां-ण्यासश्रंथोयुजितियुर्च्क्तिन्नपवादः । अण्यंतात्तुइच्छेतिनिपातः । इषेःस्वार्थेणिच्छांदसः । पुत्रैषणेत्यनेनजायामेस्यात्प्रजायेयेतियो-क्तासागृह्यते । वित्तैषणायाश्चेत्यनेनवित्तंमेस्यादथकर्म्मकुर्वीयेतियो-क्तासागृह्यते ।लोकैषणायाश्चेत्यनेनजायाप्रजावित्तकर्म्मसाध्यसकल-लोकेच्छागृह्यते । उक्तैषणात्रयाद्व्युत्थायेषणात्रयंहित्वायथाविधिसं-न्यस्येतियावत् । अथानंतरंदेहयात्रार्थंभिक्षाटनंकुर्वतीत्यर्थः । इदं-चोपलक्षणंसर्वसंन्यासाश्रमधर्मानुष्ठानस्य ।अत्रवाक्येअप्राप्तत्वात्पारि व्राज्यंविधीयते ॥

याह्येवपुत्रैषणासावित्तैषणा ॥

अवर्जनीयपरस्परसंबंधादितिभावः ॥

उभेह्येतेएषणेएवभवतः ॥

सर्वथासाध्यसाधनविषयकैषणाद्वयमेवपर्यवस्यतीतिभावः ॥

तस्माद्ब्राह्मणःपांडित्यंनिर्विद्यबाल्येनतिष्ठासेत् ॥

यस्माद्वैराग्यमावश्यकंतस्माद्ब्राह्मणअधीतवेदइत्यर्थः । ब्रह्मा-धीतेब्राह्मणःजातिपरोवा, पांडित्यंनिर्विद्यऊहापोहक्षमाधीः । पंडासा-स्यसंजातेतिपंडितः तस्यकर्म्मपांडित्यमौपदेशिकार्थाधिगमरूपंविवे-कंनिर्वेदविरक्तिफलकंनिर्विद्यलब्ध्वाबाल्येनस्वमाहात्म्यानाविष्कर-णलक्षणबालस्वभावेनयुक्तस्सन्ब्रह्मणितिष्ठासेत् तन्निष्ठांलभेत । उ-पासीतेतियावत् ॥

बाल्यंचपंडित्यंचनिर्विद्याथमुनिः ॥

बाल्यपंडित्येनिर्विद्यलब्ध्वाऽऽरंबणसंशीलनलक्षणमननशीलः स्यादित्यर्थः । ध्यानविच्छेददशायामप्यत्यंतविषयोन्मुखत्वराहि-त्यायशुभाश्रयवस्तुसंशीलनंकर्त्तव्यमित्यर्थः ॥

अमौनंचमौनंचनिर्विद्याथब्राह्मणः ॥

अमौनंमौनादन्यत्पूर्वंनिर्दिष्टबाल्यपांडित्यलक्षणंमौनंचारंबणसंशीलनात्मकमौनंचनिर्विद्याथब्राह्मणोब्रह्मविद्भवति । लब्धनिदिध्यासनोभवतीत्यर्थः ॥

सब्राह्मणःकेनस्याद्येनस्यात्तेनेदृशएव ॥

लब्धनिदिध्यासनोब्रह्मविदुक्तोपायादन्येनकेनस्यादितिप्रश्नः । उत्तरंयेनस्यात्तेनेदृशएवयेनमौनपर्यंतेनब्राह्मणः स्यादित्युक्तंतेनैवेदृशःस्यान्नकेनाप्यन्येनोपायेन ॥

अतोन्यदार्तम् ॥

अस्मात्परमात्मनः यदन्यत्प्राणिजातंतद्दुःखीत्यर्थः ।

ततोहकहोलः कौषीतकेयउपरराम ॥

स्पष्टोर्थः ।

---

लिंगभूयस्त्वात्तद्धिबलीयस्तदपि । ३ । ३ । ४३ ॥

तैत्तिरीयकेषष्ठप्रश्नेदशमानुवाके ॥

दह्रंविपाप्मंवरवेश्मभूतंयत्पुण्डरीकंपुरमध्यसंस्थम् । तत्रापिदह्रंगगनंविशोकस्तस्मिन्यदंतस्तदुपासितव्यम् ॥

अथयदिदमस्मिन्ब्रह्मपुरेदहरंपुंडरीकंवेश्मदहरोस्मिन्नंतराकाशस्तस्मिन्यदंतस्तदन्वेष्टव्यमितिच्छांदोग्योक्तरीत्योपास्यतयासन्निहितस्यपरस्यब्रह्मणः पुरभूतस्योपासकस्यशरीरस्यमध्येसंस्थितंदहरमल्पंविपाप्मंनिरस्तपापंपरमात्मनोवरवेश्मभूतंयद्धृदयपुण्डरीकंतत्रापियदल्पंविशोकोपलक्षितापहतपाप्मत्वादिगुणकंगगनंगगनवदपरिच्छेद्यंब्रह्मतस्मिन्नंतश्चयत्तदुभयमप्युपासितव्यमित्यर्थः । अत्रवक्तव्यंछांदोग्यप्रकाशिकायामुक्तंतत्रैवद्रष्टव्यम् । दहरविद्योपास्यदेवता-

विशेषः कइतिजिज्ञासायांनारायणस्यतदुपास्यत्वंप्रतिपादयितुंसकलपरविद्योपास्यत्वौपयिकंमहेश्वरत्वंनारायणस्यदर्शयति ॥

यद्वेदादौस्वरः प्रोक्तोवेदान्तेचप्रतिष्ठितः । तस्यप्रकृतिलीनस्ययः परः समहेश्वरः ॥

"ब्रह्मणः प्रणवंकुर्य्यादादावंतेच सर्वदा । स्रवत्यनोंकृतंब्रह्मपरस्ताच्चविशीर्यते" इतिमानवस्मरणात् । वेदाद्यंते प्रतिष्ठितस्वरः प्रणवः । तस्यप्रकृतिरकारः समस्तशब्दमूलत्वादकारस्य । तत्रलीनत्वंतद्रूपतामापन्नत्वमोंकारस्येतियावत् । तस्ययः परः प्रतिपाद्यः इदंपरस्तत्परइत्यादौपरशब्दस्यवाच्येप्रयोगदर्शनात् "अकारेणोच्यतेविष्णुः सर्वलोकेश्वरोहरिः" "अकारोविष्णुवाचकः"इतिश्रुतिस्मृतिभ्यामकारवाच्योविष्णुः सएवमहानीश्वरइत्यर्थः । ( दशमोनुवाकः ) पूर्वस्मिन्ननुवाकेदहरविद्योपास्योनारायणएवेत्युक्तम् । अधुनातुपरविद्याप्रकरणेषुशिवशंभुपरब्रह्मपरंज्योतिःपरतत्त्वपरमात्मादिशब्दनिर्दिष्टवस्तुनोनारायणत्वंप्रतिपाद्यते ॥

सहस्रशीर्षंदेवंविश्वाक्षंविश्वशंभुवम् । विश्वंनारायणंदेवमक्षरंपरमंप्रभुम् । विश्वतः परमंनित्यंविश्वंनारायणꣳहरिम् । विश्वमेवेदंपुरुषस्तद्विश्वमुपजीवति । पतिंविश्वस्यात्मेश्वरꣳशाश्वतंशिवमच्युतम् । नारायणंमहाज्ञेयंविश्वात्मानंपरायणम् । नारायणपरंब्रह्मतत्त्वंनारायणः परः । नारायणपरोज्योतिरात्मानारायणः परः । यच्चकिंचिज्जगत्यस्मिन्दृश्यतेश्रूयतेपिवा । अंतर्बहिश्चतत्सर्वंव्याप्यनारायणः स्थितः । अनंतमव्ययंकविꣳसमुद्रेंतंविश्वशंभुवम् ॥

लिङ्गभूयस्त्वा० । ३ । ३ । ४३ ॥ ऽधिकरणे भगवताभाष्यकृता नचसहस्रशीर्षमित्यादिद्वितीयानिर्देशेनपूर्वानुवाकोदितोपासिनासंबंधः शंकनीयः । तस्मिन्यदंतस्तदुपासितव्यमित्युपासिगतेनकृत्प्रत्ययेनोपास्यस्यकर्मणोभिहितत्वादुपास्येद्वितीयानुपपत्तेः । विश्वमेवेदंपुरुषस्तत्त्वंनारायणइत्यादिप्रथमानिर्देशाच्चप्रथमार्थेद्विती यावेदितव्या । अंतर्बहिश्चतत्सर्वंव्याप्यनारायणः स्थितः । नीवारशूकवत्तन्वीपीताभास्वत्यणूपमा । तस्याश्शिखायामध्येपरमात्माव्यवस्थितः । सब्रह्मा ( ह्म )सशिवःसहरिःसेंद्रःसोक्षरःपरमःस्वराडितिनिर्देशैः सर्वस्मात्परोनारायणएवसर्वत्रोपास्यइतिनिर्णीयमानत्वात्प्रथमार्थेद्वितीयेतिनिश्चीयतइतिभाषितम् । व्यासार्यैरपिद्वितीयांतपदस्वारस्यानुरोधेतुविद्यादुपासीतेतिविधिपदाध्याहारः । प्रथमांतपदस्वारस्यानुरोधेतुनाध्याहारः । सहस्रशीर्षमित्यादिद्वितीयायायेनावृतंखंचदिवंमहींचेतिवत् प्रथमाश्रयणमात्रमितिवर्णितम् । विश्वाक्षत्वं सर्वविषयकसाक्षात्कारवत्त्वम् । विश्वशंभुवत्वंसकलजगत्क्षेमकरत्वम् । ननुविश्वंनारायणमित्यभेदनिर्देशः कथमित्याशंक्योक्तं विश्वमेवेदंपुरुषस्तद्विश्वमुपजीवतीति । विश्वेनात्मतयोपजीव्यतयाविश्वत्वंनतुस्वरूपेणेत्यभिप्रायः । नारायणपरंब्रह्मेत्यत्रनारायणात्परंब्रह्मेतिनार्थः शङ्कनीयः । पूर्वापरविरोधात् । नारायणः परंब्रह्मेतिमहोपनिषदिस्फुटमावेदनात् । समुद्रेअंतः स्थानंयस्यसमुद्रेंतः । सप्तम्यास्तत्पुरुषेकृतिबहुलमित्यलुक् । अन्तःसमाप्तौस्थानेचनिर्णयेभ्यंतरेपिचेतिनैघण्टुकाः । इतरत्स्पष्टम् ॥ ननुसहस्रशीर्षमित्यादिद्वितीयायायेनावृतंखंचदिवंमहींचेतिवत् प्रथमाश्रयणेतस्मिन्यदंतस्तदुपासितव्यमितिप्रकृतदहरविद्योपास्यनिश्चायकत्वमेवयुक्तम् । पद्मकोशप्रतीकाशमित्यस्मिन्ननुवाकेदहरविद्याप्रत्यभिज्ञानात् प्रकृतहान्यनौचित्यादितिपूर्वपक्षेप्राप्ते ॥ उच्यते ॥ “लिंगभूय-

स्त्वात्तद्धि बलीयस्तदापि यद्यपि" दहरविद्याप्रकृतातदेकवाक्यत्वंचयुक्तम्। तथापिसकलपरविद्योपास्यनिर्द्धारणत्वेबहूनिलिंगान्युपलभ्यन्तेतत्तत्परविद्यावाक्यगतानि परब्रह्मपरतत्त्वादिपदरूपाणिचिह्नानीहवाक्येदृश्यन्ते । यदिप्रकृतविद्योपास्यदेवताविशेषसमर्पकमिदंवाक्यजातंस्यात् परब्रह्मपरतत्त्वादिप्रयोगोनारायणपदावृत्तिश्चनस्यात्। एकेननारायणपदेनैवसमीहितसिद्धेः, अतःपरब्रह्मादिपदवाच्यस्यनारायणत्वविधानायैवायंसंरंभः । शिवश्चनारायणःशक्रश्चनारायणःपरतत्त्वमपिनारायणइतिवाक्यभेदोपिनदोषाय । तच्चलिङ्गंप्रकरणाद्बलीयः।तदुक्तंपूर्वकाण्डे। "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवायेपारदौर्बल्यमर्थविप्रकर्षात्।"इतिनचसकलपरविद्योपास्यनिश्चायकत्वेपद्मकोशप्रतीकाशमितिदहरविद्योपास्यविशेषेणोपसंहारोनयुक्तइतिवाच्यम्। एतदात्म्यमिदंसर्वमितिसामान्येननिर्दिष्टस्यतत्त्वमसीतिविशेषउपसंहारवत्सकलपरविद्योपास्यतयाभिहितस्यनारायणस्यप्रकृतदहरविद्योपास्यतयोपसंहारेदोषाभावादितिस्थितम्॥

---

पूर्वविकल्पःप्रकरणात्स्यात्क्रियामानसवत् ।३।३।४४॥

वाजसनेयके अग्निरहस्ये ॥

ततषट्त्रिंशतंसहस्राण्यपश्यदात्मनोग्नीन्मनोमयान्मनश्चितः ॥

तन्मनएवषट्त्रिंशत्सहस्रादिनात्मकपुरुषायुषांतर्गतैकैकदिनप्रभवमानसवृत्तिसङ्घानग्नित्वदृष्ट्योपास्यमानान्मनाश्चितःआत्मनःसंबंधिनः अतएव अर्चनीयान्मनोमयान्मनोनिष्पाद्यानपश्यदित्यर्थः । कर्मण्यग्न्याख्यायामितिमनश्चीयतइत्यर्थेश्येनचिदादिशब्दवदसौ क्विबंतोनिष्पन्नः मनश्चितोनामाग्नीनित्यर्थः ॥

तेषुमनसैवाधीयन्तमनसाचीयन्तमनसैषुग्रहाअगृह्णंतमनसास्तुवन्मनसाशंसन् ॥

एषुमनश्चिदाद्यग्निषुउपयुक्तान्याधानचयनग्रहणस्तोत्रशस्त्राण्यपिमनोनिष्पाद्यान्येवेत्यर्थः । नचसर्वेषांमनोव्यापाराणामग्नित्वदृष्ट्याक्रोडीकृतत्वादाधानचयनग्रहणस्तोत्रशस्त्रादिदृष्टिविषयोव्यापारोनास्तीतिशंक्यम् । केषांचिद्व्यापाराणामग्नित्वदृष्ट्याक्रोडीकारस्यकेषांचित्तदुपयोग्याधानचयनस्तोत्रादिव्यापारत्वेनक्रोडीकारत्वसंभवान्नानुपपत्तिः ॥

यत्किंचयज्ञेकर्मक्रियतेयत्किंचयज्ञियंकर्ममनसैव ॥

तेषुमनोमयेषुमनश्चित्सुमनसैवमनोमयमक्रियतेत्यर्थः ॥

तद्यत्किंचेमानिभूतानिमनसासंकल्पयन्तितेषामेवसाकृतिः ॥

तत्तस्माल्लोकेसर्वैर्भूतैःक्रियमाणामनोव्यापारास्सर्वेप्येतन्निष्पाद्यमानानांविद्यामयानांमनश्चितांनिष्पादकव्यापाराइत्यर्थः । मनोव्यापारत्वावच्छिन्नेषुसर्वेषुक्रियमाणायाअग्नित्वदृष्टेःसकलमनोव्यापाराश्रिततयासर्वेषांमनोव्यापाराणांस्वाध्यस्ताग्निनिष्पादकत्वादितिभावः । तदेतदाह ॥

तान्येवाददतितांश्चिन्वन्तितेषुग्रहान्गृह्णन्तितेषुस्तुवतेतेषुशंसन्ति ॥

सर्वाणिभूतानि विदुषासंपाद्येषुमनश्चित्स्वग्निषूपयुक्तान्याधानचयनस्तोत्रशस्त्राणिनिष्पादयन्तीत्यर्थः ॥

एतावतीवैमनसोविभूतिरेतावतीसृष्टिरेतावन्मनोमनसएतेग्नयः ॥

तदधीनास्तत्कार्यभूताः । एतादृशमाहात्म्यशालिमनइत्यर्थः ॥

षट्त्रिंशत्सहस्राणिह्यग्नयोऽर्कास्तेषामेकैकएवता-वान्यावानसौपूर्वः ॥

षट्त्रिंशत्सहस्रसंख्याकानामर्चनीयानामग्नीनामेषांमध्येएकैकोऽप्यग्निः पूर्वोक्तेष्टकचिताग्निसदृशइत्यर्थः । इष्टकचितस्याग्नेःस्वांगीभूतक्रतुद्वारेणयत्फलंतदेवमनश्चिदादीनामपिविद्यामयक्रतुद्वारेणफलमित्यर्थः।एवमुत्तरत्रापि।वाक्चितो वागिंद्रियव्यापाराः। कर्मचितःवागिंद्रियातिरिक्तकर्मेंद्रियव्यापाराः । अग्निचितोजठराग्निव्यापाराः ॥

तेहैतेविद्याचितएव ॥

तएतेमनश्चिदादयःसर्वेपिविद्याचितःविद्यार्थाश्चितइत्यर्थः । नतु मनश्चिदादीनामेवविद्यारूपचित्त्वं बोध्यते । तस्यसिद्धत्वेनविद्याचितएवेत्यवधारणवैयर्थ्यप्रसंगात् । अतोविद्याचितएवेत्यस्यविद्यामयमानसग्रहादेः क्रियामयद्वादशाहादिक्रत्वर्थत्ववद्विद्यामयस्यमनश्चिदादेः प्रसक्तस्याक्रियामयक्रत्वर्थत्वस्यप्रतिषेधार्थत्वमेव ॥

तान्हैतानेवंविदेसर्वदासर्वाणिभूतानिविचिन्वन्त्यपिस्वपते ॥

एवंविदेविद्यामयक्रतुमतेजाग्रतेस्वपतेचसर्वदातानेतानग्नीन्विचिन्वंतीत्यर्थः । सार्वकालिकसर्वभूतकर्तृकमनोव्यापाराः अग्नित्वदृष्टिविशिष्टविद्यावत्पुरुषशेषभूताश्चयनरूपाएवासन्नित्यर्थः । अत्रसर्वभूतकर्तृकसर्वकालव्यापिमनोव्यापाररूपाग्नेः परिमितकालकर्तृकक्रियामयक्रत्वनुप्रवेशासामर्थ्यान्मनश्चिद्रूपोग्निर्मानसग्रहवन्नक्रियामयक्रत्वनुप्रवेशी । अपितुविद्यामयक्रत्वनुप्रवेशीतिद्रष्टव्यम् । तेहैतेविद्याचितएवेत्येतद्वाक्यंविवृणोति ॥

विद्ययाहैवैतएवंविदश्चिताभवंति ॥

एवंविदः पुरुषस्यविद्ययाविद्यामयेनक्रतुनासंबद्धामनश्चिदादयः

चिताभवंतीत्यर्थ इतिभगवताभाष्यकृतोक्तम् । अत्रविद्ययेतिप्रयोजनतयाहेतौ । विद्यार्थंचिताइत्यर्थ इतिव्यासार्यैर्व्याख्यातंच । अत्र विद्ययाहैवैतइतिवाक्यस्यतेहैते विद्याचितएवेतिवाक्यविवरणरूपत्वस्यभाष्यएवाविष्कृतत्वाद्विद्याचितएवेत्यस्यापिविद्यार्था इतिपूर्वोक्तएवार्थइति ॥ इत्यग्निरहस्यप्रकाशिकायांप्रथमंब्राह्मणम् ॥

अग्निलोकंपृणाविषयाण्युपासनान्युपदिश्यन्ते ॥

अयंवावलोकएषोग्निश्चितः ॥

अस्मिँल्लोकेचित्याग्निदृष्टिः कर्तव्या ॥

तस्यापएवपरिश्रिताः ॥

समुद्रजलेअश्मन्नूर्जमितिपरिषिंचतीतिविहिताग्निपरिषेचनबुद्धिः कर्तव्या ॥

मनुष्यायजुष्मत्यइष्टकाः ॥

मनुष्येषुयजुर्मंत्रोपधेयेष्टकाबुद्धिः कार्या ॥

पशवः सूददोहाः ॥

पशुषुसूददोहमंत्रोपधेयेष्टकाबुद्धिः कार्या ॥

ओषधयश्चवनस्पतयश्चपुरीषम् ॥

ओषधिवनस्पतिष्विष्टकासन्धिच्छादनार्थगोमयबुद्धिः कार्या ॥

आहुतयः समिधः ॥

स्पष्टोर्थः ॥

अग्निर्लोकंपृणा ॥

भूततृतीयाग्नौलोकंपृणछिद्रंपृणेतिमंत्रोपधेयशर्करावुद्धिः कार्या । पृणप्रीणनइत्यस्मात्तौदादिकाल्लोकंपृणतीत्यर्थेमूलविभुजादित्वात्कप्रत्ययेलोकस्यपृणेमुम्वक्तव्यइतिमुमागमेस्त्रीत्वाट्टापिलोकंपृणेतिरूपसिद्धिः ॥

सयोहैतदेवंवेदलोकंपृणाम् ॥

एवमग्नौलोकंपृणादृष्टिंयः करोति ॥

एनंभूतमेतत्सर्वमभिसंपद्यते ॥

एनंविद्वांसंसर्वाणिभूतान्याश्रयंतीत्यर्थः ॥

तद्वाएतत्सर्वमग्निमेवाभिसंपद्यतेसयोहैतदेवंवेदलो-
कंपृणाम् ॥

एवमुक्तप्रकारेणैतदग्निमेतमग्निम् । लिंगव्यत्ययच्छांदसः । लोकं
पृणांयोवेद ।

एनंभूतमेतत्सर्वमभिसंपद्यते ॥

एनंविद्वांसमेतत्सर्वमभिसंपद्यते । शेषभूततयाऽऽश्रयतीत्यर्थः ॥

---

समाहारात् । ३ । ३ । ६१ ॥

छान्दोग्येप्रथमप्रपाठकेपंचमखण्डे ॥

अथखलुयउद्गीथः सप्रणवो यः प्रणवः सउद्गीथ-
इतिहोतृषदनाद्धैवापिदुरुद्गीथमनुसमाहरति ॥

अपिदुरुद्गीथंवेदनहीनमप्युद्गीथमित्यर्थः । होतृषदनात्होतृकर्तृ-
कोद्गीथप्रणवैक्यज्ञानादित्यर्थः । होतृषदनेत्यत्रपूर्वपदादितिषत्वम् ।
अयंभावः । उद्गीथप्रणवैकत्वविज्ञानंहोत्रापिकर्त्तव्यमुद्गात्रापिकर्तव्यं-
प्रणवेहोतुरुद्गीथउद्गातुश्चकर्तृत्वात् । तत्रोद्गातुरेतादृशैकत्वविज्ञाना-
भावेनदोषयुक्तमप्युद्गात्राप्रयुज्यमानमुद्गीथंहोतास्वीयोद्गीथप्रणवैक-
त्वविज्ञानमाहात्म्यादनुसमाहरतिसमादधात्यदुष्टंकरोतीत्यर्थः ॥

विशेषानुग्रहश्च । ३ । ४ । ३८ ॥

प्रश्नोपनिषदिप्रथमप्रश्ने ॥

अथोत्तरेणतपसाब्रह्मचर्येणश्रद्धयाविद्ययात्मानमन्वीक्ष्यादित्यमभिजयंते ॥

अथशब्दोवाक्यांतरोपक्रमे । येतावत्किंप्रजयाकरिष्यामइतिविरक्ताऋषयः तेकायक्लेशादिलक्षणेनतपसास्त्रीसंगराहित्यलक्षणेनब्रह्मचर्येणास्तिक्यबुद्धिलक्षणयाश्रद्धयाविद्ययाप्रत्यगात्मविद्ययापरमात्मानमुपास्यार्चिरादिनोत्तरेणायनेनादित्याच्चंद्रमसंचंद्रमसोविद्युतंतत्पुरुषोऽमानवःसएतान्ब्रह्मगमयतीत्युक्तप्रकारेणब्रह्मप्राप्तिद्वारभूतमादित्यमभिजयंतेप्राप्नुवंतीत्यर्थः ॥

आवृत्तिरसकृदुपदेशात् ४ । १ । १ ॥

मुण्डकोपनिषदितृतीयमुण्डकेप्रथमखण्डे ॥

ज्ञानप्रसादेनविशुद्धसत्त्वस्ततस्तुतंपश्यतेनिष्कलंध्यायमानः ॥

ज्ञानहेतुभूतपरमात्मप्रसादेनविशुद्धांतःकरणः सन्निरवयवंपरमात्मानंध्यायमानो ध्यायन्ध्यानेनदर्शनसमानाकारज्ञानविशेषेणपरमात्मानंसाक्षात्करोतीत्यर्थः । कठवल्लीमंत्रोयम्॥ इत्यावृत्त्यधिकरणम्॥

अचलत्वंचापेक्ष्य ४ । १ । ९ ॥

[छा]न्दोग्येसप्तमाध्यायेषष्ठखंडेभूमविद्यायाम् ॥

[ध्या]नंवावचित्ताद्भूयः ध्यायतीवपृथिवीध्यायतीवां-[त]॥

[ध्यान]श्रैष्ठ्यादेवध्यातारंपृथिव्यादयोप्यनुकुर्वंति।तस्माद्ध्यानं-

यत्रैकाग्रतातत्राविशेषात् । ४ । १ । ११ ॥

श्वेताश्वतरोपनिषदि ॥

समेशुचौशर्करावह्निवालुकाविवर्जितेशब्दजलाशयादिभिः । मनोनुकूलेनतुचक्षुःपीडनेगुहानिवाताश्रयणेप्रयोजयेत् ॥

निम्नोन्नतत्वादिरहितेपरिशुद्धे क्षुद्रपाषाणवह्निवालुकारहिते वाद्यध्वनिजलाशयाद्यत्यंतसामीप्यरहिते मनोनुकूलेचक्षुःपीडनादिहेत्वौष्ण्यादिरहिते गुहादिलक्षणनिवातदेशाश्रयणेन योगमनुतिष्ठेदित्यर्थः ॥ इत्यासीनाधिकरणम् ॥ ८ ॥

---

अतएवचसर्वाण्यनु । ४ । २ । २ ॥ तस्मादुपशांततेजाः पुनर्भवमिंद्रियैर्मनसिसंपद्यमानैर्यच्चित्तस्तेनैषप्राणमायाति ॥

इदंचप्रश्नोपनिषद्गतम् । अस्यचायमर्थः । अपगतदेहौष्ण्यः सन्पुनर्जन्मप्राप्तुंमनसिसंपद्यमानैरिंद्रियैः सहितंप्राणमीदृश्यामनोवासनयासहितएवसन्नागच्छतीत्यर्थः ॥ इतिवागधिकरणम् ॥ १ ॥

---

सोध्यक्षेतदुपगमादिभ्यः । ४ । २ । ४ ॥

प्रश्नोपनिषदिषष्ठप्रश्ने ॥

सईक्षांचक्रेकस्मिन्नहमुत्क्रांतेउत्क्रान्तोभविष्यामिकस्मिन्वाप्रतिष्ठितेप्रतिष्ठास्यामीतिप्राणमसृजतेति ॥

मदुत्क्रांतिप्रतिष्ठासहभूतोत्क्रांतिप्रतिष्ठः कोवास्यादितिविचिंत्यप्राणंजीवोसृजदित्यर्थः । अत्रजीवस्यप्राणस्रष्टृत्वमदृष्टद्वाराद्रष्टव्यम् ॥

अतश्चायनेपिदक्षिणे । ४ । २ । १९ ॥

तेषांयदातत्पर्यवैत्यथेममेवाकाशमभिनिष्पद्यंते ॥

इतिबृहदारण्यकपंचाग्निविद्यागतंवचनम् । तेषांकर्मिणांयदाकर्म्मपर्यवैतिपरिक्षीणंभवति ॥

तेचंद्रंप्राप्यान्नंभवंतितांस्तत्रदेवायथासोमंराजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्रभक्षयंति ॥

तदाततश्च्युता द्रवीभूता आकाशसादृश्यंप्राप्नुवंतीत्यर्थः ॥

इति दक्षिणायनाधिकरणम् ॥ ११ ॥

---

अर्चिरादिनातत्प्रथितेः । ४ । ३ । १ ॥

सवायुमागच्छतितस्मैसतत्रविजिहीतेयथारथचक्रस्यखंतेनसऊर्ध्वमाक्रमते सआदित्यमागच्छतितस्मैसतत्रविजिहीतेयथाडंबरस्यखमिति ॥

बृहदारण्यकगतम् । रथचक्ररंध्रंयादृग्भवति तथाप्राप्तायब्रह्मविदे सवायुर्विजिहीतेमार्गप्रदे ( वे ) शादवयवान्निस्सारयति । डंबरशब्दो वाद्यविशेषवाची ॥ इत्यर्चिराद्यधिकरणम् ॥ १ ॥

---

कार्यात्ययेसहाध्यक्षेणातः परमभिधानात् । ४ । ३ । ९ ॥ परामृतात्परिमुच्यंति सर्वे ॥

परामृतं परमात्मानं प्राप्येतिल्यब्लोपेपंचमी ॥

इति कार्याधिकरणम् ॥ ५ ॥

---

जगद्व्यापारवर्ज्जंप्रकरणादसन्निहितत्त्वाच्च ।४।४।१७॥

बृहदारण्यके तृतीयाध्यायेचतुर्थब्राह्मणे ॥

ब्रह्मवाइदमग्रआसीदेकमेवतदेकꣳसन्नव्यभवतत-च्छ्रेयोरूपमत्यसृजतक्षत्रम् ॥

एकत्वादेवविवृद्धंनाभवत् । तच्छ्रेयोरूपमत्यसृजत् ॥

तच्छ्रेष्ठं शरीरमत्यसृजतक्षत्रम् ॥

क्षत्रियाख्यंश्रेष्ठंशरीरमसृजत् ॥ तदेवप्रपंचयति ॥

"यान्येतानिदेवत्राक्षत्राणींद्रोवरुणः" ॥ इत्यादि ॥

देवत्रादेवेषु । स्पष्टमन्यत् ॥ इतिजगद्व्यापारवर्जाधिकरणम् ॥

क्षेमाय यःकरुणया क्षितिनिर्ज्जराणांभूमावजृंभयत भाष्यसुधा-मुदारः । वामागमाध्वगवदावदतूलवातोरामानुजः समुनिराद्रियतां-मदुक्तिम् ॥

इतिश्रीरंगरामानुजमुनेःकृतिषुश्रीभाष्योदाहृतोपनिषद्वाक्यविवरणं-समाप्तम् । शुभंभूयात् ॥

---

१ नन्वत्राट्कुप्वाङितिणत्वंप्राप्नोतीतिचेन्मैवम् । रामनामेत्यादौणत्ववारणायनिमित्तान-धिकरणनिमित्तिमत्पदाघटितत्वरूपार्थकेनरषाभ्यामित्यत्रकृतेनसमानग्रहणेनवारणात् नन्वे-वमपिनारायणरामायणादाविवपूर्वपदादितिप्राप्नोतीतिचेन्न । "रामानुजंलक्ष्मणपूर्वजंच" इत्यादिप्रयोगैरस्यसंज्ञात्वावगमेनरघुनाथादाविवसंज्ञाभंगभियातत्सूत्रप्राप्त्यभावात् ॥ इतिश्रीलक्ष्मणाचार्यकरुणालब्धबुद्धिना ॥ क्वचिल्लक्ष्मणदासेनटिप्पण्यत्रनिवेशिता ॥

पुस्तक मिलनेका पता–
खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" छापाखाना–मुंबई.

# विदुषामभ्यर्थना ।

अत्रास्माकं मुद्रणालय ऋग्वेदादयो वेदा उपनिषदो वेदान्तग्रन्था महाभारतादीतिहासाःश्रीमद्भागवतादिमहापुराणोपपुराणानि धर्मशास्त्र–कर्मकाण्ड–व्याकरण–न्याय–योग–सांख्य–मीमांसादिशास्त्रीयग्रन्थाः काव्य–नाटक–चम्पू–प्रह-सन–व्यायोग सट्टकाख्यायिकादिग्रन्थाः सहस्र-नामाद्यनेकस्तोत्रग्रन्थाश्च विविधभाषाग्रन्था-श्च सीसकोत्तममहल्लघ्वक्षरैर्मनोहरं मुद्रि-तास्ते योग्यमूल्येन क्रय्याःसन्ति । तांश्च ग्राहका यथापुस्तकसूची-पत्रं मूल्यप्रेषणेन प्राप्नुयुः ।




## वेदान्तग्रंथाः ।

| नाम. | की. रु. आ. |
|---|---|
| शारीरक ( शांकरभाष्य ) रत्नप्रभाटीका व्यासाधिकरण-माला और भक्तिसूत्र सभाष्य अक्षरवडा ... ... | १०–० |
| ब्रह्मसूत्र ( शारीरक ) भाषाटीका ... ... ... | १–८ |
| वेदांतसार संस्कृतमूल और संस्कृतटीका तथा भाषाटी-कासहित ... ... ... ... ... ... | ०–१२ |
| पंचदशीसटीक ... ... ... ... ... ... | २–८ |
| पंचदशी पं० मिहिरचंद्रकृत अत्युत्तम भाषाटीका सहित | ४–० |
| पंचदशी भाषा–आत्मस्वरूजीकृत ... ... ... | ४–० |

पुस्तकोंके मिलनेका पता-

**खेमराज श्रीकृष्णदास,**

"श्रीवेङ्कटेश्वर" छापाखाना–